| | | |
|---|---|---|
| ब्रजमोहन शर्म्मा जोशी, | पं० लक्ष्मीनारायण वैद्यराजः | श्रीसरस्वती औषधालय खेतरी जैपुर । |
| मुरलीधर शर्म्मा जोशी, | ” ” | ” ” |
| रघुबीरदत्त शास्त्री, | श्यामलालजी आयुर्वेदाचार्यः | सेठनिर्भयरामजी वैद्यकसं० पाठशाला । |
| रामनाथ शर्म्मा भटराय, | कविराज दीनानाथ आयुर्वेदविज्ञानाचार्यः | गंगादेवी पाठशाला, बनारस । |
| महेशचन्द्रनातुरी प्रसाद शर्म्मा । | पं० लक्ष्मीनारायणजी वैद्यराजः | श्रीसरस्वती औषधालय खेतरी जैपुर । |
| शम्भुनाथ त्रिवेदी | | शम्भु औषधालय, गोरखपुर |
| सरस्वती देवी वैद्य विशारदा | | ( जबलपुर ) |
| रामस्वरूप मिश्रः | | |

## वैद्यभूषणपरीक्षायाम् प्रथमविभागे ।

| | | |
|---|---|---|
| मोतीराम शर्म्मा, | पं० रामरत्नशर्म्मा आयुर्वेदाचार्यः | सनातनधर्म आयुर्वेद विद्यालय अमृतसर । |

## द्वितीयविभागे ।

| | | |
|---|---|---|
| कालीचरण त्रिपाठी | | शम्भु औषधालय, गोरख जबलपुर |
| ब्रजमोहन शर्म्मा, | श्री ज्योतिश्चन्द्र भट्टाचार्य कविरत्न वैद्यवाचस्पतिः | कवीन्द्रऔषधालय बनारस । |
| हरिनारायण चतुर्वेदी, | पं० यतीन्द्रनाथ कविराज काव्यतीर्थः | सम्मिलनी विद्यालय काशी । |
| गिरधारीलाल शर्म्मा, | पं० लक्ष्मीनारायण आयुर्वेदाचार्यः | श्री सरस्वतीभवन जयपुर खेतरी । |
| ऋद्धिकरण शर्म्मा, | पं० शान्तजीशर्म्मा आयुर्वेदाचार्यः | लक्ष्मीनारायण औषधालय चुरु । |
| जयराम जैनः | पं० जयचन्दजी जैनन्यायतीर्थ आयुर्वेदाचार्य्यः | ऋगवेद विद्यालय कानपुर । |
| कमलकुवर जैन पञ्चरत्न । | ” ” | ” ” |
| सन्तलालपथिकः | पं० रामस्वरूप शास्त्री अवहरमण्डी फिरोजपुर | सनातनधर्म्म संस्कृत विद्यालय । |

| छात्रनामानि | अध्यापकनामानि | स्थानम् |
|---|---|---|
| | **मध्यमायाः प्रथमविभागे** | |
| अश्विनीकुमार, | पं० गणेशचन्द्र चौधुरी कविभूषण | तिलुडीशिक्षाश्रम बांकुरा |
| विनोदबिहारीलाल, | " | " |
| भुवनमोहन गुप्त, | " | " |
| सुधीर कुमार राय, | " | " |
| करुणामय सरकार, | " | " |
| आशाराम शर्म्मा, | पं० शान्तशर्म्मा आयुर्वेदाचार्यः | श्री लक्ष्मीनारायण आयुर्वेदभवन जैपुर । |
| काशीनाथ पाण्डेयः | पं० लालचन्द्र वैद्यशास्त्री | आयुर्वेद विद्याप्रबोधनी पाठशाला, बनारस । |
| पङ्कजाख्यवनर्जी, | पं० यतीन्द्रनाथ काव्यतीर्थः | सम्मिलनी विद्यालय दशाश्वमेध, बनारस । |
| गोविन्दराम पोखरियालः | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः | कवीन्द्र विद्यालय दशाश्वमेध, बनारस । |
| रामेश्वर प्रसाद शर्मा, | पं० लालचन्द्र वैद्यशास्त्री | विद्या प्रबोधिनी आयुर्वेद विद्यालय, बनारस । |
| वृद्धिचन्द्र शर्मा, | पं० शान्त शर्म्मा आयुर्वेदाचार्य | श्रीलक्ष्मीनारायण आयुर्वेदभवन जयपुर । |
| रामदास राय, | पं० गणेशचन्द्र चौधुरी कविभूषणम् | तिलुड़ी शिक्षा विभाग, बांकुरा । |
| प्रभुदत्त शर्म्मा' | पं० लक्ष्मीनारायण राजवैद्यः | सरस्वती औषधालय चिरवा जयपुर । |
| मोहनलाल शर्म्मा । | पं० काली किशोर विद्याबिनोदः | आयुर्वेद विद्याप्रबोधिनीपाठशाला बनारस । |
| | **द्वितीयविभागे ।** | |
| कृपालुदत्त पांडेयः | श्री ज्योतिश्चन्द्रभट्टाचार्य वैद्यवाचस्पतिः | कवीन्द्रविद्यालय, दशाश्वमेध बनारस । |
| विश्वेश्वरनाथ, | " " | " " |
| व्रजशीतलप्रकाश शर्म्मा, | " " | " " |

| | | |
|---|---|---|
| वैद्यनाथ शर्म्मा, | पं० जगन्नाथ शर्म्मा शास्त्री | जगदीशमन्दिरपाठशाला, जयपुर । |
| तारादत्त शर्म्मा, | पं० गोविन्दरामशर्मा | टिहरी गढ़वाल स्टेट |
| रामनरेश शर्म्मा, | पं० यतीन्द्रनाथकाव्यतीर्थः | सम्मिलनीविद्यालय, बनारस । |
| काशीप्रसाद त्रिपाठी, | पं० लालचन्द्र वैद्यशास्त्री | आयुर्वेद विद्याप्रबोधिनी पाठशाला, बनारस । |
| श्रीनाथचन्द्रपाल चौधुरी, | देवेन्द्रनाथ कविराजः | भवानी औषधालय, बनारस । |
| राखीरामनेगी वर्म्मा । | पं० गोविन्दराम शर्म्मा | टिहरी गढ़वाल स्टेट । |

## तृतीयविभागे ।

| | | |
|---|---|---|
| श्रीराम शर्म्मा । | पं० गोविन्दराम शर्म्मा | टिहरी गढ़वाल स्टेट |
| फतेरामपन्तः | पं० यतीन्द्रनाथ काव्यतीर्थः | आयुर्वेदसम्मेलनी विद्यालय दशाश्वमेध बनारस |
| रामदासरायः | पं० गणेशचन्द्र चौधुरी कविभूषणम् | तिलूरी शिक्षाविभाग बांकुरा |
| श्रीनन्दकिशोर विशारदः । | पं० रामप्रसाद शास्त्री | सेठबढ़सिया संस्कृतपाठशाला खेतरी । |

## प्रथमपरीक्षायां ( प्रथमविभागे )

| | | |
|---|---|---|
| स्वामी निश्चलानन्दः | पं० गिरधर शर्म्मा आयुर्वेदाचार्यः | आनन्द चौक देहरादून |
| रामदेव शर्म्मा | पं० रामरत्न शर्म्मा ,, | सनातनधर्म आयुर्वेद विद्यालय अमृतसर |
| रसराज शर्म्मा | ,, ,, | ,, ,, |
| ज्योतिराम शर्म्मा | ,, ,, | ,, ,, |
| श्यामापदसेनपाण्डेय | पं० गणेशचन्द्र चौधुरी कविभूषणम् | तिलूरी शिक्षाश्रम बंकुरा |

| | | |
|---|---|---|
| छेदीलाल शर्म्मा । | पं० रामचन्द्रजोशी वैद्यशास्त्री | श्रीरामरसायन पाठशाला वेलनगंज आगरा । |
| सुबोधचन्द्ररायगुप्तः । | पं० गनेशचन्द्र चौधरी कविभूषणम् | तिलूरीशिक्षाश्रम बांकुरा । |
| भूधरी विजय चन्द्ः । | पं० शान्तशर्म्माजी आयुर्वेदाचार्यः | लक्ष्मीनारायण औषधालय चूरू । |

## द्वितीयविभागे ।

| | | |
|---|---|---|
| हरिश्चन्द्र शर्म्मा, | श्रीरामरत्नशर्म्मा आयुर्वेदाचार्यः | सनातनधर्म आयुर्वेद विद्यालय अमृतसर । |
| जगदीशप्रसाद शर्म्मा, | ” ” | ” ” |
| रोहनसिंह, | पं० ठा० केकसिंह वैद्यभूषण | ” ” |
| विश्वनाथमिश्रः, | पं० लालचन्द्र आयुर्वेदशास्त्री | आयुर्वेद विद्याप्रबोधिनी पाठशाला बनारस । |
| अमरनाथ शर्म्मा, | पं० रामचन्द्रजोशी वैद्यशास्त्री | श्रीरामरसायन पाठशाला वेलनगंज आगरा । |
| श्रीमतीप्रेमावती देवी, | ” ” | ” ” |
| श्रीमती छायादेवी | पं० द्विजेन्द्रनाथसेन कविरत्न बी० एस० सी० | पालम फरीदपुर । |
| सिद्धनाथ शर्म्मा, | रामचन्द्रजोशी वैद्यशास्त्री | श्रीरामरसायन पाठशाला वेलनगंज आगरा । |
| श्यामलाल शर्म्मा, | ” ” | ” ” |

## तृतीयविभागे ।

| | | |
|---|---|---|
| सुरेशानन्द शर्म्मा पन्तः | श्री ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः | कवीन्द्रविद्यालय दशाश्वमेध बनारस |
| मुरलीधर सुकुलः | ” ” | ” ” |
| मथुराप्रसादपाण्डेयः | ” ” | ” ” |

| | | |
|---|---|---|
| बोरीपदरायः | गणेशचन्द्र चौधरी आयुर्वेदाचार्यः | तिलूरी शिक्षाविभाग बंकुरा |
| श्यामलालशर्म्मा | पं० रामचन्द्र जोशी वैद्यशास्त्री | श्री राम रसायन पाठशाला वेलनगंज आगरा |
| गंगाप्रसाद शर्म्मा | " " | " " |
| भोलानाथ साधुः | पं० द्विजेन्द्रनाथ सेन कविरत्न वि० एस० सी० | पालम फरीदपुर |
| पीताम्बर दत्त नटियालः | मं वासुदेव शर्म्मा | अद्वैताश्रम औषधालय । |
| शरतचन्द्र गुप्त, | पंe गनेशचन्द्र चौधरी आयुर्वेदाचार्यः | तिलूरी शिक्षाश्रम बांकुरा |
| शिवदयाल शुक्लः, | पं० लक्ष्मीशंकर शर्म्मा आयुर्वेदाचार्यः | भारती रसायनशाला बनारस । |
| ताराचन्द्र शर्म्मा, | पं० गिरधर शर्म्मा आयुर्वेदाचार्यः | लक्ष्मण संस्कृत विद्यालय बनारस । |
| वाचस्पति जुगनारा, | पं० वासुदेव शर्म्मा | अद्वैतामृत औषधालय |
| इन्द्रनारायण चौधरी, | पं० गणेशचन्द्र चौधरी आयुर्वेदाचार्य्यः | विलूरी शिक्षाविभाग बांकुरा । |
| जगन्नाथ शर्म्मा, | रामरत्न शर्म्मा आयुर्वेदाचार्य | सनातनधर्म आयुर्वेद विद्यालय अमृतसर। |

[ आयुर्वेदाचार्य कविराज पं० ज्योतिश्चन्द्र भट्टाचार्यः सम्पादकः अ० भा० सं० विश्वविद्यालयान्तर्गतायुर्वेद सम्मिलनी, काशी ।

# वेदपुराणयोरेकवाक्यता

( अश्लीलतानिरासः )

( १ )

निबन्धा—श्रीदीनानाथ शर्म्मा सारस्वतः शास्त्री ।
( 'मुलतानस्थ—स० ध० कालेजाऽध्यापकः )

* मंगलम् *

'नि षुसीद गणपते ! गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत् क्रियते किञ्चनाऽऽरे महामर्कं मघवञ्चित्रमर्च ।'
—ऋ० १०।११२।६

'इयं या परमेष्ठिनी वाग्देवी ब्रह्म-संशिता ।
ययैव ससृजे घोरं तयैव शान्तिरस्तु नः, । अथ० १६।६।३

'देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु'
—ऋ० ८।१०० ( ८६ ) ।११

त्वं नः पश्चादधरादुत्तरात् पुर इन्द्र ! निपाहि विश्वतः ।
आरे अस्मत् कृणुहि दैव्यं भयमारे हेतीरदेवीः ।
ऋ० ८।६१ (५०) ।१६

'यत इन्द्र ! भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि' । ऋ० ८।६१।१३

———

## भूमिका

'यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्तयत् ।
एकं तदंगं स्कम्भस्य पुराणमनु संविदुः' । अथर्व० १०।७।२६

'तमितिहासश्च पुराणञ्च गाथाश्च नाराशंसीश्चाऽनुव्यचलन्
—अथ० १५।६।११

अर्व्वाचीनमतानुयायिनः केचन, विशेषत आर्य्यसामाजिका मूर्त्तिपूजाऽव-

तारजन्मसिद्धवर्णव्यवस्था-श्राद्धप्रभृतिसनातनधर्म्मसिद्धान्तानां प्रत्यादेशे यदा बहुप्रयतनेनाऽपि साफल्यन्न प्राप्नुवन्; यदा च मूर्त्तिपूजाखण्डनस्थाने तैरपि स्वा० दयानन्दादिचित्राणि सत्कृत्य, पुष्पस्थाऽस्थिन चेतः≍प्रणिधाय, नृपादींश्च नमस्कृत्य, × निराकारपरमात्मने च पानार्थं सोमरसं समर्प्य, चन्द्रमसे चाऽर्घ्यं प्रदाय, भारतमात्रादिश्च स्वेष्टदेवतां विधाय, राष्ट्रियपताकाश्चाऽभ्युत्थानपूर्व्वक-मभिवाद्य, 'हरिजन' व्यपदेश्यांँश्च देवमूर्त्तिदर्शनार्थमुत्साह्य स्वयमपि प्रकार-विशेषेण मूर्त्तिपूजाऽऽद्रियत; यदा चाऽवतारखण्डनस्थाने त एव 'दयानन्द' 'गान्धि' प्रमुखानवतारिपुरुषानमन्यन्त; यदा गुणकर्म्महीना अपि तदीयब्राह्मणोपदेशका ब्राह्मणाः, विद्वांसोऽपि क्षत्रियादिकाश्च क्षत्रियादय एवाऽतिष्ठन्; यदा च स्वा० दयानन्दादिस्वमतप्रवर्त्तकानां श्राद्धस्वरूपे तन्नाम्ना विद्यालयाऽनाथालयादीनु-द्घाट्य अन्येभ्यो विद्यादानमन्नादिदानञ्च वितरन्तः, 'परं मृत्यो' इत्यादिभिश्च मन्त्रैः क्षीरद्वारा दयानन्दनिर्व्वाणाऽऽहुतीर्ददतश्च, श्राद्धखण्डनं फल्गु+निरचैषुः; यदाचैतद्विषयकशास्त्राऽर्थेषु सनातनधर्म्मोपदेशकेभ्यस्ते स्थाने स्थाने पराजिता जाताः तदाऽद्यत्वे पुराणं * सनातनं वा धर्म्मम् आक्रमितुं ते पुराणानाम् अश्लीलशीलताम्, अवैदिकताम्, असम्भवताञ्च साधयितुमकाण्डताण्डवं वितन्वन्ति; एतद्विषय एव च शास्त्राऽर्थान् कर्त्तुं सन्नद्धा जायन्ते; एवङ्कृत्वा स्वकीयामवैदिकताम् (वेदाऽदर्शनम्) आग्रहग्रहिलताञ्च (वेदे सतामपि पौराणि-

---

× १९१५ ईशवीये कांङ्डीगुरुकुले वेदपुस्तकानि सभापतित्वं नीतानि, इयं स्पष्टं मूर्त्तिपूजा ।

+ 'फल्गु' इति खण्डन-विशेषणं द्वितीयान्तम्, अमो लुक् ।

* अस्मदीयधर्मस्य 'सनातनधर्मः' 'पुराणधर्म' इति वा नाम; तथा च वेदे-'सनातनमेनमाहुः' अ० १०।८।२३ 'यो देवमुत्तरावन्तमुपासातै सनातनम्' अ० १०।८।२२ 'धर्म्मं पुराणमनुपालयन्ता' अ० १८।३।१ 'अयं पन्था अनुवित्तः पुराणो—' ऋ० ४।१८।१ 'प्रत्नमिन्द्र ! हवामहे' अ० २०।२४।९ अत्रेन्द्रपरमात्मनो विशेषणं सनातनः, प्रत्नः पुराण इति; तत्प्रचालितधर्म्मस्याऽप्यत एव 'सनातन' 'पुराण' इत्यादि नाम । 'मा नः पथः पित्र्यान्मानवादधिदूरं नैष्ट' ऋ० ८।३०।३ हे देवाः ! अस्मान् पितृपरम्पराप्राप्तान्मार्गान्मा दूरीकार्ष्ट, तादृशस्तु सनातनधर्म्म एव । 'वक्ष्ये सनातनं धर्म्मं नारायणमुखाच्छ्रुतम्' भागवत० ७।११।४ 'सनातनस्य धर्मस्य मूलमेतत्सनातनम्' महाभा० अश्वमेध० ९७।३२ 'मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः' भाग० १०।४।३९। एतदतिरिक्तप्रमाणानि संस्कृतरत्नाकरे' २।६ मल्लेखे द्रष्टव्यानि ।

कविषयाणां निह्नवेन) पिशुनयन्ति । तदीयगुणान्, 'अनवद्या पतिजुष्टेव नारी ऋ० १।७३।३ इतिमन्त्रोदाहरणीभूत-सीतासावित्रीसुलोचनागान्धार्य्यनसूयाप्रभृति-पतिव्रतधर्म्मोपोद्वलकपवित्रचरित्राणि च निह्नुत्य कलुषतामात्रोपगूढा मूढास्ते क्रमेलकाः कण्टकजालमिव तद्-दोषमात्रमेव प्रदर्शयितुमुद्यच्छन्तेऽपठितजनताया अग्रतः । तानि च पुराणानि वेदविरुद्धान्यत एवाऽप्रमाणानि च साधयितुं दुश्चेष्टन्ते । तदीयविरुद्धांश- ( स्वेप्सित ) प्रदर्शनसमये तु ते तान्येव तदितिहासांश्च स्वतःप्रमाणानि मन्यमाना भवन्ति । यदि तत्र क्वचित् स्वेच्छाविरुद्धं ( मूर्त्तिपूजाऽवतारश्राद्धतीर्थयात्राव्रतादिकं ) पश्यन्ति, तर्हि तमंशं प्रक्षिप्तं प्रतिपाद्य, तदवैदिकतां प्रख्याप्य, तन्निन्दानिनादैर्यत्र तत्र कर्णकुहरे स्फोटयन्ति । परन्ते विवेकदुर्विदग्धा एतन्न विविञ्चन्ति, यत्-किन्तेषां कथनमात्रेणैव प्रक्षिप्तताऽवैदिकता वा तादृशवचनानां भविष्यति ? कदाऽपि नैवम् । कल्प्यताम्-यदि केचिद् वेदेषु प्रक्षिप्ततां वा तदप्रमाणतां वा, भण्डधूर्त्तनिशाचरपोपकर्तृकतां वा तेषां मन्वीरन्, तर्हि किं वेदा अप्रमाणभूताः पोपपाखण्डिप्रणीता वा सेत्स्यन्ति ? यदि कथ्येत - आम्, तर्हि तु धन्या भवन्तः; एवन्त्वेकमपि पुस्तकं प्रमाणकोटौ न स्थास्यति; यतः प्रत्येकग्रन्थप्रामाण्ये तद्विरुद्धजनसमुदायः सदा नकारमेव करिष्यति । यदि तादृशानां तथा मननेऽपि वेदेषु प्रामाणिकता वर्त्तते; तर्हि अप्रमाणतामन्तॄणां तथा मननमात्रेणैवाऽऽर्षवचनानां ( पुराणस्थानां ) प्रामाणिकता कथं प्रच्युता स्यात्, कथं वा प्रक्षिप्तता स्यात् ! तादृशवचनानां तात्पर्य्यं ज्ञातुम् उपक्रमोपसंहाराऽभ्यासाऽर्थवादोपपत्त्यादीनामुपयोगो ग्रहीतव्यो भवति ॥

वयमेतदपि न कथयामो यत्— पुराणेषु प्रक्षिप्तता वर्त्तत एव न; नहि— प्रक्षिप्तताऽपि वर्त्तते पुराणेषु, न्यूनताऽपि च वर्त्तते । परमस्य नेदमाकूतम् यद् यद् भवन्मतविरुद्धं स्यात्, तदेवाऽत्र प्रक्षिप्तं स्यात्; अथवा यद् भवन्मते वर्त्ततेऽत्र च न दृश्यते— सैवाऽत्र न्यूनता स्याद् । नहि २ कदाऽपि नैवम् । प्रक्षिप्ततायां न्यूनतायाश्च सम्भवस्तदा; यदा पुराणनिर्दिष्टतत्तद्विषयविभाग-स्तन्नियतश्लोकसंख्या तन्नियतविषयाऽनुक्रमश्च यदि तत्तत्पुराणे तथा न मिलेत्; तदैव प्रक्षिप्ततान्यूनताद्यनुमानं कर्त्तव्यम्भवति । निश्चयश्च तदीय उपक्रमोप-संहाराद्युपयोगेनैव कर्त्तुं शक्यः । एतदादिकाऽव्यवस्थायाः कारणमपि वर्त्तते श्रूयताम्— परस्सहस्रैर्वर्षैः पुराणानां यत्र तत्र प्रचारस्तु स्थितः परं तदा मुद्रायन्त्राणि नाऽऽसन्; भिन्नभिन्नलेखकानां हस्ते पातेन पाठानां यत्र तत्र परिवर्तनेन भवितुं शक्यम् । भवद्भिरत्रे दा एव द्रष्टव्याः, अत्र सत्यव्रतसामश्रमी भणति—'एष किल वैदिकशाखाभेदो नह्येककर्तृकः, न च ब्रह्मविष्णुपुराणादि-

ग्रन्थभेदवत्, नाऽपि प्रथमाद्यध्यायभेदतुल्यः, प्रत्युत भिन्नकालदेशव्यक्तिलिखिता-नामेकग्रन्थीयानां बहुतराऽऽदर्शपुस्तकानामवश्यम्भाविन एव पाठभेदादिभावाः, तथाभूतपाठभेदादिहेतुक एव, (ऐतरेयालोचने १२५ पृ०)। यद्यप्यस्मिन्नर्थेऽस्माकं पूर्णासम्मतिर्नास्ति; तथाऽप्येतेन पुराणानां लेखभेदोऽप्यनुसन्धेयो भवतीत्युपन्यस्तः। फलतो वेदानां रक्षणं भूयिष्ठप्रयत्नेन जातं प्राक्तनसमये; अनेकैस्तेषां कण्ठस्थता कृता; तद्रक्षणार्थं शाखाश्च नियता जाताः, अत एव तेषां नामाऽपि श्रुतिरिति जातम्, एवंविधसंरक्षणे जातेऽपि नियतसङ्ख्याकमन्त्रवतामपि वेदानां पाठभेदभूयस्त्वं प्राप्यते, यत् सायणादिभिर्मैक्समूलराद्याङ्ग्लैश्च तत्र प्रदर्शितम्। यथा वा... १९८१ वैदिकयन्त्रालयमुद्रिताऽथर्व्ववेदे ८१ पृष्ठे ३ पङ्क्तौ 'अमृतस्य' स्थाने 'अम तस्य' इति, ८२ पृष्ठस्याऽन्तिमपङ्क्तौ च 'विद्वान्' इत्यस्य 'वेद्वान्' इति मुद्रितम्, एवमन्यत्राऽपि। एवं शनैश्शनैरिमे पाठा अग्रिमसंस्करणेष्वप्येवमेव स्थास्यन्ति, 'यमराजस्य पन्था वै' एतत्स्थाने 'यमराजस्य यन्था वै' इति पाठे मुद्रितेऽपि जनाः कमप्यर्थं कुर्व्वन्त्येव; तदा वेदमुद्राऽशुद्धेरपि कमप्यर्थं साधयिष्यन्त्येव जनाः; तदा केचित् कथयिष्यन्ति— यदयं पाठश्शुद्धः, अन्येऽन्यं शुद्धं मंस्यन्ते। एवम् अजमेरमुद्रितसामवेदसंहिताकृते 'वेदसर्वस्व' स्य १५८ पृष्ठे तत्प्रणेत्रा स्वा० हरिप्रसादवैदिकमुनिना कथितम्— "अजमेर" के वैदिकयन्त्रालय में जो सामवेद संहिता छपी है- उसके छापने में तो इतनी असावधानी हुई है कि जिसके लिये अधिकारियों को कुछ प्रायश्चित्त करना चाहिये"। यद्येवमद्यत्वे मुद्रायन्त्रेषु सत्सु पाठभेदादिकस्य सर्व्वश्रद्धेये वेदे ईदृग् दुरवस्था; तर्हि यदा मुद्रायन्त्राणि नाऽऽसन्, न चाऽद्यतनसदृशी सुव्यवस्थैवाऽऽसीत्; तर्हि पुराणेषु तदा पाठभेदादिकं पुस्तकान्तर पाठ सम्मिश्रणञ्च जातं स्यात्; तत्किमाश्चर्य्यम्।

(क्रमशः—)

———

## कुरुक्षेत्रभूमिः

(ले०—ओंकारदत्तशास्त्री विद्याभूषणः)

परमपवित्रायाः कुरुक्षेत्रभूमेर्महिमानं को नाम नरो वक्तुं शक्नुयात्। यदुच्यते- "पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः। अपि दुष्कृतकर्माणं नयन्ति परमां गतिम्।" कुरुक्षेत्रभूमेर्महिमा वेदेषु पुराणेषु स्मृतिषु च सर्वत्र मिलति। तद्यथा— अविमुक्तं वै कुरुक्षेत्रमत्र हि तारकं ब्रह्म व्याचष्टे येनासौ (मृतजीवः) अमृतो भूत्वा मोक्षीभवति (जाबालोपनिषत्) कुरुक्षेत्रं वै देवानां देवयजनमास (शतपथ-

ब्राह्मणम् ) किमधिकम्—अस्या भूमेः परमपवित्रत्वे इदमेव महाभारतवचः पर्याप्तमस्ति यत्—"अन्यदेशे कृतं पापं गंगायां प्रविनश्यति । गंगायान्तु कृतं पापं कुरुक्षेत्रे प्रणश्यति" ।। इति ।। 'धर्मक्षेत्रे कुरुक्षेत्रे' इत्यादि गीतावाक्यमिति कति ब्रूमः । इयमेवभूमिः सर्वेषां महर्षीणां सर्वेषां ब्राह्मणानां चादिसमुत्पत्तिस्थानं मन्यते । अत्रैव भूमावाबालवृद्धप्रसिद्धो महाभारतसंग्रामो बभूव । यन्मध्ये भगवान् कृष्णः सकलश्रुतिस्मृतिसारभूतां गीतामुपदिदेश । व्यासश्च भगवानत्रैव भारतं भागवतं ब्रह्मसूत्रं योगभाष्यं पुराणानि च कृतवान् । अत्रैव भूमौ पराशरप्रभृतयो महात्मानः, भीष्म-विदुर-युधिष्ठिरप्रभृतयो राजानः, द्रोण भीमार्जुनप्रभृतयो वीराः । कर्णप्रभृतयो दानिनः । षट्शास्त्रि-गरुड़ध्वजप्रभृतयो विद्वांसः प्रादुरभूवन् । अद्यापि विश्वविख्यातकीर्तयः सर्वतन्त्रस्वतन्त्रप्रतिभाः पण्डित श्री छज्जूरामशास्त्रिविद्यासागरप्रभृतयोऽगत्या विद्वांसः सर्वशास्त्रीय-ग्रन्थनिर्माण-षट्शास्त्राध्यापन-धर्मोपदेशादिकार्यैः संस्कृतसाहित्यस्य महत सेवां कुर्वन्तोऽस्या भूमेर्गौरवं वर्धयन्तीति नाविदितं कस्याप्यक्षरजुषः । परन्तु महद्दुःखमिदं यदत्र सर्वस्यामपि भूमौ, प्रसिद्धनगरेष्वपि का कथा ग्रामाणां, एकापि संस्कृतपाठशाला तादृशी न विद्यते, यत्र दशानामपि-शास्त्रिविशारदाचार्य मध्यमादिपरीक्षादित्सूनां छात्राणां पठनपाठनयोः सुप्रबन्धो भवेत् । दानवीरैरत्र दृष्टिर्दातव्या । अस्तु । इयं भूमिरष्टचत्वारिंशत्क्रोशपरिमिता मन्यते । तस्यां च षण्णवत्यधिकानि त्रिशतानि तीर्थस्थानानि विद्यन्ते । परन्तु तेषु पञ्चतीर्थस्थानान्यतिप्रसिद्धानि सन्ति । स्थानेश्वरनगरस्थकुरुक्षेत्रतीर्थे लक्षाधिकैः स्त्रीपुरुषैः स्नानं दानं च क्रियते । एवं पृथूदके चैत्रामावस्यायाम् । फल्गुतीर्थे-आश्विनस्य सोमवत्याममावस्यायाम् । रामह्रदे कार्तिकी पूर्णिमायाम् । पिण्डारके सोमवत्याममायामिति संक्षेपः । [ अयं लेखः— म० म० श्रीमदन्नदाचरणतर्कचूडामणि-महोदयानां 'विहार गौरवं' लेखमाश्रित्य लिखित इति तेषामधमर्णो लेखकः ]

## विज्ञापन-नियमाः ।

सूर्योदये विज्ञापनप्रकाशनार्थम् उपरितनपृष्ठैकस्य कृते १० रूप्यकम् ।
अर्धभागस्य कृते ६) षड्रूप्यकम् चतुर्थांशस्य ३) रूप्यकत्रयम् ।
विशेष सौविध्यार्थं सूर्योदयव्यवस्थापकपार्श्वे पत्रां प्रेषणीयम् ।
समालोचना- पुस्तकादिकादिमपि व्यवस्थापक नाम्नैव प्रेषणीययम् ।

चतुर्दशे वर्षे]    आषाढ़ श्रावण भाद्र पूर्णिमाः १९९५    [१-२-३ संख्याः




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces and Bombay Presidency for use in Schools and Colleges.

सम्पादकः—
त्यक्त महामहोपाध्यायपदवीको
महामहाध्यापकः श्रीपञ्चानन तर्करत्न भट्टाचार्यः ।

सहकारि सम्पादकः—
अवधेशप्रसादशर्मा द्विवेदः

उद्गम-स्थानम्—
श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी

—:०:—

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) । वहिर्भारतम् ६)    छात्रेभ्यः पुस्तकालयेभ्यश्च १)

---

# विषय-सूची ।





# सूर्योदयः।

चतुर्दशे वर्षे | आषाढ़-श्रावण-भाद्रपूर्णिमाः १९९५ | १-२-३ संख्याः

## सम्पादकीया अभिप्रायाः।

---

### चतुर्दशवर्षप्रवेशः।

व्यतीताः खलु त्रयोदश वत्सराः श्रीमतः सूर्योदयस्य। संसारस्थितिप्रकारेण च भुक्तमेषु सुखं दुःखञ्च नेन। बालसुलभचापल्येन गुरुवचनमतिक्रम्य सखिजनप्रणयमविगणय्य, स्निग्धानां स्नेहाकर्षणं च शिथिलीकृत्य तिरोहितेनानेन कञ्चित्कालमस्थीयत। साम्प्रतं तादृशदोषह्रासेऽपि सम्यग्वश्यतां नायमेति। तथापि स्पृहयन्ति खलु दुर्ललितायास्मै स्थेयांसः, सहन्तेऽस्यापराधान् प्रणयिनः, क्षमन्ते चास्य स्खलितशतं गुरवः। एवमवलोक्य स्वेषामनुरागमद्य सहास्यमुदीरयति समाप्य नवरात्रव्रतं यथावदनुवर्त्तिष्ये महाभागानिति।

नवरात्रव्रतम्।

कन्यासंस्थे रवौ शक्रशुक्लामारभ्य नन्दिकाम्।<br>
अया(पा)शी ह्यथ वैकाशी नक्ताशी वाथ वाग्वदः॥<br>
भूमौ शयीत चामन्त्र्य कुमारी र्भोजयेन्मुदा।<br>
वस्त्रालङ्कारदानैश्च सन्तोष्याः प्रतिवासरम्॥<br>
बलिं च प्रत्यहं दद्यादोदनं मांसमाषवत्।<br>
त्रिकालं पूजयेद्द् देवीं जपस्तोत्रपरायणः॥

इति मदनरत्ने देवीपुराणवचनम्, कन्यासंस्थे रवाविति प्रायिकत्वाभिप्रायेण; अत एव स्कान्दे—

मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः।<br>
सम्पूज्य नवदुर्गां च नक्तं कुर्य्यात् समाहितः॥

इति स्कान्दवचने कन्यासंस्थे रवौ इत्यस्याप्रवेशः । चान्द्रशब्दाश्व-युजस्य च प्रवेशो दृश्यते । तथा चाश्विनशुक्लप्रतिपदि नवरात्रव्रतारम्भः, महानवम्याम् ( आश्विनशुक्लनवम्यां ) समापनम्, दशम्यां पारणम् । उभयदिने प्रतिपत्प्राप्तौ द्वितीयाप्रयुक्तायां मुहूर्तान्यूनायां तिथिमलातिरिक्तायां प्रतिपदि व्रतं ग्राह्यम् ।

तत्र प्रयोगः—सङ्कल्पं विधाय घटं संस्थाप्य तत्र देवीमावाह्य षोडशोप-चारैः पूजयित्वा माषभक्तबलिं कुष्माण्डादिबलिं वा निवेदयेत् । पूजा च—"जयन्ती मङ्गला काली०" इत्यादिमन्त्रेण नवार्णेण वा कार्या । एतानि नव-दिनानि व्रती निराहारो जलाहारो वाय्वाहारो नक्तव्रती एकभक्ती वा यथाशक्ति स्यात्, अत्रापि—

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ इति,
अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनी । इति,
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न साम्परायिकं तस्य दुर्म्मते विद्यते फलम् ॥

इति च वचनानि संभावनीयानि । वरवर्णिनीति पार्वत्याः शिवकृतं सम्बोधनम् । देव्याः पूजानन्तरं कुमारीपूजनम् । तदुक्तं हेमाद्रौ "एकैकां पूजयेत् कन्यां, एकवृद्ध्या तथैव वा । द्विगुणं त्रिगुणं वापि प्रत्येकं नवकं तु वा ।" एते विकल्पाः शक्ताऽशक्तभेदेन फलभूयस्त्वकामनापेक्षया च यथायोगं स्थापनीयाः ।

नवरात्रव्रतेऽशक्तस्त्रिरात्रञ्चैकरात्रकम् ।
व्रतं चरति यो भक्तस्तस्मै दास्यामि वाञ्छितम्,

इतिदेवीपुराणे देव्या वाक्यमिति तु करुणानिदर्शनम् । पूज्याः कुमार्य्यश्च द्व्यन्यूनदशानधिकवर्षदेशीयाः ।

वयोभेदेन तासां नामभेदो यथा—( १ ) कुमारिका, ( २ ) त्रिमूर्त्तिः ( ३ ) कल्याणी ( ४ ) रोहिणी, ( ५ ) काली, ( ६ ) चण्डिका ( ७ ) शाम्भवी ( ८ ) दुर्गा ( ९ ) सुभद्रेति नामोल्लिख्य ताः पूजयेत् । आसामावाहनमन्त्रः—

मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ॥ इति,
एवमभ्यर्चनं कुर्य्यात् कुमारीणां प्रयत्नतः ।
कञ्चुकैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ।
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत् पायसादिभिः ॥

ग्रन्थिस्फुटितत्वादिदोषयुक्ताः कुमार्यः पूजायां वर्जनीयाः ॥ यथा—

ग्रन्थिस्फुटितशीर्णाङ्गीं रक्तपूयव्रणाङ्किताम् ।
जात्यन्धां केकरां काणीं कुरूपां तनुरोमशाम् ॥
सन्त्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम् इति ॥ (अत्र वेदपाठनं)
एवं चतुर्वेदविदो विप्रान् सर्वान् प्रसादयेत् ॥
तेषाञ्च वरणं कार्य्यं वेदपारायणाय वै ।
तथा चण्डीपाठस्तत्पाठनं वा तत्र विधेयम् ।
एकोत्तराभिवृद्ध्या तु नवमीं यावदेव हि ॥
चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः । ( इति रुद्रयामलीयात् । )

अत्राश्वव्रतोऽश्वपूजनम् प्रतिपदादिनवम्यन्ततिथिषु कर्त्तव्यम् । उच्चैःश्रवःपूजा च । तदुक्तं मदनरत्ने देवीपुराणे—

अश्वयुक्शुक्लप्रतिपत्स्वातीयोगे शुभे दिने ।
पूर्व्वमुच्चैःश्रवा नाम प्रथमं श्रियमाहरत् ॥
तस्मात् साश्वै नरैस्तत्र पूज्योऽसौ श्रद्धया सह ।
पूजनीयाश्चतुरगा नवमीं यावदेव हि ॥

मूलानक्षत्रयोगे सरस्वतीस्थापनम् । ज्येष्ठायोगे गजपूजापि । नवम्यां व्रतपूर्तिर्दशम्यां शमीवृक्षमर्च्चयित्वा पारणं कुर्यात्, इति स्थूलो नवरात्रव्रतप्रकारः । नवयोन्यात्मकश्रीचक्रपूजा तु सूक्ष्मः प्रकारः । स च समयिमतसिद्धो ब्रह्मसूत्रशक्तिभाष्ये वर्णितः । अन्यच्च संक्षेपादुच्यते ।—

नवद्वारं पुरं नवरात्रं तच्च स्थूलशरीरं तत्र या कुलकुण्डलिनी शक्तिः तस्याः प्रबोधनं तत्पूजनम् । याश्च दशनाड्यः (१) इडा (२) पिङ्गला (३) सुषुम्णा (४) गान्धारी (५) हस्तिजिह्वा (६) पूषा (७) यशस्विनी (८) अलम्बुषा (९) कुहू (१०) शङ्खिनी चेति । तासु सुषुम्णामपहाय नाडीनवकं कुमारीनवकरूपं तत्स्वरूपावधारणं तदधिष्ठितेन्द्रियादिशोधनं च तत्पूजनम् । सुषुम्णायाः कुलकुण्डल्युत्थानमार्गतया तत्पूजनमेव सुषुम्णा स्वरूपावधारणादिकमन्तर्भवति । इत्येतत् सूक्ष्मनवरात्रव्रतं स्थूलनवरात्रव्रतानुष्ठानलभ्यशक्तिप्रसादमन्तरेण न सम्पादयितुं शक्यते, सूक्ष्मतद्व्रतानुष्ठानं विना च न परमानन्दाधिगमोऽत्यन्तदुःखनिवृत्तिर्वा तस्माद्महदाश्वासस्थानमिदं वचनम्—

तुष्टायां नृप दुर्गायां निमेषार्द्धेन यत् फलम् ।
न तद् वक्तुं महेशोऽपि शक्तो वर्षशतैरपि ॥

नाडीचक्रं मासान्तरे विचारयिष्यते । इति

# हा ज्यौतिषभास्करोऽस्तमितः!!!

छपरामण्डलान्तर्गत डुमरी ग्रामभिजनाः काशीवास्तव्या ज्योतिर्विज्ञान-राशयो हिन्दूविश्वविद्यालयस्य ज्यौतिषविभागीयप्रधानाध्यापकाः पण्डित रामयत्न ओझामहोदया अगस्तमासस्य २८ दिने रविवासरे सायम् षड्वादने काश्यां जलपाधीरस्थगास्थ रामनिवासभवने नश्वरं कलेवरं विहाय श्रीकाशी-विश्वेश्वरसायुज्यमाश्रिताः । स्वनामधन्या इमे बाल्यकालत एवेह काश्यामासन् । प्रथमतः सारस्वतव्याकरणमधीत्य स्वर्गीय-म० म० पण्डित सुधाकरद्विवेदिन पार्श्वे स्वर्गीयदीनानाथ शर्मणां परमप्रसिद्धज्योति-र्विदाम्पार्श्वे च गणितज्योतिःशास्त्रं स्वर्गीय-म० म० पण्डित अयोध्या-नाथशर्म्मसविधे च फलितज्योतिःशास्त्रमधीतवन्तः । एतेषां गणित-फलितयोरुभयोरपि ज्ञानं परां काष्ठामधिगतमासीत् । पाश्चात्यभाषामधी-त्यैमे साम्प्रतिकगणितविज्ञानमप्यनुशीलितवन्त आसन् एतेषां पाण्डित्य-प्रकर्षः सर्वत्रैव भारते प्रख्यात आसीत् । प्रायः सर्वेऽपि सनातनधर्माणो राजान एतेषां सम्मतिमाश्रित्यैव मौहूर्तिककृत्ये सन्तोषभाजो भवन्तिस्म । श्रीमतां महामनसां श्रीमदनमोहनमालवीयमहोदयानामिमे आदरभाजनान्यासन् । पूर्वं हिन्दूकालेजसम्बन्धिरणवीरसंस्कृतपाठशालायां ततो विश्वविद्यालये ज्योतिष-शास्त्रस्य प्रधानाध्यापकपदे प्रतिष्ठितास्तत्र सीनेटसभायाः सदस्या आसन् । किं बहुना ज्योतिर्विज्ञानराशीनामेषां शतशः शिष्याः सम्प्रति काश्यां बहिःप्रदेशे च महाविद्यालयादिषु ज्योतिषशास्त्रस्य प्रधानाध्यापकतामाश्रयन्ति । हिन्दूविश्वविद्यालयीयं 'विश्वपञ्चाङ्ग' मेवामेव तत्त्वावधानेऽदसीयैः शिष्यैर्निर्मीय-तेस्म । ज्ञानमण्डलीय सर्वोपयोगि सौरपञ्चाङ्गमपि प्रथममिमे एव सम्पादित-वन्तः । इत्येवं पण्डितप्रकाण्डानां सदाचारपरायणानां हिन्दुसंस्कृतिसंरक्ष-काणामेषां त्रयो योग्याः पुत्राः सन्ति । अनुजश्चैकः श्रीमान् बलराम ओझा महोदयः काव्यतीर्थः सुविद्वान् पुष्पपुर्यां संस्कृताध्यापकोऽस्ति । ज्येष्ठसूनुः श्रीमान् यशोदानन्द ओझा महोदयश्च छपरामण्डलीय-हथुआराज स्कूलविभागे-ऽध्यापकः । ज्योतिर्विदामेषां वियोगेन सन्तप्तहृदयैस्तैस्तदन्यैश्च तदीयबन्धुवर्गै-स्तच्छिष्यलक्षैश्च सह समवेदनां प्रकटयन्तो वयं परलोकमाश्रितानां तेषां श्रीकाशीविश्वेश्वराच्चिरशान्तिमभ्यर्थयामहे । (स० सम्पादकः)

# नववर्षवर्द्धापनम् ।

पण्डित श्रीदीनानाथशर्मा शास्त्री सारस्वतः ( मुलतानस्थः )



श्रीयुत सूर्योदय-सम्पादकाः ! त्रयोदशवर्षाणि सानन्दमतिवाह्य चतुर्दशे वर्षे पदं निदधानस्य ( सूर्योदयस्य ) वयोवृद्धियौवनाद्युपलक्ष्ये भवद्भ्यो वर्द्धापनानि समर्प्यन्ते । यद्यप्ययं स्वयन्त्रालयविरहाद् मध्ये विलम्बचक्रे न्यपप्तत् । तथापि श्रीमद्भिः स ततश्शीघ्रमेव विमोचितः । एतादृशाऽवसरे कतिचित् पत्रसम्पादकाः विलम्बभीताः सन्तः स्वपत्रस्य वयोहानिं कुर्वन्ति, कतिचिच्च तदङ्कन्यूनतां कुर्वन्ति, परन्तु श्रीमद्भि धैर्यमवलम्ब्य तदीयवयोहानिमङ्कहानिं वाऽकृत्वा शनैश्शनैः 'सूर्योदयः' पुनः प्राक्तनीनामवस्थां प्रापितः । अथ च संस्कृतसंसारे किमपीदृक् पत्रं न दृष्टं वा श्रुतं, यद् अविछिन्नं त्रयोदशवर्षाण्यतिवाह्य चतुर्दशंवर्ष प्राप्तं स्यात् । तेन एतदाद्युपलक्ष्येऽस्माभिः श्रीमद्भ्यः पुनर्वर्द्धापनान्यर्प्यन्ते । यथा श्रीमद्भिरस्य ( षण्मासावरोही ) इतिकलङ्को दूरीकृतः तथाऽस्य कृषत्वादि दोषमपि परिहृत्य तं पुँल्लिङ्गपत्राणां पितरं क्लीवस्त्री-लिङ्गपत्राणाञ्च पतिं कर्तुं प्रयतेरन्नित्याशासे किं बहुना ।

# शोकोच्छ्वासः।

**स्वर्गीय पं० रामयत्न ओझा, ज्यौतिषाचार्यः काशी हिन्दूविश्वविद्यालयाध्यापकः।**

[ जन्म १९३४ वैक्रमाब्दे। मृत्युः १९९५ वैक्रमाब्दे। ]



शान्ता धरे! भव दृढौ दिवि पुष्पवन्तौ।
स्तां, सन्तु हे ग्रहगणाः! सुदृढा भवन्तः।
धैर्यावलम्बनमहो सुधियोऽपि कुर्युः।
संश्रावयामि मनसोप्यथ शोक-भारम् ॥१॥
कृत्वा धरां सतिमिरां बुधमण्डलीषु।
वज्रं निपात्य सुरवाचि च दैववेत्ता॥
दैवज्ञ-लोकमिममन्धतमं प्रकुर्वन्।
श्रीरामयत्नविबुधोऽद्य गतः क्व हन्त! ॥२॥
छात्रा रुदन्ति सततं विमनायमाना
दोदूयमानमनसा विलपन्ति लोकाः॥
विज्ञाश्च दुःखमधुनानुभवन्त्यवाच्यम्।
श्रीरामयत्नविबुधोऽद्य गतः क्व हन्त! ॥३॥

स्वीयां मतिं समुचितामनुभावयन्त
मेतं बुधं ग्रहगणा बहुमान-पूर्वम् ॥
यत्स्वाह्वयन् तदगमद्दिवि किं विमानात्।
श्रीरामयत्नवि धः सुधियां वरेण्यः ॥४॥
जन्माङ्गतः फलसुभासित-भाषिताया
अन्तेवसत-द्दुपदेशविधानतश्च ॥
स्वज्ज्योतिषः किरणकं विकिरन् पृथिव्या
मस्तं गतोऽद्य सविताऽऽहह भारतस्य ॥५॥
दिवि परिषदि वादोऽभूदहो ज्यौतिषस्य।
प्रखरमतिरुदारो निर्णयेशो न लब्धः ॥
इति सुरपतिरेतं विज्ञमाहूतवान् यत्।
तदनु बुधवरेण्योऽगाद्दिवं सादरन्नु ॥६॥
शान्तिं प्रयातु हृदयं विबुधस्य तस्य।
श्रेयांसि सन्तु परिवारजनस्य सम्यक् ॥
सज्ज्योतिषं पदमुपैतु शुभं क्वचिच्च।
संप्रार्थयामि भविकाय च विश्वनाथम् ॥७॥

लोकोत्तरकीर्तिभाजां म० म० श्रीमदयोध्यानाथ-
शर्म्मणां तनूजन्मनो रघुनाथशर्म्मणः
प्रमोद पाठशाला (नई बस्ती) काशी।



## ज्ञातव्यविषयाः।

कानिचिद्दिनानि व्यतीतानि स्पेनदेशे कश्चिज्जनो दृश्यालये (तमासाघर) सर्पक्रीड़ां दर्शयति स्म। स दैर्घ्ये द्वादशहस्तपरिमितमेकमजगरं स्वशरीरे सर्वतो वेष्टितवान्। अत्रान्तरे एव काचन त्रुटिर्जाता। तेन विनाऽपराधं सर्पेण स्वशरीरं तथा दार्ढ्येन परिवेष्टितं येन क्रीडाकरः सहसैव भूमौ पपात। अनन्तरं कृतायां परीक्षायां ज्ञातं यत्तस्य अस्थीनि ८४ स्थानेषु भग्नान्यासन्।

× × × ×

अथ भारतवर्षे विदेशेभ्यः कोट्यधिकानां रूप्यकाणां वस्तून्यायन्ति

विभिन्नप्रकाराणां विदेशीय वस्तूनां क्रयणे भारतस्य प्रतिवर्षं कियान् व्ययो भवतीति निम्नलिखितसंख्यया ज्ञातुं शक्यते ।

| | |
|---|---|
| कर्पासवस्त्राणि, ऊर्णावस्त्राणि कौशेयवस्त्राणि च | २८,३५,८९,८५ |
| यन्त्रादीनि ( मशीन ) | १४,७८,१०,९६ |
| मृत्तराणि ( मोटर ) | ६,५६,३३,७० |
| क्षुरिकाः, कण्टकानि लोहमयानि कपाटाङ्गानि च | ५,७७,८४,७७ |
| औषधयः | ५,१७,१२०२ |
| लौहम् लौहनिर्मितानि वस्तूनि च | ९,६६,८५,५१ |
| रङ्गम् | ४,००,९३,३० |
| विद्युत्सामग्री | ३,०३,६१,४८ |
| कर्गलं लेखनसामग्री च | ३,५६,८५,२६ |
| ( रबड़ ) निर्मितपदार्थाः | २,११,३१,४६ |
| शीशकपात्राणि चीनमृत्पात्राणि च | १,७४,८५,६८ |
| चर्म, चर्मनिर्मितसामग्री च | ५१,१०,०१ |
| सामग्री काष्ठवस्तूनि च | ४४,५३,६५ |
| भुशुण्डी गोलकं रञ्जकश्च | ६६,०९,२८ |
| फेनिलः ( साबुन ) | २६,८५,६३ |
| उपानत् | २१,१९,३० |
| क्रीड़नकानि | ४३,५२,६८ |
| विषकूटः ( बिस्कुट ) | ३,३०,२१,८ |
| वाद्य उस्तूनि | ५,०४,७९,४४ |
| मदिरा | १,९१,६६,६२ |
| उपस्करः ( मसाला ) | १,८७,७५,४६ |
| फल० भाजी च | १,४१,६९,३५ |
| तमाखुः | ८०,८२,७३ |
| पिष्टं दालिश्च | ७२,०१,११ |
| शर्करा | २३,९१,१२ |
| चायः | १८,१५,५७ |
| खाद्यवस्तूनि | ७८,९४,५४ |
| अन्यवस्तुनिर्माणाय आगतानि वस्तूनि | १९,४१,७०,६१ |
| अश्वादयः | १५,६७,६७ |
| पत्रालयस्य कृते वस्तूनि | २,११,५८,५० |
| संकलनया एवमादि भवति | |
| | १,२५,२२,५०,००० |

# ऐतिहासिकं वृत्तम् ।

## काशिक-गवर्नमेन्ट-संस्कृत-कालेज-विषयकम्

लेखकः—काशिक-राजकीय-संस्कृतमहाविद्यालयाध्यक्षः श्रीयुत डाक्टर
मङ्गलदेवशास्त्री, एम० ए० डी० फिल ( आक्सन ) महोदयः

( प्रथमोंऽशः )

"गवर्नमेन्ट संस्कृत-कालेज, बनारस" इत्याख्य-संस्थायाः खलु परिचय-विषये किञ्चिदपि कथनमसाम्प्रतमेव । आपूर्वात् पश्चिमाच्च समुद्रादुत्तरेण हिमवन्तं दक्षिणेन च दक्षिणसमुद्रं भारतीयानां संस्कृतविदुषामावालवृद्धमतिप्रसिद्धः, विदेशेष्वपि संस्कृतानुरागिणां नाविदितः, गीर्वाणवाणी–विद्यालयानामादर्शः, चिराय विश्वविदित–यशसामनेकेषां विपश्चिद्धौरेयाणां निधानभूतो हि एष विद्यालयः सर्वेषामादरास्पदम् । तस्यैतादृशस्य आधुनिकविद्यालयेषु प्रायेण प्राचीनतमस्य विद्यालयस्येतिहासविषये नूनमनेके जिज्ञासव इत्याकलय्य तद्विषयकं वृत्तं किञ्चित्किञ्चित् कदाचिदत्र प्रकाशयितुमभिलषामो वयम् । क्रमवद्धेतिहासोऽपि तस्य तदनन्तरमेव अवकाशानुसारेण प्रकाशितोभवेदित्यप्याशास्महे ।

१७९१ खिस्ताब्दे 'जोनाथन डङ्कन' नाम्नः काशीस्थ-बृटिशराजप्रतिनिधेः प्रेरणया 'लार्डकार्नवालिस' नाम्नः प्रधानाधिकारिणश्चानुमत्या 'ईस्ट इण्डिया कम्पनी' इत्याख्य संस्थयासंस्थापितो ह्येष विद्यालयो विविधप्रवन्धेन प्रवर्धमानः १८४४ खिस्ताब्दे 'जे० म्योर' नाम्नो विद्वत्प्रवरस्य स्वाध्यक्ष–( प्रिंसिपल ) त्वेन नियोजितस्याधिकारे समायातः इतः कालात्पूर्वं विद्यालयविषयका लेखास्तत्पुस्तकेषु प्रायेण फारसी-शब्दबहुलायामुर्दूभाषायामथवा हिन्दीभाषायामेव समुपलभ्यन्ते । उक्तस्य 'जे० म्योर' नाम्नो विद्यालयाध्यक्षस्य तु समयादारभ्य प्रायेण प्रथमत एव संस्कृतभाषायां तेषां लेखानां प्रवृत्तिर्जातेति प्रतीयते ।

तेषां लेखानामादिमोऽत्र प्रकाश्यतेऽविकलरूपेण ।

अथ काशीस्थ–विद्यालयाध्यक्षस्य श्रीमज्जान्म्यूर साहवस्य विद्यालयीयान् श्रीमत्पण्डितांश्छात्रांश्च प्रति विज्ञापनमिदम्–एतद्देशे स्वकीयाधिकारस्यादेरारभ्यात्र नगरे विद्यामन्दिरस्थापनान्महामहिमकम्पनिनियुक्तशास्त्रिणां भारतीय-शास्त्रीयनानाविद्याप्रवर्द्धनायोत्कण्ठा विशेषरूपेण प्रकाशिता ॥१॥

अव्यवहितपूर्वकाले च छात्रेभ्यो मासिकप्रदानेन साम्प्रतञ्च अध्यक्षनियोगेन राज्ञां विद्यावृद्ध्यर्थिका चेष्टा पूर्वापेक्षया न्यूना नास्तीति सिद्धम् ॥२॥

अतः कारणाद्राज्ञामनुग्रहमनुभूय पण्डितैश्छात्रगणैश्च यथाशक्ति परिश्रा-म्यद्भिस्तदीयः पूर्वोक्तोऽभिप्रायः सफलीकर्त्तव्यः ॥३॥

अध्यापकधर्मास्तु ( ? ) तत्तत्सु वेत्तृषु विस्तारतो ? ) वर्णनेन किम्प्र-योजनम् । संक्षेपतस्तु छात्राणां शासने यथाशक्ति मनोयोगः, शिष्याणां विद्या-प्रवृद्धौ चेष्टा, अध्यापनस्य सर्वोत्तमक्रमविचारणम्, प्रत्येकञ्छात्राणान्तत्तद्वि-शेषस्वभावानुसारेणोपदेशनम्, अक्रोधेन शासनञ्चेत्येतेऽध्यापकस्य धर्माः ।

यथा मनुनोक्तम्—

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥४॥

छात्रैस्तु सर्वदा नानाविद्याभ्यासे चेष्टितव्यम्, अध्यापकानां वयोज्ञान-पदादिष्वाधिक्यं स्मृत्वा तदादर आज्ञापालनञ्च कर्त्तव्यम्, शुद्धवस्त्रपरिधान-शिष्टाचार-परस्पर-हितकारित्वादीनि आचरितव्यानि । इत्यादिधर्मेषु पण्डि-तानां छात्राणाञ्च प्रचोदनायास्माकं किं विद्याश्लाघायां बहुना रमणेन । विविध-रत्नलुब्धेष्वत्यन्तेन रत्नानामनर्घ्यमूलत्वकीर्तनेन किं प्रयोजनम् ॥५॥

परन्तु यथामत्यविस्तरेण विद्याप्रशंसा क्रियते । अथ धीमतः परमेश्वरस्य विधानेन मनुष्यजातिरुत्तमाभिः स्मृतिविचारानुमानकल्पनादिभिर्धीशक्ति(भि) र्विशिष्टा ।

ताश्च धीशक्तयो ज्ञानोपार्जनादिषु प्रशस्तासु क्रियासु प्रयोज्या इति ईश्वरस्याभिप्रायः प्रतिभाति। विद्याभ्यासेन तासां धीशक्तीनां प्राबल्यं परिष्कारश्च सांसारिकगुरुव्यापारसिद्धये च सामर्थ्यं जन्यते। यथा व्यायामेन मल्लस्याङ्गानि बलीयांसि भवन्ति, तथैवाभ्यासेन शक्तिमती भूत्वा शेमुखी ( धी ) सत्य-प्राप्तयेऽसत्यखण्डनाय च कल्पते ॥६॥

अन्यच्च फलान्तरमिदम्—

स्वकीय-परकीय-हितसम्पादकानां नानाविधैहिकसुखानां वर्धनार्थमुपाय-दर्शयित्री विद्यैव । सर्वापेक्षया च महोत्तमं फलमेतत् ॥७॥

शास्त्राध्यापनात्कर्त्तव्याकर्त्तव्ययोर्विषये ज्ञानस्योदयो भवति, विशेष-तश्च स्मरणीयमेतत् । आचरणेनासंयुक्तं ज्ञानमात्रं निष्फलम् । यदा तु कर्त्तव्या-कर्त्तव्ये निश्चित्य को (पि) तदनुसारतः कर्माण्याचरति तदैव तज्ज्ञानं तेन सफली-क्रियते नचान्यथा ॥८॥ इति सामान्येन संक्षेपतो विद्याभ्यासफल-निरूपणम् ।

अथैतद्देशीयविद्यानुशीलनाद्विशेषफलसिद्धिर्भवति । तामपि कथयामि । भारतीयानि नानाशास्त्राणि प्राचीनत्वादतिपूज्यानि । तत्तत्कर्तृणाञ्च तत्तद्रचने महती बुद्धिसूक्ष्मता प्रकाशते । द्विसहस्राब्दात्प्राक् भारतवर्षवासिनां विपश्चितां ज्ञानकीर्ति रितो दूरवर्तिष्वपि प्राक्तेनषु ज-( य ) वनेषु रौम्येषु च प्रतिपादिता इति तदीयशास्त्रेभ्यः प्रतीयते । तथाधुनिकैश्चेङ्गलण्डीयादिभिर्यूरोपाख्यमहाद्वीपवासिभिः पण्डितैरेतद्देशीयशास्त्राणां परिचयोऽभीष्टो जातः । वस्तुतस्तु संस्कृतवाण्या व्याकरणमतीवपरिपक्वम् ।

तत्सम्पन्नता च सर्वदेशीयानां तद्वेतॄणाञ्च सम्मता । तथैव कालिदासपुरःसरकवीनां कल्पनशक्ती रचनासुख-( ष ) मा रसज्ञता च प्रसिद्धा ॥९॥१०॥

अपरञ्च षड्दर्शन प्रवर्त्तकानां बुधानां तथा भास्कराचार्यादीनां ज्योतिर्विदां बुद्धिकौशलं सकलेषु विवेकिषु सुकीर्त्तितम् ।

अतः संस्कृतोक्तिषु पाटवलाभाय बुद्धेः शक्त्येधनार्थञ्च एतद्देशीयैस्तरुणैः स्वदेशीयविद्याभ्यासः कर्त्तव्यः ॥११॥

यद्यपि तत्तद्देशीयैस्तत्तद्देशीयविद्याऽवश्यमभ्यस्तव्या इत्यर्थः प्रतिपादितस्तथापि विदेशीयविद्यानामुपेक्षा धीमद्भिः कर्तुं न युज्यते । यतो यद्वदहस्कर (:) पृथिव्यां सर्वेषु देशेषु प्रकाशमानः स्वकीयतापेन तत्र तत्र भिन्नभिन्नफलानि परिपाकमानयति, तद्वत्सर्वदेशीयमनुष्येषु परमेश्वरस्यानुग्रहप्रकाशात्सर्वदेशीया जनाः स्वबुद्धिशक्तिप्रयोगाद्भिन्नभिन्नप्रकारेण नानाविद्यासु सिद्धिं प्राप्तुं शक्नुवन्ति । यथा च विदेशीयविविधखाद्यादिद्रव्याणामुपभोगाच्छारीर-( रि ) कसुखवृद्धिर्जायते, तथा विदेशीयविद्यारूपद्रव्यभोगाद् बुद्धेरपि पुष्टिं (ष्टिः) सम्भवति । अतोऽत्र विद्यार्थिनां विदेशीयविद्यानां यथारुच्यनुशीलनमुचितम् । यतः

सर्वः सर्वं न जानाति सर्वतो ( ज्ञो ) नास्ति कश्चन ।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥१॥

अतः स्वदेशे कस्याश्चिद्विद्यायाः स्थितिर्नास्तीति ज्ञात्वा तस्य विद्याविशेषस्य देशान्तरशास्त्रेषु मार्गणं कर्त्तव्यम् । विशेषतस्तु भारतवर्षवासिनाम् इङ्लण्डीयैः सह सम्बन्धादेतद्देशीयास्तत्रत्यविद्यानामन्वेषणम् (?) तथेङ्लण्डीयभाषायाः परिचयश्च (?) चेष्टितुमर्हन्ति ॥१२॥

अपरञ्चात्र काश्यां भारतीयविद्यारूपसाम्राज्यस्य राज्य-(ज) धान्यामिव एतद्विद्यालयस्थैश्छात्रै र्विद्यानुशीलनं विशेषयत्नैःकर्त्तव्यम् । इतश्च यथा विद्यार्थिनां संख्या क्रमशो वृद्धिम्प्राप्नुयात्तथा मदीया कांक्षा ॥१३॥

अपरञ्च—यद्यदुपायप्रयोगेण पाठशालाया अभ्युदयः प्रवर्द्धनीयः स उपायो यत्नतः प्रयोक्ष्यते ॥१४॥

सम्वत् (?) १६०१ वैशाखशुक्लतृतीया, ३ ता० २०, माह अप्रैल सन् १८४४ ईसवी ।

[ लेखकमहोदयानां सम्मत्या 'सुप्रभाते' प्रकाशितमपि पुनः प्रकाश्यते स० सम्पादकः ]



## ❀ ब्राह्मणस्य श्रेष्ठत्वं जन्मना वर्णव्यवस्था च ❀

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः ।

( स० ध० कालेजोपाध्यक्षः, मुलतान )

[ अधुना पूर्वनिश्चयाऽनुसारमस्माभिः 'सूर्योदय'-पाठकानां समक्ष वर्णव्यवस्थाविषयः समुपन्यस्यते । अत्र च सनातनधर्म्मपक्षस्य मण्डनं तदितरपक्षस्य च खण्डनं विधीयते । पाठका अत्राऽवदधतु ]

सनातनधर्म्मसिद्धान्ते वर्णव्यवस्था जन्मतोऽस्ति; न गुणकर्मणा। गुणकर्मणा तु आदरः सम्मानो वैव, नतु वर्णपरिवर्त्तनम्। शोभनगुणकर्म्मवानपि श्रीकृष्णो युधिष्ठिरश्च × क्षत्रियावस्थितौ; न ब्राह्मणवर्णतां भेजाते। महात्मत्वेन अद्यतनैर्जनैर्मतः श्रीमोहनदासगान्धिर्वैश्य एव न ब्राह्मणवर्णे परिवर्त्तितः। कबीरादयश्शोभनगुणकर्म्माणोऽपि शूद्रादय एव मताः। फलतो वर्णव्यवस्था जन्मनैव, लोकसम्मानो * गुणकर्मणा। यदि च तत्तद्वर्णः स्वस्वनियतगुणकर्म्मयुक्तोऽपि भवेत्तदा तु सुवर्णे सुगन्धः

×'घृणी ब्राह्मरूपोऽसि कथं क्षत्रेषु जायथाः' महा० वन० ३५।२० इति भीमस्य युधिष्ठिरं प्रत्युक्तिः। इति ब्राह्मणयोग्यत्वेपि युधिष्ठिरस्य क्षत्रियताव्यवहारो जन्मना वर्णव्यवस्थापयति। एवं श्रीकृष्णविषयेऽप्यवसेयम्।

* सम्मानः-घञन्तत्वात् पुंसि

यागः स्यात् । वयमत्र विषये यद्—जन्मना वर्णव्यवस्था भवति न गुणकर्म्मणा'—'सूर्योदय'-पाठकानां सेवायां वेदादिशास्त्राणां मतं समुपन्यस्यामः । तथा हि—

'ब्राह्मण एव पतिर्न राजन्यो३न वैश्यः । तत्सूर्यः प्रब्रुवन्नेति पञ्चभ्यो मानवेभ्यः' अथर्व० ५।१७ ९ अत्र राजन्यवैश्यानां स्वामित्वयोग्यताप्राप्तिसम्भवे एव तत्स्वामित्वं व्युदस्तम् । प्राप्तौ सत्यां हि निषेधो भवति । तत एव त्वत्र शूद्रस्य नाममात्रमपि नाऽऽत्तम् । यदि राजन्यवैश्ययोः स्वामित्वयोग्यताप्राप्तिर्नाभविष्यत्तर्हि शूद्रस्येव तयोर्निषेधो न कृतोऽभविष्यत् । 'षष्ठजार्ज एव भारतसम्राट्, न तु कल्लूचर्मारः' इति वाक्यं न घटते, योग्यताऽसत्त्वात् । 'षष्ठजार्ज एव भारतसम्राड्, न तु जर्मनकैसरः' इति वाक्यं तु घटते । योग्यस्य तत्ताप्राप्तौ तन्निषेधात् । अत एतद्वेदमन्त्रेण गुणेन साम्येपि राजन्यवैश्ययोरधिकारं व्युदस्य, ब्राह्मणस्य च तं प्रस्तुत्य जन्मनैव वर्णव्यवस्थानुमोदिता, जन्मनैव च ब्राह्मणस्य श्रेष्ठता मता । एतदनुवादभूतश्लोकाविमौ—'ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम् । पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता' मनु० २।१३५ 'क्षत्रियः शतवर्षी च दशवर्षी द्विजोत्तमः । पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणो गुरुः' महाभारतेऽनुशासनपर्वणि ८।२१। यद्युक्तमन्त्रे पतिशब्दस्य धवार्थे ं क्रियेत; तर्हि जागत्कसर्वस्त्रीणां ब्राह्मण एव धवो भवेन्नतु क्षत्रियादिरित्यनर्थापत्तिः । यदि ब्राह्मण्या एव ब्राह्मणपतिरत्र निर्दिष्टस्ततोऽपि जन्मना वर्णसिद्धिः । अत्रोभयों ं पतिपत्न्योर्जन्मना ब्राह्मणत्वमेव, न तु गुणकर्म्मकृतब्राह्मणत्वम् । अन्यथा जातु स्त्रियां पुरुषस्य वा गुणकर्म्मभेदे जाते तस्याः स्त्रिया अन्यस्मै तादृग्गुणवते पत्ये दानमापतिष्यति, सवर्णास्त्रीनियमात्; परमनिष्टमेतत् । अन्यो मन्त्रः—

'आ ब्रह्मन् ! ब्राह्मणो ब्रह्मवर्चसी जायताम्, आ राष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो जायताम् । दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः' यजुः २२।२२ यदि गुणकर्म्मकृतवर्णव्यवस्था वेदाभीष्टाभविष्यत्तर्हि ब्राह्मणस्य कृते ब्रह्मवर्चसप्रार्थना नाभविष्यत् किन्तु मनुष्यमात्रस्य कृते । ब्रह्मवर्च्चसयुक्तस्यैव ब्राह्मणत्वात्तन्मते तत्प्रार्थना वैयर्थ्यमवद्यत् । 'ब्राह्मोऽजातौ' ६।४।१७१ पा० इति अपत्ये जातौ ब्राह्मणो भवति । एवं शूरादिगुणवत एव यस्य कस्यचित् क्षत्रियत्वे 'राजन्यः शूरो जायतामिति प्रार्थना विफला । यतः शूरत्वादिगुणात्तु तदीया पदवी क्षत्रिय इति जाता वादिमते । तर्हि पुनस्तदर्थं 'शूरो भवेदिति प्रार्थना कैमर्थिकी ? । तेनेदं सिद्धं

यद्-वेदः क्षत्रियं जन्मना मन्यते, तदर्थं शूरतादि प्रार्थनां कारयति । 'राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम्, राजन्यो नाम जातिः' महाभाष्ये ४।१।१३७ अत्र कैयटः—'राजशब्दः क्षत्रियशब्दपर्यायः, तेन क्षत्रियजातौ प्रतिपिपादयिषितायां राजन्यशब्दप्रयोगः'। अत्र गुणकर्म्मणां नामैव न, मन्त्रे राजन्यशब्दः । उक्तमन्त्रे ब्राह्मणम्—'ब्राह्मण एव ब्रह्मवर्चसं दधाति, तस्मात् पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे' शतपथे १३।१।६।१ 'राजन्य एव शौर्यं महिमानं दधाति, तस्मात्पुरा राजन्यः शूर इषव्योतिव्याधी महारथो जज्ञे' १३।१।६।२। 'तस्मात् पुराधेनुर्दोग्ध्री जज्ञे' ।३। 'पुराऽनड्वान् वोढा जज्ञे' ।४। 'तस्मात् पुराऽश्वः सप्तिर्जज्ञे' १३।१।६।५ इत्यादि ।

अत्र ब्राह्मणस्य ब्रह्मवर्चसित्वं, क्षत्रियस्य च शूरादिकत्वमुक्तम्; न तु ब्रह्मवर्चसिनो ब्राह्मणत्वम्, शूरस्य च क्षत्रियत्वमिति विचार्य्यम् । अथ च ब्राह्मणस्य ब्रह्मवर्चसी, क्षत्रियस्य शूर इत्यादीनि च विधेयविशेषणानि । यच्चात्र-'हे परमात्मन् ! अस्मद्-देशे ब्रह्मवर्चसवन्तो × ब्राह्मणा उत्पद्येरन्, शूराश्च क्षत्रिया उत्पद्येरन्निति प्रार्थनापि मन्येत; तथापीमे विशेषणे तयोरर्थे स्याताम्, यदि जन्मसिद्धवर्णव्यवस्था न मन्येत ।

यदीह 'ब्रह्मवर्चसी ब्राह्मणो भवति, शूरः क्षत्रियो भवतीति विपरीतार्थं क्रियेत; सोऽपि न युक्तः प्राक् त्वयमर्थोऽत्र न भवितुमर्हति । यदि क्लिष्टकल्पनयाऽत्र सोऽर्थं क्रियेताऽपि; तर्हि 'दोग्ध्री-धेनुः, वोढाऽनड्वान्, आशुः-सप्तिर्जायताम् इत्यादिष्वपि अतिप्रसङ्गः । तदा तु या दोग्ध्री भवेत्; सा धेनुपदवाच्यैव स्यात्; तर्हि तु अजामहिषीशुनीप्रभृतयोऽपि धेनवः स्युः । वोढारो भारवाहका ( कुली, मजदूर ) अपि अनड्वाहः स्युः । शीघ्रगन्तारं पुरुषा अपि सप्तयः ( अश्वाः ) स्युः; परमनिष्टमेतत् । तेनाऽमुना मन्त्रेण जन्मना वर्णव्यवस्था निष्पन्ना ।

किञ्च—गुणकर्म्माणि तु काले काले सङ्गत्यादिना वा परिवर्त्तन्त एव, यतोहि-'चलं गुणवृत्तमिति चाऽस्त्यभ्युपगमः' वेदान्तदर्शने शाङ्करभाष्ये' २।२।६ तर्हि पुरुषं कदाचिद् ब्राह्मणं कदाचित् क्षत्रियादिः स्यात् । प्रतिसमयं स्वगुणकर्म्मपरिवर्तने सवर्णास्त्रीसाहचर्य्यस्य शास्त्रीयत्वात् स्वस्त्रियमपि पुनं पुनं परिवर्तयेत्, पुत्रादिकमपि च परिवर्तयेदिति महत्यव्यवस्था स्यात् । जन्मना वर्णव्यवस्थापने तु न भवति कोऽप्युपप्लवः । अथचैतद् ब्राह्मणादियोनिजन्म पूर्वजन्मकर्म्मणा भवति । अस्मिञ्जन्मनि वर्णादिपरि-

× ब्रह्मवर्चस-वन्तः । अत्र 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् प्रत्ययः ।

वर्तनेतु पूर्व्वजन्मकृतकर्म्मणां वैयर्थ्यापत्तिः । अत एव 'सति मूले तद्विपाको जात्यायुर्भोगाः' योगदर्शन० २।१३ इति सूत्रं सङ्गच्छते । जाति ब्राह्मणत्वादिः ।

आर्यसमाजिका कथयन्ति यत्-कृतं कर्म्म कदाऽपि निष्फलं न भवति इति । तर्हि पूर्व्वजन्मकर्म्मफलस्वरूपं त्विदं वर्तमानब्राह्मणयोन्यादिजन्म जातम् तस्मिन्नपि जातिपरिवर्तने पतितानाञ्च पञ्चकलात्मकशुद्धौ पूर्व्वजन्मकर्म्माणि व्यर्थानि स्युः । स्वा० दयानन्दोऽपीदं वर्तमानजन्म पूर्व्वजन्मकर्म्मणैव मेने इति द्रष्टव्यम् । तथा च 'पूर्वजन्मके पुण्यपाप के अनुसार वर्त्तमान जन्म, और वर्तमान तथा पूर्वजन्म के कर्मानुसार भविष्यत् जन्म होते हैं, सत्यार्थप्र० नवमसमुल्लासे पृ० १५६ । एतद्विषये पृथग्लेखेऽधिकं विशदीक्रियेत । किञ्चिद् विशदीकरणं 'सूर्योदय'स्य ३।२४ अङ्के मल्लेखे द्रष्टव्यम् ।

स्वा० दयानन्दमते-'अस्य पुरुषस्य (ईश्वरस्य) ये विद्यादयो मुख्यगुणाः, सत्यभाषणोपदेशादीनि च कर्म्माणि सन्ति; तेभ्यो ब्राह्मण उत्पन्नो भवति' ऋग्वेदादिभाष्यभूमिका पृ० १२७ इत्यादिना ईश्वरस्य मुख्यप्रशस्तगुणेभ्यो ब्राह्मणस्योत्पत्तिर्भवति । तत् किमीश्वरस्य मुख्यप्रशस्तगुणा कदाचिन्निकृष्टा अपि भवन्ति ? येन ब्राह्मणो भवन्मते शूद्रो जायते । एवं सति धन्यानि भवदीश्वरगुणकर्म्माणि; यानि निकृष्टतामपि भजन्ति ।

'यथेमां वाचं इति मन्त्रेण स्वा० दयानन्दश्चतुर्णां वर्णानामीश्वरकर्तृकं वेदपाठनमाचष्टे । यद्यप्ययमर्थश्चिन्त्यः; तथापि तदनुसारं जन्मना वर्णव्यवस्था सिद्ध्यति । ईश्वरो ब्राह्मणक्षत्रियवैश्यशूद्रेभ्यो वेदवाणीमुपदिशति-इति तदुक्त्या प्रतीयते यद् ईश्वरकर्तृकवेदाध्यापनारम्भात् पूर्व्वमेव तेषां ब्राह्मणक्षत्रियवैश्यशूद्रा इति सञ्ज्ञाऽऽसीत् ॥ यदीयं सञ्ज्ञा प्राङ् नासीत्, तर्हि स ब्राह्मणशूद्रादिकमपाठयदिति कथं ज्ञातं स्वामिना । अत्र विषये विशिष्टस्पष्टता 'संस्कृतरत्नाकरे' ३।७ अङ्के मल्लेखे द्रष्टव्या ।

स्वा० दयानन्देन सन्ध्यारम्भे 'शंनोदेवीरभि-' इत्याचमनं निर्दिष्टम् । आचमनस्य च फलं कफनिवर्तनमुक्तम् । मनुना—'हृद्गाभिः पूयते विप्रः, कण्ठगाभिस्तु भूमिपः । वैश्योऽद्भिः प्राशिताभिस्तु, शूद्रः स्पृष्टाभिरन्ततः' २।६२ इति चातुर्वर्ण्यस्य भेदादाचमनस्याऽपि भेदो निर्दिष्टः । अधुना स्वामिना वाच्यं यत्—सन्ध्यासमये ब्राह्मणादीनां कफेऽपि किं तारतम्यं भवति ? । यदि भवत्यत एवाऽऽचमनभेदः; तर्हि स कफभेदो गुणकर्म्मणा भवति जन्मना वा ? यदि गुणकर्म्मणेति; तन्मन्दम्, कफस्य गुणकर्म्मणा कः सम्बन्धः ? । यदि जन्मना कफभेदाद् आचमनभेद उच्येत, आचमनभेदश्च वर्ण-

भेदाद्; वर्णानां कफभेदाच्चाऽऽचमन—जले न्यूनाधिक्यभेदः; तर्हि जन्मना वर्णः सिद्धः; यत् कफतारतम्यं जन्मनैव भवितुमर्हति । यदि सन्ध्याकाले कफतारतम्यं न भवति; तर्हि कफनिवर्तनमाचमनफलं निरस्तम्, सेयमुभयतस्पाशारज्जुः । अधुना जन्मना वर्णव्यवस्थाविषये वेदो द्रष्टव्यः ।

'ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः । ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत' यजुः ३१।११ अथर्ववेदे १९।६।६, ऋग्वेदे १०।९०।१२ अत्र पद्भ्यां शूद्रो अजायत' इत्युपसंहारवाक्येन 'चन्द्रमा मनसो जातः' इति-अग्रिममन्त्रनिकरेण च ब्राह्मणादीनां परमात्मनस्तत्तदङ्गेभ्य उत्पत्तिः प्रदर्शिता, सृष्टिप्रकरणान्तर्गतत्वादस्या ऋचः । तथाहि—'सहस्रशीर्षा' इति पुरुषसूक्ते विराट्पुरुषं प्रस्तुत्य प्रथमं तत्कर्तृकं सकलसृष्टिव्यापकत्वम् 'अत्यतिष्ठद्दशाङ्गुलम्' य० ३१।१ इति तस्य सृष्ट्यपेक्षया महत्तरत्वञ्च दर्शयित्वा 'ततो विराडजायत' ३१।४ इति ततो ब्रह्माण्डोत्पत्तिराख्याता । एवमग्रे भूमिशरीरवन्यग्राम्यपश्वाद्युत्पत्तिः,ऋग्वेदाद्युत्पत्तिः, अश्वादिसृष्टिश्च निर्दिष्टा । अस्य विराजो मनसश्चन्द्रमाः, चक्षुषः सूर्यो मुखादग्निरित्यादीनां देवानामुत्पत्तिर्दर्शिता । अत्र 'जातः, अजायत, जज्ञिरे' इत्यादिक्रियाः साक्षिण्यः । 'ब्राह्मणोऽस्य मुखमासीद्' इत्यत्र तु कार्यकारणयोर्जन्यजनकयोर्वाऽभेदेनोपचारो दर्शित 'आयुर्घृत' मित्यादिवत् । 'घृतादायुष उत्पत्तिर्भवतीति वक्तव्ये 'आयुर्घृतम्'इति शुद्धलक्षणयोच्यते । एवम् 'आत्मा वै पुत्रनामाऽसि' शतपथ० १४।९।४।२६ इति पितापुत्रयोरभेदेन परामर्शो विधीयते । तथैव 'ब्राह्मणोऽस्य मुखमासीद्' इत्यादावपि जन्यजनकयोरभेदेन कथनं तस्मात्तस्योत्पत्तिं प्रत्याययति । अथ च एकस्मादेव विराज उत्पन्नानामपि वर्णानामुच्चावचत्वं पूर्वजन्मकर्मवशादुत्पत्तिस्थानभूतमुखबाह्वाद्यङ्गोपाधिवशाद् ब्राह्मणादीनामपि मिथ उच्चावचता जन्मसिद्धा सिद्ध्यति । इत्थमुत्पत्तिस्थाननिबन्धनत्वाद् वर्णभेदानामुत्कृष्टाऽपकृष्टत्वव्यवहारोऽपि सिद्धः ।

एतदर्थस्यैव पोषकाणि बहूनि प्राचीनप्रमाणान्युपलभ्यन्ते । तथाहि—'ब्राह्मणो मुखतः सृष्टो ब्रह्मणो राजसत्तम ! बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य एव च । वर्णाश्चतुर्थः सम्भूतः पद्भ्यां शूद्रो विनिर्मितः' महाभारते शान्तिपर्वणि ७२ । ४-५ । 'सच महेश्वरेण विनियुक्तो……मुखबाहूरुपादतश्चतुरो वर्णानन्यानि चोच्चावचानि भूतानि सृष्ट्वा' प्रशस्तपादभाष्ये द्रव्यग्रन्थे । 'ब्राह्मणो मनुष्याणाम्, तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त, तैत्तिरीय सं० ७।१।४।९। 'यस्मादेते मुख्यास्तस्मान्मुखतो ह्यसृज्यन्त' इति वचनं शतपथब्राह्मणनाम्ना स्वा० दयानन्देन स० प्रकाशे ५२पृष्ठे प्रोक्तम् । 'मुखबाहूरुपज्जानां'

मनु० १।८७ 'लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्तयत्' मनु० १।३१ 'तं (ब्राह्मणं) हि स्वयम्भूः स्वाद् आस्यात् तपस्तप्त्वाऽऽदितोऽसृजत्' मनु० १।९४। 'यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान् मुखतोऽसृजत् । क्षत्रियान् बाह्वोर्वैश्यानप्यूरुदेशतः । शूद्रांश्च पादयोः सृष्ट्वा तेषाञ्चैवानुपूर्वशः' हारीतस्मृति० १।१२-१३ । ईदृश एव भावः ताण्ड्यब्राह्मणे ६।१।३। श्रीमद्भागवते ११।७।११, ब्रह्मवैवर्त्ते ब्र० खं० १ तथा विष्णुपुराणे २१।६ एतदादिकग्रन्थेषु वर्णितः । एतदादिना जन्मना ब्राह्मणादिवर्णव्यवस्था सिद्धा । मुखादौ च जन्म पूर्वजन्मकर्मवशाज्जातम् । ततश्च तेषामेव ब्राह्मणादीनां पुत्रा अपि 'सकृदाख्यातनिर्ग्राह्या' इति ब्राह्मणादिजातीया बभूवुः । अत्र ऐहिकगुणकर्मणां कारणता न दृष्टा । तैस्तु वर्णेषु श्रेष्ठता प्रपद्यते । गुणकर्माणि वर्णान् न जयन्तीति मीमांसादर्शने १।२।१३ द्रष्टव्यम् ।

अथ च 'यस्य ब्रह्म ( ब्राह्मणं ) मुखमाहुः' अ० १० ७।१९ इत्यादिकस्य 'ब्राह्मणोऽस्य परमात्मनो मुखं, राजन्यो बाहुः, ऊरू वैश्यः, पादौ शूद्रः, इत्यर्थमतनेऽपि नाऽस्माकं हानिः; यतो मुखं-बाहू ऊरू पादौ वा, बाहुर्मुखमूरू पादौ वा, ऊरू-मुखं बाहू, पादौ वा, पादौ मुखबाहूरवो वा यथा न भवितुं शक्ताः; तथा ब्राह्मणादिका अपि ब्राह्मणादिका एव तिष्ठन्ति, नत्वन्यजातीया भवन्तीति प्रकृतेऽप्यवसेयम् ।

अधुना ब्राह्मणस्य श्रेष्ठताप्रदर्शका मन्त्रा उपन्यस्यन्ते ।–मनुना लिखितम्– 'तापसा यतयो विप्राः प्रथमा सात्विको गतिः' १२।४८ 'राजानः क्षत्रियाश्चैव मध्यमा राजसी गतिः' १२।४६ 'हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः । तामसीषूत्तमा गतिः' १२।४३ अत्र पूर्वजन्मकर्मणैव ब्राह्मणादिजन्म तदीयोत्तममध्यमत्वादिकञ्च प्रोक्तम् । ब्राह्मणस्योत्तमत्वादेव 'ब्रह्मभ्यो विभजावसु' अथर्व० १४।१।२५ इति तेभ्यो धनदानं वेदेन आज्ञप्तम् । 'ब्रह्म हि ब्राह्मणः' शतपथे ५।१।१।११, ५।१।५-२-४-८-११ । 'यद्वीं ब्रह्मभ्य इद्ददः' ऋ० ८।४५। ३९ त्वं ब्राह्मणेभ्य एव धनं ददासीत्यर्थः । एतदर्थमेव 'ब्राह्मणान् भोजयित्वा' गोभिलगृह्यसूत्रे ३ ४।२४ इत्यादि । 'अन्नं ब्राह्मणेभ्यः' आश्वलायनगृह्यसूत्रे १।८।१४ 'ब्राह्मणान् भोजयित्वा' आश्व०गृ० १।२२।१६ इत्यादि, 'ततो ब्राह्मणभोजनम्' पारस्करगृह्यसूत्रे १।२।१३ इत्यादि । 'ब्राह्मणान् भोजयित्वा' आपस्तम्बगृह्यसूत्रे ६।१६।१ इति च दृश्यते । 'आस्यै ब्राह्मणाः स्नपनीर्हरन्तु' अथर्व० १४।१।३९ इति विवाहसमये वध्वां जलाऽभिषेको ब्राह्मणकर्तृकः कथितः । एतेनाऽन्येषां विवाहसंस्कारो ब्राह्मणैरेव कारयितव्यो नत्वब्राह्मणैः पाठ्य इति सिद्धम् ।

'देवा वशामयाचन् मुखं कृत्वा ब्राह्मणम्' अथर्व० १२।४।२० अनेन मन्त्रे प्रतीयते-देवादिकाय यद् दीयते, तद्ब्राह्मणद्वारा । अदाने सति -'तेषां सर्वेषा मददद्धेडं न्येति मानुषः' अ० १२।४।२० इत्युत्तरार्द्धद्वारा दुरवस्था प्रदर्शिता। 'ब्राह्मणोऽधिपतिः' अथर्व० १२।५।४ अत्र ब्राह्मणस्य स्वाम्यम् । 'ब्राह्मणः पुरोहितः' ऐतरेयब्राह्मणे ८।५।४ ( २७ ) इति ब्राह्मणस्य पुरोहितत्वार्हता ।

'यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः' ऐतरेये ८।५ ३ अत्र ब्राह्मणस विद्वानिति विशेषणाज्जन्मसिद्धा वर्णव्यवस्था ऐतरेयब्राह्मणस्याऽप्यभीष्टा गुणकर्म्मकृतत्वे तु विदुष एव ब्राह्मणत्वस्वीकाराद् 'विद्वान्' इति विशेष व्यर्थम्, 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' । यतस्तेषां वादिन मते विदुष एव ब्राह्मणत्वस्वीकारे पुनर्ब्राह्मणेन सह विद्वानितिविशेषणदानस्या वश्यकता नास्ति; यतो न तत्र व्यभिचारप्रसक्तिः; विदुष एव तेषां मते ब्राह्मण त्वस्वीकारात् । व्यभिचारस्तु तदा; यदाऽविदुषोऽपि ब्राह्मणत्वं स्वीक्रियेत ताद्दृशाऽविद्वद्ब्राह्मणाऽपसारणायैव ऐतरेयकण्डिकायां 'विद्वान्' इति विशेष दानावश्यकता । तेन सिद्धं यद् ब्राह्मणोऽविद्वानपि ब्राह्मणो भवति । तदैव 'विद्वान्' इति विशेषणं सार्थकम्; तेन जन्मना वर्णः सिद्धः । 'मनुष्येण दयानन्दे नियोगँ प्रवर्त्तितः' अत्र वाक्ये 'दयानन्द' स्य 'मनुष्य' इति विशेषणं तदा सार्थ क्यमेतुमर्हति; यदा कस्यचित् पशोरपि 'दयानन्द' इति नाम स्थापितं स्या 'अश्वत्थामा हतो नरः' इति 'नर' विशेषणवत् । अन्यथा 'दयानन्दस्य' 'मनुष्य' इति विशेषणं व्यर्थम् । एवं 'विद्वान् ब्राह्मणः' इति विशेषणेऽप्यूह्यम् । एवं 'विद्वांसं ब्राह्मणम्' अथर्व १३।३।१ 'विद्वांसं ब्राह्मणं' अ० १३।३।२५ । अत्राऽपि ब्राह्मणस्य 'विद्वांसम्' इति विशेषणं साधयति यद्-वेदोऽविद्वांसमपि ब्राह्मण ब्राह्मणं मनुते । अन्यथा 'विद्वान्' इति तद्विशेषणं व्याहतं पुनरुक्तं वा स्यात एवं वेदो 'ब्राह्मण' स्य क्वचिद् 'विद्वान्' इति विशेषणं ददाति, क्वचिच्च नाऽ ददाति; तेन स्पष्टं सिद्धं यद्—वेदमते विद्वान् अविद्वांश्चोभयथाऽपि ब्राह्मणः यत्र विदुषो ब्राह्मणस्याऽऽवश्यकतां वेत्ति; तत्र तद्विशेषणमर्पयति । यत्र सर्व साधारणस्य पठिताऽपठितस्य ब्राह्मणस्य भवत्यावश्यकता; तत्र 'विद्वान्' इति विशेषणं नोपनयति—इत्युन्नेयम् । अतएव 'कुगतिप्रादयः' २।२।१८ इति सूत्रे महाभाष्ये 'सिद्धं तु क्वाङ्स्वतिदुर्गतिवचनात्' इति वार्त्तिकस्योदाहरणे 'कु ब्राह्मणः, कुवृषलः, सुब्राह्मणः, सुवृषलः, अति ब्राह्मणः, अतिवृषलः, दुर्ब्राह्मणः दुर्वृषलः' इति, 'दुर्निन्दायाम्' 'कुः पापार्थे' इति वार्त्तिकोदाहरणे च 'कुब्राह्मणः कुवृषलः' इत्याद्युदाहरणं दत्तम् । यदि शुभगुणकर्म्मवत्वादेव ब्राह्मणोऽभविष्यत

तर्हि तस्य 'कु' त्वं 'दुष्ट्व' ञ्च नाऽभविष्यत, असम्भवात्। न चाप्यव्यभिचार-कारणात् 'सु' त्वं प्रदर्शनीयमभविष्यत्। एवं दुष्टगुणकर्म्मवतश्शूद्रत्वे 'उत्तम शूद्र जनों को' इति सत्यार्थप्रकाशे ३ समु० पृ० ३१ स्वा० दयानन्ददत्तं शूद्रस्य 'उत्तम' इति विशेषणं व्यभिचरति। तेन सिद्धं यद् जन्मना भवति वर्ण व्यवस्था; परं तत्तद्वर्णस्य गुणकर्म्मभिस्तु 'सु' 'कु' त्वमेव भवति, न वर्णपरिवर्त्तनम्।

यदि विद्वत्तया क्षत्रियादिकस्य ब्राह्मणत्वं वेदाऽभीष्टमभविष्यत्; तर्हि 'अग्नेर्यः क्षत्रियो विद्वान् नाम गृह्णात्यायुषे' अथर्व० ६।७६।४ अत्र 'विद्वान् क्षत्रियः' इति नाऽभविष्यत्; किन्तु ब्राह्मण शब्द एव तत्कृते उपात्तोऽभविष्यत्॥

एवं 'भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः। ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृत-बुद्धिषु कर्त्तारः कर्तृषु ब्रह्मवेदिनः' मनु० १।९६-९७ यदि विद्वत्तया ब्राह्मणोऽभवि-ष्यद्वादिमताऽनुसारम्; तर्हि 'नरेषु ब्राह्मणाः स्मृताः' इत्येव पर्य्याप्तमासीत् कथ-नम्। ततो 'ब्राह्मणेषु च विद्वांसो ब्राह्मणाः श्रेष्ठाः, विद्वत्स्वपि ब्राह्मणेषु कृत-बुद्धयो ब्राह्मणाः श्रेष्ठाः, कृतबुद्धिष्वपि ब्राह्मणेषु कर्म्मकर्त्तारो ब्राह्मणाः श्रेष्ठाः, कर्तृस्वपि ब्राह्मणेषु ब्रह्मवादिनो ब्राह्मणाः श्रेष्ठाः' इति कथनं 'नरेषु ब्राह्मणाः स्मृताः' इति प्राक्कथनेऽपि कथं पृथक् श्लोकेन कृतम्? तेनैतत्सिद्धम्, मनुष्येषु तु ब्राह्मणः—अर्थात् विद्वत्ता-कर्म्मादिहीनोऽपि स श्रेष्ठः। ब्राह्मणेषु तु विद्वांस् कर्म्मकर्तृप्रभृतयश्च ब्राह्मणाः श्रेष्ठाः। एवमेव श्रीमद्भागवतेऽप्युक्तम्—'ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः। ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः। अर्थज्ञात् संशयच्छेत्ता ततः श्रेयान् स्वकर्म्मकृत्। मुक्तसङ्गस्ततो भूयान् अद्रोग्धा धर्म्ममात्मनः' ३।२९।३१-३२। एतदर्थस्यैव पोषकपद्यानि "निर्दुग्धाऽपि च गौः पूज्या न च दुग्धवती खरी"। 'अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः'। 'दुश्शीलोऽपि द्विजः पूज्यो नतु शूद्रो जितेन्द्रियः। कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम्' पराशर० ८।३३। 'ब्राह्मणः सम्भवेनैव देवानामपि दैवतम्' मनु० ११।८४, व्यास० ४।४९। 'ब्राह्मणो जन्मना श्रेयान् सर्वेषां प्राणि-नामिह। तपसा विद्यया तुष्ट्या किमु मत्कलया युतः' भागवतपु० १०।८६।५३ इति भगवद्वचनम्। 'अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्' मनु० ९।३१७। इत्यादीनि विद्यन्ते।

एवमन्यान्यपि प्रमाणानि श्रूयन्तामत्र, तथा च—न्यायदर्शने १ अध्याये २ आह्निके 'सम्भवतोऽर्थस्याऽतिसामान्ययोगात्' इति १३ सूत्रस्य भाष्ये-व्रात्याऽपि ( उपनयनादि संस्काराभावेन विद्याऽभाववानपि ) ब्राह्मणः

स्वीकृतः । इतोऽप्यधिका स्पष्टता तत्रेत्थं निरूपिता—"ब्राह्मणत्वं विद्याचरणसम्पद् क्वचिदाप्नोति, क्वचिदत्येति" इति । मनुस्मृतौ-'अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः' ४।१९० अत्र तपोरहितस्य अनधीयानस्याऽपि 'द्विज' इति नाम मतम् । अदातुर्नाश० १९३ श्लोकेऽग्रिम जन्मनि मतो नेह लोके । 'एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्वकर्मसु । सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत्' मनु० ९।३१९। 'जातिमात्रोपजीवी वा कामं स्यात्+ब्राह्मणब्रुवः । धर्म्मप्रवक्ता नृपते र्नतु शूद्रः कथञ्चन' मनु० ८।२०। 'युगे युगे तु ये धर्मास्तेषु तेषु च ये द्विजाः। तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः' पराशर० ११।५२ । ब्राह्मणो जायमानो हि पृथिव्यामधिजायते । ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये' मनु० १।९९, महाभारत० शान्तिपर्व ७२ ६ अत्र लब्धजन्मनो द्विजन्मन ईश्वरत्वकथनाज्जन्मसिद्धवर्णव्यवस्था सिद्धा । 'उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती' मनु० १।९८। अत्र 'उत्पत्तिरेव इति 'एव' पदेन जन्मना वर्णव्यवस्था सिद्धा ।

'प्रब्रूयाद् ब्राह्मणस्त्वेषां नेतराविति निश्चयः' मनु० १०।१ 'इतरौ'—इत्यनेन क्षत्रिय वैश्ययोः पाठनादिसामर्थ्यं प्रदर्श्य तदधिकारं प्रच्याव्यते । 'ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनीषिभिः । राजन्यवैश्ययोस्त्वेवं नैतत्तत्कर्म्म विधीयते' मनु० २।१९० इत्थं मुनिमनुर्मनुतनुजनुषां जनुषा वर्णव्यवस्थां व्यवस्थापयति। अतः १०।१ श्लोकस्य पूर्वार्द्धः-'अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः' स्वकर्मस्था इत्यनेन परकर्म्मण्यप्रवृत्तिः सूचिता। इमानि पद्यानि साधयन्ति यद् गुणकर्म्महीनोऽपि ब्राह्मणो, ब्राह्मणो भवति, नतु शूद्रः । 'अब्राह्मणादध्ययनमापत्काले विधीयते' २।२४१ इति मनुपद्यमपि सङ्केतयति-यदध्यापनसमर्थोऽपि ब्राह्मणव्यतिरिक्तोऽब्राह्मण एव । अन्यथा पाठनसमर्थत्वेन विद्वत्त्वाद् अब्राह्मण कृते वाद्यनुसारं ब्राह्मणशब्दा एव प्रायोक्ष्यत । परं न प्रयुक्तः स शब्दः; तेन तस्य विद्वत्तादिकेऽप्यब्राह्मणत्वमेव । तेन जन्मना वर्णव्यवस्था सिद्धा। एतदग्रिमः श्लोकः-'नाऽब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्' मनु० २।२४२ अत्राऽपि विद्यापाठनसमर्थस्य ( विदुषः ) गुरोरपि कृतेऽब्राह्मणशब्ददर्शनाद् ब्राह्मण जाति व्यतिरिक्ते विद्वदादि गुणयुक्तेऽपि ब्राह्मणशब्दप्रयोगो न भवति सूच्यते । तेन जन्मना वर्णव्यवस्था सिद्धा मन्वभीष्टा । यतः स क्षत्रियादिमध्यापकमपि अब्राह्मणशब्द वाच्यं भणति ।

'उत्तमाङ्गोद्भवाज् ज्यैष्ठ्यात्......ब्राह्मणः प्रभुः' मनु० १।९३ इति जन्मसिद्धज्यैष्ठ्यकारणादेव ब्राह्मणस्येतर वर्णेभ्यः श्रेष्ठत्वं निगदितम्। 'एकदे'

होऽभवा वर्णाश्चत्वारोऽपि वराङ्गने ! पृथग् धर्म्माः पृथक्शौचास्तेषां हि ब्राह्मणो वरः, महाभारते आदि पर्व्वणि ८१।२० 'यस्मिन् ब्रह्मा राजनि पूर्व एति' ऋ० ४।५०।८ इति ब्राह्मणस्यैवोच्चता प्रदर्शिता। अत एवैतरेयब्राह्मणे—'तस्माद् राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत' ८।२४ 'यस्मिन् ब्रह्मा राजनि पूर्व्व एतीति पुरोहितमेवैतदाह; ऐतरेय० ८।२६। 'यो वरिवः कृणोति ब्रह्मणे राजा, तमवन्ति देवाः, ऋ० ४।५०।९ ब्रह्मा-ब्राह्मणः, तथा च—'ब्रह्म हि ब्राह्मणः' शत० ५।.।१। १।

'न ब्राह्मणं परीक्षेत दैवे कर्म्मणि धर्म्मवित्। पित्र्ये कर्म्मणि तु प्राप्ते परीक्षेत प्रयत्नतः' मनु० ३।१४९ अत्र प्राग् अपरीक्षयाऽपि ब्राह्मणस्य ब्राह्मणता निर्दिष्टा। अग्रे पितृकार्य्ये च प्रयत्नतः परीक्षणं निर्दिष्टं ब्राह्मणस्य। अत्राऽपि जन्मनैव ब्राह्मण इष्टः। अन्यथा 'प्रयत्नतः' इति पदं व्यर्थं भवति; गुणकर्म्मकृत-ब्राह्मणस्तु शीघ्रमेव प्रतीयते, न तत्र प्रयत्नावश्यकता। प्रयत्न एतदर्थमादिष्टो यत् स स्वं ब्राह्मणमाचक्षाणः स्यात्; परं स्याद् अब्राह्मणस्य पुत्रः; तस्य प्रयत्नतः परीक्षणं कार्य्यम्। गुणकर्म्मकृतब्राह्मणत्वे तु परीक्षणेनैव प्रतीयते; तत्र प्रयत्नतः परीक्षणस्य नावश्यकता भवति। अथ चात्रैतदपि प्रष्टव्यं यत्-तं कः परीक्षेत ? श्राद्धकर्म ब्राह्मणेनापि कर्त्तव्यं क्षत्रियवैश्यादिनाऽपि। ब्राह्मणस्तु तादृशं कथ-ञ्चित् परीक्षितुं शक्तोऽपि; परं क्षत्रियवैश्यादिस्तादृशयोग्यताऽभावात् तं कथं परीक्षितुं शक्नुयात् ? । तेनाऽत्र परीक्षणमेतावन्मात्रमेव यदयमब्राह्मणस्य तु न पुत्रः, अथ च स्वकर्मणि लग्नो नो वा ! एतत्परीक्षणं क्षत्रियवैश्यादिरपि कर्तुं समर्थः, तेनाऽस्मत्पक्षसिद्धिः। तेनाऽत्रे जन्मना वर्णव्यवस्था सिद्धा। एवं—ये स्तेनपतितक्लीवा ये च नास्तिकवृत्तयः। तान् हव्यकव्ययो र्विप्रान् अनर्हान् मनुरब्रवीत्' मनु० ३।१५० इत्येताभ्यां श्लोकाभ्यां प्रतीयते यत् पतिततादि निकृष्टगुणयुक्तस्याऽपि विप्रस्य विप्रता वर्त्तते एव। अन्यथा कर्म्मणा पातित्येनैव वादिनये ब्राह्मणत्वाऽभावात् तन्निषेधो व्यर्थ एव। तेन जन्मना वर्णव्यवस्था सिद्धा। 'ऋषिर्विप्रः पुर एता जनानाम्' ऋ० ९।८७।३ इति ब्राह्मणस्येव जनानां पुरोगामित्वम्। 'भूयान् वै ब्राह्मणः क्षत्रियादिति' ऐतरे० ७।१५।

महाभाष्ये ४।१।४८ 'त्रीणि यस्याऽवदातानि योनिर्विद्या च कर्म्म च। एतच्छिवे ! विजानीहि ब्राह्मणाग्रस्य लक्षणम्' इति वाक्येन योनिः—ब्राह्मणाद् ब्राह्मण्यां जन्म ब्राह्मण्यकारणं निर्दिष्टम्। विद्याकर्म्मणी तु प्राशस्त्यरूपाऽग्र्य-त्वसम्पादके, योनिं विना ब्राह्मण्याऽप्राप्तेः। पूर्वं योनिर्भविष्यति; तत एव गुणकर्म्मणी भविष्यतः, तेन योनेरेव कारणता सिद्धा वर्णव्यवस्थायाम्।

योनिं च प्राक्तनजन्मनो गुणकर्मवशात् परमात्मैव ददाति; न मनुष्यः । अत एव 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । तस्य कर्त्तारमपि मां विद्ध्यकर्त्ता-मव्ययम्' गीता ४।१३ मया श्रीकृष्णेन परमात्मनेत्यर्थः, तेन ऐहिक गुणकर्मणा मनुष्यो ब्राह्मणादि पदवीं ददातीत्यपास्तम् । श्रीकृष्णस्य परमात्मत्वाऽमन्त एतच्छ्लोके 'अकर्त्तारम्' 'अव्ययम्' इति विशेषणे पश्येत् 'उत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः' यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' गीता० १५।१७।

अथ च 'यथैवाऽऽत्मा तथा पुत्रः' मनु० ९।१३०, आत्मा पुत्रश्च विज्ञेयः महाभारते अनुशासन० ४९।३ 'आत्मा त्वं पुत्रनामाऽसि' शतपथ० १४।९।४।२६ गोभिल गृ० २।८।२१, मानवगृह्यसूत्र० १।१८।६ 'आत्माऽऽत्मनैव जनितः पुत्र इत्युच्यते बुधैः, महाभारत० आदिपर्व ७४।४९, 'अङ्गादङ्गात् सँ स्रवसि हृदया-दधिजायसे, मं० ब्रा० १।५।१६ 'यादृग्वै योनौ रेतः सिच्यते तादृग् जायते' शतपथ० ७।१।२।२२ ' अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे' मं० ब्रा० १।५। १७, महा० आदि० ७४।६४ 'आत्माऽसि पुत्र ! मा मृथाः म० ब्रा० १।५।१८ आत्मा वै पुत्रनामासि, पारस्कर गृ० १।१६।१८ 'अङ्गादङ्गात् संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि, पार० १।१८।२ 'आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् , भागवत० १०।७८।३६ हे पुत्र तूं ( मेरे ) अङ्ग अङ्ग से उत्पन्न हुए वीर्य से और हृदय से उत्पन्न होता है, इसलिये तू मेरा आत्मा है' सत्यार्थ प्रकाश पृ० ७१ । एतदाद्युक्तेर्यदा पुत्रो मातापित्रोरात्मा, तर्हि तज्जातिमानेव भविष्यति । अन्यथा तस्य मातापित्रोरात्मत्वं किम् ? मिष्टाऽऽम्रबीजतो मिष्टा-ऽऽम्राणामेवोत्पत्तिर्भवति स्वभावतः नत्वम्लानाम् । 'अन्यदुप्तं जातमन्यदित्ये-तन्नोपपद्यते । उप्यते यद्धि यद् बीजं तत्तदेव प्ररोहति' मनु० ९।४०। अतएव न्यायदर्शनस्य ३।२।६५ सूत्रभाष्ये उक्तम्–'इत्युपपन्नं बीजाऽनुविधानम्' । अत्रन्यायवार्तिके उक्तम्–'बीजानुविधानाच्च यज्जातीयौ तस्य पितरौ, तज्जा-तीयः सम्भवतीति, अथवाऽम्लानामपि स्यात् कदाचिद्देशकालादिकारणात् संभवः, तान्याम्रफलान्येव कथयिष्यन्ते, नतु कण्टकिफलानि । 'पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा । न कदाचन दुर्योनिः प्रकृतिं स्वां नियच्छति' मनु० १०।५९ व्यतिरेकेणैतत् सुयोनेरपि लक्षणम् 'पतिर्जायां प्रविशति गर्भोभूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते' ऐतरेय ब्रा० ७।१३ तेन जन्मना वर्णानां व्यवस्था सिद्धा ।

विश्वामित्रादिषु तु ऋषित्वमेव तपोबलेनाऽऽयातम् इति 'अनृष्यानन्तर्ये' ४।१।१०४ इति सूत्रे भाष्ये स्पष्टम् । 'तयाऽहं सर्वं पश्यामि यश्च शूद्र उताऽऽर्यः'

अथर्व० ४।२०।४ अयमोषधिविशेषमहिमा । अनेनाऽपि जन्मसिद्धा वर्णव्यव-स्था सिध्यति । गुणकर्म्मणा तु आर्य्यशूद्रयोर्ज्ञानं सर्व्वं कर्तुं शक्तः, तदौषधें को महिमा । तन्महिमा जन्मना वर्णव्यवस्थायाम्भवितुमर्हति, यत् कश्चिच्छूद्रः स्वमार्य्यमाचक्षीत, तयौषध्या तद्भेदो ज्ञायेत ।

'अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्प-यत्, मनु० १।८८ 'षट् कर्म्माण्यग्रजन्मनः मनु० १०।७५ 'ब्राह्मणानामकल्पयदिति कथनेन प्रतीयते—ब्राह्मणानां कृते—येषामुत्पत्तिर्मनुना 'सर्वस्याऽस्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः । मुख-बाहूरुपज्जानां पृथक् कर्म्माण्यकल्पयत्' मनु० १।८७ इति पद्ये मुखात् कीर्त्तिता—इमानि कर्म्माणि । (क्रमशः)



## स्वधर्मे रुचिः ।

ले०—भालचन्द्र शङ्करशास्त्री राजज्यौतिषी
ज्योतिष तीर्थ-शास्त्री-विशारद गवालीयरस्टेट ।

स्वधर्मे रुचिः वा अरुचिः केवलं सहवासाधीना । स पुनः कीदृशोऽपि भवतु यादृग् यस्य बाल्यावधि सहवासो जायते तादृगेव तस्य बुद्धिः प्रवणीभवति । इदमेव कदाचित् कारणं स्यात् अस्याः रुचेः, यत इदानीन्तनाः कौमाराव-स्थामधिगता दक्षिणदेशे प्रथमं त्रिलिंग द्राविड-कर्नाटक-महाराष्ट्रादिषु, मध्य-प्रदेशेऽपि क्वचित् । हिन्दी-पारसी-महाजन्यादिषु, पश्चिमप्रांते गुर्जरादिषु, उत्तर-स्यां कैथी-हिन्दी-पारसीषु, पूर्वप्रदेशे उडीसा बंगालादिषु लिपिषु स्वस्वभाषा-मभ्यसन्ते । ततस्तु सर्वदेशसंचारिणीं धर्मिष्ठस्यापि जनस्य स्वीये विश्वास-हारिणीं प्रायो बुद्धिपरिवर्तनकारिणीमुदरपूर्तिपंचांगस्य ज्योतिर्वित्सरणीं सभाराजवीथ्यादिस्थलेषु निरादरनिवारिणीं विविधवेषधारिणीं सर्वसम्मा-निनीं राजभाषां ( इग्लिश ) अभ्यसन्ते । अस्यामेव भाषायां बुद्धिसमयानुसारं कृतपूर्णाभ्यासाः स्वीयां मातृभाषामपि न पूर्णतयाऽऽद्रियन्ते । न तत्सबंधिव्याकरणं वा स्वल्पमपि जानन्ति, का कथा तर्हि सकलजगतीमान्यायाः प्राचीनै र्दूरदर्शि-भिर्महद्भि र्विद्वद्भिराचार्यैरत एवाऽभ्यस्तायाः प्रगल्भविषयपूर्णैरनुपमेयैः स्व रचितै र्ग्रंथैरद्यापि सर्वासां श्रेष्ठतमायाः केवलमिदानीं छिन्नपत्राया वल्लर्या इव जीविकावहने असमर्थायाः संस्कृतभाषायाः ?

एवं च स्वधर्मशास्त्रादिविषयाणामाकरभूताया अस्या गीर्वाणवाण्याः प्रतिवेशिनोऽपि इमे आधुनिका न भवन्ति। अथ च सहजमेव तद्गतविषयेषु अरुचिं प्रकटयन्तः स्वं सभ्यं मन्यन्ते। परंपरागतप्राचीनमान्येषु पुस्तकेषु के विषयाः केन हेतुना कैः कं कालमनुसृत्य लिखिताः, संप्रति तेषामुपयोगः कः? कया रीत्या कस्मात्कारणात्कथं विधेयः, इति विवेचने स्वल्पमपि स्वसमयं न यापयन्ति। किन्तु विपरीतभावेन परपक्षं (नास्तिक मतं) अवलंब्य यावच्छक्यमसूयया गुणेष्वपि दोषारोपणं कुर्वन्ति। ईदृगरुचिं च प्रदर्शयन्ति यदिमे जन्मत एव परपक्षीयाः। हा! किमस्माकं धर्मः, आचारः, विचारः व्यवहारश्च, रीतयः, नीतयः, पुस्तकानि, ग्रन्थाः पूर्वजाः, स्थानानि, सर्वमपि युगपद् घृणास्पदं वा गर्ह्यमभूत्! किमद्यापि यथार्थज्ञाः परपक्षिणोऽस्मत्पूर्वजांस्तत्कृतीस्तद्दीर्घदर्शितां सद्बुद्धिं तद्ग्रन्थांश्च न स्तुवंते। किं विवेकिनोऽस्मद्धर्मग्रंथेभ्य एव सारमुद्धृत्य "कानिष्ठिकाशोथं पर्वतवत्" न प्रदर्शयन्ति, स्वनाम्नः ख्यातिं च न तन्वन्ति! किम् अस्मदीया विद्यायां रणे, नियुद्धे, चातुर्ये, परिश्रमे च वा न्यूना बभूवुः? किं तैरस्मिन् संसारे प्रथममेव जनित्वा नः किंचिदपकृतम्। किमिदानींतनवत् ते उच्छृंखलबुद्धयोऽविवेकिनश्च वा आसन्? किमस्मत्तुल्यं तैः प्रतिदिनं स्वव्यवहारा आचारा नीतयो वा—यं पश्यन्ति तमनुकुर्वन्तिस्म। परिवर्तिताश्च सदा संतोषवृत्तयः कदापि ते मात्सर्येणास्मत्समं कमप्यैक्षन्त किं? किमन्यरीत्या ते जगन्मान्याः सन्तः स्वव्यवहारान् परितत्यजुः कदाचित्? किं ते समयानुसारं सुखदुःखमनुभवन्तोऽपि हर्षविषादसीमान मुल्लंघ्य कदाचिदपि स्वधर्मशास्त्रं वा व्यगर्हयन्! सर्वदा नम्रचित्ता गंभीरबुद्धयस्ते लोकव्यवहारमनुसृत्यापि स्वधर्मे दृढभक्तयोऽपरिमितविश्वासाश्च अभूवन्। एवमेव पूर्णरीत्या विचारिते, ये इदानीमस्मन्मान्यग्रंथादींस्तिरस्कुर्वन्ति वितंडावादेन च केवलं नास्तिकवत् कदाचिदस्मान् जेतुं चेष्टन्ते'। बाल्यावधिपूर्णाभ्यस्तसमस्तविषयानेवमग्रे विधाय पुनः पुनस्तैरेव अद्यावधि सर्वत्रगुणैरध्वभिः स्वान् कृतकृत्यान् मन्वते। यया संप्रत्येव छित्रवर्षेभ्यः ख्यातिमागतस्य, धूर्तराजवत, सरलबुद्धीन् विविधैर्भ्रामकैश्च संभ्रातान्विधाय स्वमतं प्रबलयन्तिः, कतिपुचित् स्थलेषु प्रसंगवशतो विवादे निरुत्तरीभूतस्यापि संप्रति। अस्माकं आधुनिकै रुपरि कथितगुणैरेव सर्वस्थलेषु, तेनैव स्वग्रंथादि विषये आंध्यरूपेण कारणेन स्तुतिपात्रतां गतस्य "आर्यसमाज" ख्याति अस्मिन्देशे समजनि। तेऽपि सर्वे निष्पक्षपातेन एतत्सहजमेव स्वीकुर्युः यत्प्रगल्भा विषया यथा ज्ञातुं कठिना भवन्ति न तथासाधारणाः। एतेन न ते विषया

न्यूनतया मान्या वा तुच्छाः किन्तु वयमेव तादृग् प्रौढज्ञानवन्तो न स्मः। एव-मेव यथा सर्वेऽपि संगीतविद्याज्ञानिनो वा इतरे च संगीते वेश्यादीनां गानेन प्रालापेन च सहजमेव प्रस्फुरितरोमांचाः प्रभवन्ति, तथा गानविद्यायां निपुणस्यापि गायकस्य सुन्दरेणालापयुक्तगानेन प्रसन्नचित्ता न भवन्ति वा भवेयुः। किमनेन तस्य गानं दोषयुक्तम् अथवास्माकं ज्ञानम् अपूर्णम्? एतस्मिन्प्रश्ने अस्माकमपूर्णज्ञानमित्येव उत्तरं स्यात्। यतस्त एव वयं यदि किंचित्कालमिद मभ्यस्यामः शृणुमो वा प्रतिदिनं, तर्हि एव पूर्वश्रुतगायकस्य गानमधिकतरं स्तुमो वारांगनानामपेक्षया!

अनेनायं सिद्धांतो यद् यस्य विषयस्याधिक्येन सहवासो वा समाभ्यासो बाल्यावधि जायते स एव विषयः समीचीनोऽन्ये च निंद्याः प्रतिभान्ति।

नच कदाचिद्वाच्यं क्वचित्स्थले दोषपरिपूर्णत्वेन स्वधर्मे सहजमेव अरुचि-र्निष्पद्यते सा च युक्त व, स्वभाषाया धर्मशास्त्रग्रन्थानां चानवलोकात्। तद्गत-विषयाणां यथार्थपरिज्ञानस्य असामर्थ्याच्च। नामूलाः प्रसिध्यन्ति रीतयः संसृतौ कदाचन आवश्यकीभूतैस्तत्तत्कालानुसारिभिः प्रयोजनैश्च तस्य द्रढिम-त्वात्। अधुनापि यासां यथोचितानुवर्तने लाभस्यैव बाहुल्यात्। मुख्यतः सर्वसम्मतस्य 'शरीरं रक्षयेद्धर्मः' वा 'स्वधर्मे निधनं श्रेयः परधर्मो भयावह' इत्यादि नानाविधवाक्यस्य ताभिरेव पूर्वजानां रीतिभिर्व्यवहरणे, फलीभूतानां नित्यनवानन्दजन्यानां सुखानामेव सर्वतो भावेन लाभात्। अस्मदादीनामपेक्षया सर्वपद्धत्या विचारवतां श्रेष्ठाणां च स्वीयोपमर्दरूपदोषस्य पात्रतापत्तित्वात् एवंच "यद्यदस्ति पृथिव्यां तद्युक्तं सर्वं न चान्यथा" इति मतिरेव प्रशस्ता।



## श्रीश्रीकालीस्तोत्रम्।

[ गौड़मण्डलान्तर्गत-सुप्रसिद्ध भट्टपल्यभिजन वैकुण्ठगत पण्डित-नन्दलाल विद्यारत्न भट्टाचार्य विरचितम्। ]

स्वाधारप्रमुखाश्रयाश्रित सुधासिन्धुप्रवन्धे मणि-
द्वीपे राजति पारिजातविटपीमध्ये श्मशानाङ्गनम्।
तन्मूले मणिवेदिकोपरिमणेः पीठे शवाब्जासना

कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा-( पा ) तु माम् ॥१॥
षट्चक्रेषु तदूर्ध्वपद्मकुहरे मध्ये सुषुम्णान्तरे
सर्वत्रैव चरेऽचरे च विविधैरेकापि रूपैः स्थिता ।
नीरूपाप्यपरूपरूपरुचिरा नग्नापि लज्जात्मिका
काली कालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥२॥
श्रीवृन्दारकवृन्द-वन्दितपद द्वन्द्वारविन्देश्वर-
ब्रह्मोपेन्द्रमहेन्द्र मूर्द्ध विगलन्मन्दारवन्धस्रजाम् ।
गन्धानीतकुलालिकालिमघनच्छायाङ्घ्रिपङ्केरुहा
कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥३॥
प्रोद्यद्भास्कर विम्बदम्भदलनज्योतिष्कनेत्रत्रयाज्-
ज्वालाजालकराल-काल-दहनालोकं क्षिपन्ती रिपौ ।
पर्व्वापूर्व्वसुधांशुकांशुमृदुलां दृष्टिं निजे मुञ्चती
कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥४॥
मर्त्त्या यत्स्मरणाद् भवन्त्यमरणास्तद्वस्तु-नित्याश्रय-
श्रीमृत्युञ्जयमृत्युमूर्त्तिरिति यच्चित्रं चिरं चिन्त्यते ।
तच्चित्राधिक-चित्तविभ्रमकरी लोकत्रयी लीलया
कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥५॥
मुण्डाली गलितासृगासव-नवामोदप्रमोदाः शिवाः
यस्या दिक्षु विदिक्षु भैरवरवं मुञ्चन्ति चञ्चन्ति च ।
सा चण्डी शवमुण्डमण्डितचिताकुण्डे स्थिता ताण्डवे
कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥६॥
द्रंष्ट्रालास्यमहाट्टहास्यविकटास्रक्कद्वयी निर्गल-
द्रक्ता रक्तकराललोलरसना वाणावतंसोज्ज्वला ।
काञ्ची कौणपपञ्चशाखरचितामामुञ्चती दक्षिणा
कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥७॥
या मूलप्रकृतिः सती गुणवती विश्वप्रसूतिः स्थिति-
स्त्रैलोक्यं दधती क्षितिर्ज्जलमरुज्ज्योतिर्वियद्विस्तृतिः ।
अन्ते संहृतिरीश्वरी चितिरिति द्वैतोज्झितावस्थितिः
कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥८॥
व्यालोलालकमुक्तकुन्तलकुलस्पृष्टाङ्घ्रिपद्मद्वया
सद्यः कृत्तशिरोधराभयकराधराधराश्रीधरा ।

अन्तर्ध्वान्तकृतान्तकान्तिरगतिश्रीनन्दलालद्विजे
कालीकालभियां निकृन्तनकृते कर्त्रीकरा त्रा ( पा ) तु माम् ॥९॥

श्रीनन्दलालकृतिना रचिते पवित्रे
स्तोत्रेऽत्र कालकवल-प्रविलोपशिष्टे ।
तत्सूनुना विनिहितानि कियत्पदानि
गङ्गाप्रवाह इव कूपपयांसि सन्ति ॥१०॥

## कविकुलगुरुः कालिदासः ।

ले०—'शास्त्री' प्राणजीवनः बी० जोशी ( कच्छी )
"साहित्याचार्य"—श्रेणिस्थः, "रिसर्चस्कॉलर"- गवर्नमेन्ट
सं० कालेज सरस्वतीभवन काशी ।

निर्गतासु नवा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥

१—कालिदासस्य विषय एतदेव कथयितुं योग्यं यत् प्रायेणाङ्ग्लकवेः "होमरनामकस्येवाधुनापि तस्येतिवृत्तं निश्चयात्मना न किमप्युपलब्धमस्ति इति । तस्यानन्यसाधारणं निरुपमं यशः, सहस्रात् सार्धसहस्राद्वाब्देभ्य एतदीयस्वदेशे ( अद्वितीयतया ) अनुत्सार्यस्वरूपेण विस्फूर्जत्प्रसारमाप्नवदव-तिष्ठते । तदीयं नामाऽऽबालवृद्धानां रसनाग्रेषु तिष्ठति, किन्तु—स कोऽभवत् ! कुत्राभवत् ! कदाभवदित्यादिविषये न क्वापि प्रवृत्त्युपलब्धिः कस्यापि । उपर्युक्तवृत्तत्रयमनुसन्धातुमाङ्ग्लभूमीया भारतवर्षीयाश्च विद्वांसो बहुप्रयत्न-मनुष्ठितवन्तोऽनुतिष्ठन्तश्च प्रवर्त्तन्ते; परमद्यापि न केऽपि तादृशोद्योगे साफल्य-मापादितवन्तो दृश्यन्ते । तस्य जातिः, स्थानं, जीवनं, काल इत्येवंप्रभृति नाद्यावधि निश्चितं वर्त्तते । स आसीत् सारस्वतो ब्राह्मण इति कश्चित् । कश्चित्तं कश्मीरदेशाध्युषितवांसं निरूपयति । कश्चित्तु—"नहि नहि !"..स

१—( हिन्दी ) कविपञ्चादुद्धृतसन्दर्भांशः ।

धारानगरीवसतिरासीदित्यभिप्रैति । एवमेव तज्जीवनकालनिर्णयेऽपि तथैव मतभेदः। कस्यचिन्मतेन स इशवीयवर्षात्प्राक् प्रथमशताब्द्यां जन्माऽगृह्णीत। कश्चित्पुनस्तन्मतं विप्रतिपद्यमानस्तदनन्तरं द्वितीयशताब्द्यां तज्जन्म समर्थयति। इत्थं किल कालिदासस्य विषये निश्चयस्वरूपेण नहि किञ्चिद्वृत्तमुपलभ्यते। कस्यचनाभिप्रायेण द्वौ कालिदासावभवताम् । केचिदनुमिन्वन्ति,—"यो रससिद्धो महाकविः शाकुन्तलादिग्रन्थान् लिपिबद्धान् समदृभ्नात्; स किलोज्जयिनीमधितिष्ठति स्म। किञ्च, नलोदयप्रभृतिसामान्यक्लिष्टकाव्यानां प्रणेता भोजराजाश्रितः कश्चित्तदपरः कालिदासो बभूवेति।" तात्पर्येण—"ग्रीस"देशीयमहाकवेरिवास्माकं महाकवेः कालिदासस्यापि विषये विश्वत आकृष्यमाणं मतं न निर्णयपथमवगाहते। नाद्यापि मथितार्थः कश्चिन्निर्धारितो येन तद्विषये निःशङ्कं विचारचर्चाचंचुत्वप्रदर्शने पार्येत । अतः करुणावरुणालयः सर्वान्तर्यामी परमेश्वरः सानुरोधं सम्प्रार्थ्यते यत् तथोक्तोहापोहफलतो यथा 'होमर'नामककवेरनुसन्धानसाधितं गवेषणमधिकृत्य प्रवृत्तायां विचारणायामन्ते + तदनस्तित्वमेवाप्रथ्यत; ? तथाक्षेपचय आस्माकीनमहाकवेः कालिदाससत्तायामपि मा प्रचरेदिति *

कालिदाससम्बन्धिवृत्तान्तानुपलब्धेः प्रबलं कारणं त्वेतदेव यत् स स्वयं नैजे विषय आत्मरचितग्रन्थेषु न किमपि परिचायकं वृत्तमुदटङ्कयदिति। भवभूतिबाणाद्याः कवयो यथा स्वप्रणीतग्रन्थारम्भे स्वकीयवंशवर्णनं प्रास्तुवन्; अपि च-कवीनां स्वग्रन्थपाठकान् भाविनो जनांश्च प्रति या स्ववंशप्रत्यायनप्रथा प्रचरन्ती दरीदृश्यते; एतद्विषये कालिदासस्योपेक्षा व्यक्तीभवति। आद्यकविः श्रीकालिदासः स्वरचितग्रन्थेषु नैजं नामापि नोट्टङ्कितवान्; तर्हि का कथा, सुदूरवर्त्तिन्यास्तदनन्तरभाविन्यास्तस्य परिचितेः। नरवरस्य तस्य दिगन्तरव्यापिनी कीर्तिः प्रथमत एव न प्राकाशिष्यत यदि तद्ग्रन्थाश्च जनसमष्ट्यां प्रीतिपात्रतां सम्पाद्य मान्या नाभविष्यन्; यदि च स काव्यनाटकादि न प्राणेष्यत्तदा खलु तस्य नाम्नोऽप्यदर्शनं नासम्भवितमिवाऽभविष्यत् । पूर्वोक्त-

* शर्मण्यदेशीयोल्फनामकेन केनचित्पण्डितेन सम्मतिरियं प्रकाशिता यत्—होमरनामा मनुष्य एव नासीत्।

+ "इलियड", 'ओडीसी' ग्रन्थौ मिलित्वानेकैर्लिखितौ परं तावुक्तनाम्ना प्रचलन्तौ तिष्ठत इत्यवधार्यमिति ।

उक्तमतस्य प्राबल्यमद्यत्वे क्रमशो ह्रासमुपगतम् ]

कारणद्वयजागरुकतयैतस्य नाम्नस्तु संरक्षणं काममवातिष्ठत; परमेवं स्थितावपि प्रागालोचितरीत्या तदीयस्तथाविधो मौनभाव उपेक्षा वा तथाविधामापदमजनयद्यया हि तदनुषङ्गिगवेषणावसरे महदसौकर्यमाविर्भवति । यतः प्रायः प्रभूताः साधारणा अप्रयोजनीया अपि केचिद्ग्रन्थास्तन्नाम्ना प्रसिद्धिं लभमाना अतदीया अपि क्वचित् किञ्चित् सामञ्जस्यवशात्तदीया इति प्रतिपाद्यमानाः समुद्वेजयन्ति तत्त्वचिन्तकान् । भूतपूर्वपण्डितेषु तदनुसन्धानशीलताया अपर्याप्त्या ते समेऽपि तदीयमहनीयनामोपजीव्य प्रसिद्धिमाश्रयन्तः प्रचलन्ति । *

परिमितेष्वमुककाव्यादिग्रन्थेषु कालिदासस्याभिधानमवश्यमधिगस्यते नाम । परन्त्वेतेषु तदीयकवित्वगुणाः कियतीं वृद्धिमर्यादामाक्रमन्त इत्युपलम्भाय परामर्शः पुरा केषामपि नान्तरन्तरमविन्दत । अतोऽद्यावधि कालिदासस्याख्यया विश्रुतिमधिजग्मिवस्सु ग्रन्थेषु कतिचन ग्रन्थान् कृत्रिमकल्पितक्षेपकान् सत्यापयन्तो विज्ञास्तानसत्यवर्त्मनि स्थापयन्ति । एतद्दृष्टान्तात्मना "मालविकाग्निमित्रं नाटकं" नलोदय" काव्यं च नामतः समुल्लिख्येते । उक्तनाटकं कालिदासकृतं नास्त्यथवा निदानं मूलभूतसत्यकालिदासं × नो स्पृशति ! सम्मतिरियं "विल्सन्-साहब"—महाशयेनैकस्मिन् स्थाने प्रकाशितास्ति । तदाप्रभृति,—तद्विषये सर्वेषां मनःसु सन्देहोऽस्ति न्युद्भूतः ।

[ उक्तां प्रतिकूलायमानां सम्मतिं "विल्सन्" महोदयः स्वकीये "न्यू थियेटर"—सञ्ज्ञकग्रन्थे प्राकाश्यं नीतवान् । अमुष्मिन् ग्रन्थे परमोत्कृष्ट संस्कृत-नाटकानामाङ्ग्लभाषायां साङ्गोपाङ्गोऽनुवादः, शेषस्य च यथावस्थमी "षदनल्पं" व्याख्यानं कृतवान् ]

प्रतीयते चाप्युदन्तो भूतार्थ इव, यतः खल्वेतन्नाटकस्यानुशीलनावसरे रसमास्वादमानानां प्रमातॄणामधिहृदयं तथाविधः स्वल्पोऽपि बोधो न प्रति-

* ( विना नाम ग्रन्थानां प्रकाशने द्विधानर्थसम्भावनमुपतिष्ठति । प्रथमं तावन्निम्नश्रेणीयग्रन्थान् प्रसिद्धग्रन्थकर्तृनामापदेशेन प्रख्यापयितुमवसरो जनानां हस्ताभ्याशमायाति । अपि च;—अन्येषामपि जनानां प्रसिद्धग्रन्थेष्वात्मीय-नामसंयोजने सौकर्यमुदेति । इत्थंभूतद्वितीयानर्थात् स्वकीयकाव्यकलापमभिरक्षितुं पण्डितराजो जगन्नाथः स्वरचितभामिनीविलासस्योपसंहारे पद्यमिदमुट्टङ्कितवान्—"दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया ।

मदीयपद्यरत्नानां मञ्जुषैषा मया कृता ॥ इति ॥

[ पण्डितराजस्य निखिलकाव्यरत्नानामेकसूत्रात्मकतयाऽगुम्फितत्वादुक्तभयस्य विशिष्यैवासीत् सम्भावना । ]

मूर्च्छति, यद्वयं शाकुन्तल-विक्रमोर्वश्यादिनाटकानां रचयितुः कवेः कालिदासस्य कविताः पठाम इति । किञ्च; नलोदयकाव्यविषयकं कथनं तु ततोऽपि ( प्रकृतदृष्टान्तादपि ) मध्यस्थं विचित्रं च । येष्वणीयस्यपि रसिकता सन्तिष्ठते; येषु च कालिदासस्य कवित्वगुणानामल्पीयानपि परिचयस्तेषामुक्तक्लिष्टकाव्यस्य कर्तृत्वविषये ( अस्य कर्त्ता कालिदासेन न भाव्यमितिप्रतिपत्तौ ) लेशतोऽपि सन्देहो न स्यात् ।

संस्कृत-कविकुलगुरोः कालिदासस्य प्रसन्नता–सरसतासम्पन्ना वाणी क्व ! क्व च नारिकेलपाकसदृशमुक्तं हठकवित्वम् । अद्य यावद् विश्वस्मिन् भूमण्डलेऽतीव विख्याता ये (२) कवयितारः सम्बभूवुस्तेषु कश्चनापि यथोक्तमिन्द्रजालं प्रदर्शयितुमात्मानं धन्यं नामन्यन्त । प्रत्युत तद्विषये समेऽप्यवज्ञामाविर्भावयामासुः । यतो महतायासेन शब्दचमत्कृतिं द्वारीकृत्याऽरसिकजनेषु प्रशंसामधिगन्तुमुत्साहः खल्वनुत्तमश्रेणीयकविष्वेव दृग्गोचरीभवति । कालिदासादीनां श्रोतृचित्ताह्लादकं सम्भारोपकरणं किमपि विचित्रमेव सम्पद्यते । तथोक्तवान् गोवर्धनाचार्यः—

"सकृतमधुरकोमलविलासिनीकण्ठकूजितप्राये
* शिक्षासमयेऽपि मुदे रतलीला कालिदासोक्तिः" ।

इति । अयमत्र सारांशो यद्यपि कालिदासनाम्ना विख्यातिमाप्नुवानेभ्यः प्रचलितग्रन्थेभ्यः कियत्सुचन ग्रन्थेषु संशयात्मकता वर्त्तते. तत्र हेतुस्तावदुपर्यावेदितः ।

अथ याथार्थ्येन ये ग्रन्थाः कालिदासकृताः सन्ति; तथा च येऽन्तरङ्गरचनाभिर्लोकप्रसिद्ध्या वापि तदीयत्वेनैव निर्णीयन्ते, तेषां दिग्दर्शनमुपोद्घल्यते ।

कालिदासस्य प्रथमो ग्रन्थ ऋतुसंहारः । अमुष्मिन् ग्रन्थे षड्ऋतवः सन्ति वर्णिताः । भिन्नभिन्नर्तुषु भगवत्या प्रकृत्या यद्यद्रूपमाधीयतेः; तत्सर्वमेतत्कविनाऽत्र (ग्रन्थे ) संस्कृतकविकुलमार्गमनुसारं वर्णितम् । सरसा मधुरमसृणा च

* केवलं शब्दचमत्कृतिप्रधानकाव्यद्वारैव न मनागपि सहृदयमनस्तोषो भवति । इत्थमभिप्राय आर्यासप्तशत्यां सरसमार्मिकदृष्टान्तेनाभिव्यक्तोऽस्ति—

सरीतिवीतवसना प्रियेव शुद्धापि वाङ्मुदे सरसा ।
अलसालङ्कृतिरपि न रोचते शालभञ्जीव ॥

यथा च—"अध्वनि पदग्रहपरं मदयति हृदयं नवा नवा श्रवणम् । काव्यमभिज्ञसभार्या मञ्जीरं केलिवेलायाम्" ॥ २ ॥

शब्दार्थरचनैवास्य काव्यस्य विशेषो गुणः। अमुष्य ग्रन्थस्यानुशीलनेन वृत्तमेवं विचारवीथीपथे प्रधावति, यदनेनास्मत्कविना (कालिदासेन) ऋजुप्रायोऽयं विषयः प्रथमत एव हस्ताश्रयीकृतः स्यात्। किञ्च, क्रमेण यो वाग्देव्याः सर्वस्वभूतो भूत्वा, पूर्णप्रसादपात्रतां गतः। स, तामुक्तकाव्यद्वारा प्रथमनमन-मर्पितवान् स्यादित्युन्नीयते।

सम्प्रत्याङ्ग्लभाषाकाव्यकलापस्य पठनपाठनादिना यैः प्रकृतिवर्णनस्या-भिनवः प्रकारः परिचितस्तेषामुक्तग्रन्थो नातीव मनोहरः प्रतिभाति। यतस्त एवं ब्रुवते—"ग्रन्थोऽसौ" वैचित्र्यविशेषात् सृष्टेः पूर्णसूक्ष्मावलोकनाभावाच्च न निरवद्य इति। वर्तमानकाव्यपक्षे ह्येतावदवश्यं वक्तुं शक्यते, यन्नैवं केवलमुक्तकाव्य एव निभाल्यते अपि तु—संस्कृतकवितासु सृष्टिवर्णनसरणिः प्रायेण सर्वत्र साधारण्यतस्तादृश्येव। तथाहि—रघुवंशे वसन्तग्रीष्मयोः, कुमारसम्भवे (केवलं) वसन्तस्यैव, तथैव-मृच्छकटिकनाटके प्रावृष एव, कादम्बर्यां वसन्तप्रावृषोः, किरातार्जुनीये शरदः, शृङ्गारशतके च पञ्चानाम-प्यृतूनां वर्णनमधिगम्यते। सारांशेन;—तथोक्तभिन्नभिन्नस्थलेषु संस्कृतकवीना-मृतुवर्णनमुपलभ्यते। अपि त्वेकप्रवाहादपरप्रवाहानुबन्धं यावदनन्य एव सरणिक्रमो दृग्गोचरीभवति। यथा—वसन्तवर्णने कोलिकानां कोमलानि काकलीकलकूजितानि षट्पदानां मनोज्ञो झांकारः, चन्द्रचन्दनादीनामुद्दीपनत्व-माघ्राणाञ्च वर्णनम्। ग्रीष्मवर्णने चन्द्रिकायाः शीतलतायाश्चोपवर्णनम्। प्रावृट्प्रशंसायां मयूराणां चातकानाञ्चानन्दप्रदर्शनम्। शरदि हंसानां निर्मल-कौमुद्याश्च प्रशंसनम्। हेमन्तशिशिरयोश्च शीतसमीरणाऽऽस्फालनप्रश्लाघे-त्यादिपरम्परितप्रसिद्धप्रथातिरिक्तं नहि किञ्चित्कुत्रचिदधिकमभिनवं प्रस्तूयते।

आङ्ग्लभाषायामुपलभ्यमानासु कवितासु यथा-गगनभेदिभूधराणां, तेषामुत्तुङ्गशिखराणाञ्च दृष्टिपथमाजग्मुषां भव्यरमणीयदृश्यानामुन्मादेनोत्कटं प्रोच्छलितस्य समुद्रादेश्च वर्णनं प्राप्यते, न तथा प्रायः संस्कृते। जलनिधे-रुपरीयजलधरस्य वाचकः (अकृतकः) कश्चित्संस्कृतशब्दोऽस्ति नवेति शङ्कैव न विरमति। 'वात्या'—वात्याचक्रप्रभृतिशब्दानां विद्यमानानामपि धरातलीय-मेघानां वाचकत्वं सङ्गच्छते।

एवमाङ्ग्लसंस्कृतयोः कविताविषयिणीतुलनायां; तयोर्महदन्तरं बहुधा समासाद्यते; परं तेभ्यः सर्वेभ्य एतस्यैव प्रधानतया विमर्शोऽधिकृतो भाषा-शास्त्रकोविदैः। सृष्टीयचमत्कारान् रम्यालोकांश्च सम्प्रेक्ष्य, साधारणस्यापि विचारशीलस्य देहिन आनन्दसिन्धुपूराप्लावितं भवति चेतस्तर्हि का कथा

सदसद्विवेकशीलस्य सहृदयस्य ?। अथवा-"मेघालोके भवति सुखिनोऽप्यन्यथा-वृत्तिचेतः"—एतादृशो येषां वस्तुतः सिद्धोऽनुभवस्तेषां कवीनामेतन्निभालनेन कीदृशः किलानन्दो जायत इत्येतत्तु तेषामेवानुभवसाक्षिकत्वं प्रमाणम्। किन्त्वद् वृत्तमेतेषामुपवर्णनप्रसङ्गे विशेषात्मना नहि दर्शनपथमधिरोहति।

अथ साम्प्रतं नात्र लेशतोऽपि सन्देहावसरो यत्-सूक्ष्मदृशावधारणेन प्रभूतान्येतत्कारणानि सम्भवन्ति। परन्त्वेतेषां विषयबाहुल्यादत्र तानि विस्तरशो न प्रतिपाद्यन्ते।



## श्रीकृष्णपुष्पाञ्जलिः।

ले०—पण्डित बांकेविहारीलाल चतुर्वेदी काव्यतीर्थः (हैदराबाद)

जय कृष्णमाधव नन्दनन्दन वासुदेव नमोऽस्तु ते।
जय बालकृष्ण कृपालुभगवन् दीननाथ नमोऽऽस्तु ते॥
जयकृष्ण माधव०॥

जय सृष्टिकारण दैत्यमारण ब्रह्मरूप नमोऽस्तु ते।
जय विश्वपालक गोपबालक कृष्णरूप नमोऽस्तु ते॥
जयकृष्णमाधव०॥

जय सर्गहारक भक्ततारक रुद्ररूप नमोऽस्तु ते।
जय दक्षयज्ञविनाशकारण भालचन्द्र नमोऽस्तु ते॥
जयकृष्णमाध०॥

जय पापनाशक ज्ञानभासक सत्यदेव नमोऽस्तु ते।
जय पार्थमोहनिरासकारण विश्वरूप नमोऽस्तु ते॥
जयकृष्णमाधव०॥

जय भीतिमोचन पद्मलोचन जानकीश नमोऽस्तु ते।
जय रावणारि निपातकारण रामचन्द्र नमोऽस्तु ते॥
जयकृष्णमाधव०॥



# श्रीशारदा-पञ्चकम् ।

प्रणेता—साहित्याचार्य्यः, पाण्डेय श्री कुसुमाकरशर्मा आयुर्वेद शास्त्री
( ग० आयुर्वेदिककालेज पटना )

( १ )

विश्वात्मिके ! वन्दितपादपद्मे !
हंसाऽऽसनेऽज्ञानचयं धुनाने !
गीताञ्चिते ! हारयुते ! सवीणे !
श्रीशारदे ! मत् प्रणतिं गृहाण ॥

( २ )

विद्याधनोद्भ्राजितभूरिभारे !
प्रफुल्लिते ! मञ्जुलकुन्दहासे !
काव्यामृताम्भोधिसुभव्यवासे !
भद्रं निदध्या ननु सेवकानाम् ॥

( ३ )

मातस्त्वदीये नलिनाङ्घ्रियुग्मे,
नित्यं वयं दीनमुखाः स्तुवन्तः ।
शातप्रिये ! दुःखमवेद्य गाढं-
नाऽऽत्तं कथं ते सहसाऽऽयताक्षणोः ॥

( ४ )

देशान्तरादत्र ‡ समागतानां-
बन्धून् विना हा! हतभाग्यकानाम्-
मातस्तवावाप्तिकृतव्रतानां
दृष्ट्वा दशां नः करुणा कथं न ?

( ५ )

याऽऽसीत् कृपा ते ननु कालिदासे
या वा कृपा मण्डनमिश्रपत्न्याम् ।
मातः ! कृपा सा यदि भक्तवर्गे
लोके तदा ते महिमावलिः स्यात् ॥

---

‡ अत्र = महाविद्यालये,

# निवेदनम् ।

आजीवनं सुकृतमत्र कृतं न किञ्चित्
कं वा क यामि शरणं मरणं न दूरे ।
वृद्धोऽसमर्थकरणश्चरणौ मलघ्नौ
ध्यातुं प्रभुर्न च भवामि विभो ! क्षमस्व ॥१॥

हे विश्वरूप ! यदि विश्वमिदं त्वदीयम्
रूपं तदा सुकृतदुष्कृतयो र्विभागः ।
जीवाहितोऽघतितरां नितरां बलीयान्
केनाहितैषिपुरुषेण कृतो न वेद्मि ? ॥२॥

मायाकृतो यदि तदा न च वास्तवी सा
घ्रातं नभः कुसुममत्र कदा न केन ।
ध्यानादि-साधनविहीनजनस्य चित्ते
इत्थं स्वतः प्रसृतिमासवती कुयुक्तिः ॥३॥

नाथ ! भ्रमामि सततं तव विश्वचक्रे
चित्तं च नैव विषमात् प्रशमं ममैति ।
मिथ्यासु नित्यमभिमानमहं ममेति
का तात्त्विकीह घटनेति मतौ न भाति ।

बुद्ध्वा प्रतिक्षणमपि क्षणभङ्गुरायाः
सृष्टे र्विचित्ररचनां दृशिमात्ररम्याम् ।
सक्तो बिभेमि सहसा यमयातनाया
भक्तो भवामि न हरेरथवा हरस्य ॥५॥

देहि प्रभो ! सकलकामद—पादभक्तिम्
याचे नवा निखिलतापविनाशिमुक्तिम् ।
मुक्तिश्च यातु विलयं सुतवित्त-देह-
गेहादितोऽपसरतु प्रसभं ममत्वम् ॥६॥

जाने मृषा जगदिति श्रुतिवाक्यजातैः
प्रत्यक्षतो न च चकास्ति जगन्मृषात्वम् ।
स्याच्चेद्दया मयि दयामय ! पापपूर्णे
सर्वं विभास्यति यथार्थत एव देव ॥७॥

सम्प्रार्थयामि भवतश्चरणाऽम्बुजेऽहम्
कालेऽन्तिमं शमनकिङ्कर—ताडनेभ्यः ।
संरक्षणाय जलदाभ! गृहीतचक्रः ॥
चित्तेऽवतीर्य्य कुरु सर्वविपद्विनाशम् ॥८॥

मा कामिनीकाञ्चनयोः पिपासुता
प्रयाति वृद्धिं दिनयामिनीषु मे ।
कार्श्यं शरीरेण समं समेतु—
दूरं घनश्याम ! निवेदनं हरे ! ॥६॥

—श्री घनश्यामवेदान्ततीर्थस्य
( मेदिनीपुराभिजनस्य )



## श्रीकृष्णजयन्ती महोत्सवः ।

हिन्दुजातेर्विराट् सभायाः श्रीभारतधर्ममहामण्डलस्य विशाले कदली-स्तम्भतोरण-पुष्पमालादिनिचयैर्नितरां सुसज्जिते परिष्कृते भव्ये भवने गत-कृष्णाष्टम्यां गुरुवासरे महता समारोहेण, आयोजनवैराज्येन च भगवदानन्द-कन्दस्य श्रीकृष्णचन्द्रस्य जन्मजयन्तीमहोत्सवः समजनि । विविधोपकरणैर-लङ्कृते परमरमणीये सिंहासनवरे विराजमानं मातुर्देवक्याः कमनीयक्रोडे विलसितं ललितं विचित्रं श्रीदेवकीनन्दनचित्रं दर्शं दर्शं दर्शकाः प्रमोदपयोधौ नितान्तं निमग्ना अक्षिगोचरतामापद्यन्त ।

अस्मिन् महोत्सवे नैके नागरिकमहानुभावा महामण्डलपदाधिकारिणश्च सम्मिलिता अभवन् । महामण्डलीय-दयानन्दोपदेशकविद्यालयस्य छात्राः, गोस्वामी पण्डित जगदीशशर्मा, पण्डित-गङ्गाविष्णुशास्त्रिप्रभृतयो विद्वद्वराश्च सुमधुरं गम्भीरं मार्मिकं च श्रीकृष्णचरितगोचरं व्याख्यानं प्रायच्छन् । महामहोपदेशको धर्मरञ्जनः श्रीमान् पं० धूमावतीप्रसादपाण्डेयमहोदयः कार्यं समचालयत् । हरिनामकीर्त्तनं सुमधुरं मणिरामशर्मणा सम्यक् सम्पादितम् । प्रसादवितरणानन्तरं महोत्सवः सानन्दं समाप्तिमगमत् ।

— ——

## पांक्तिरथिप्रणतिः ।

जनानामामोदानवनिजनिजाने ! जनिजुषा-

ऽजगत्यां ते मूर्त्तिर्वितरति नितान्तं दृशि गता ।

चिदाऽऽनन्दाऽऽनन्दाननिधन१ धनान् राममनिशम्

रमाकान्तं शान्तं ललितललितं त्वामनुनुमः ॥१॥

रामं कामाऽभिरामं मदनमदभिदाऽऽनन्दमन्दारवृत्तम्

दुर्दिष्टं राक्षसानां कपिजनसुदिनं जानकीकान्तशान्तम् ।

सीतासन्तापहैमं हिमगिरितनया कान्तकान्तं महान्तम्

हन्तारं हन्त ! तारापतिमतिसुखदं रामभद्रं नमामः ॥२॥

रामं नीलाभमूर्त्तिं निशिचरनिकराऽऽनन्दभङ्गैकसङ्घम्

नूनं वृन्दारकाद्यैर्मुनिजनजनकैर्योगिराजैकराजम् ।

राजद्राजीवशोभा समनयननयं नायकं नायकानां

नाकेशं नम्रनम्रो नमतिकुमतिको मन्दनन्दो भृशं भोः ॥३॥

नानाक्लेशविशेषविद्धहृदयः श्रीराम रामेति मे

आस्याद्राशुशुभं सदा सुखकरं शब्दं सरीसर्ति भोः ।

दीनानाथ दयां विधेहि विविधावाधाविनाशो यया

नन्दोऽहं तव नन्दनाय कवितारूपात्मिका वन्दना ॥४॥

—नन्दलालशर्म्मणः ववाई वासिनः ( राजपुताना )

१ नाशरहितान् जानकी जाने । अवन्या जनिर्जन्म यस्याः सा जानकी सैव जाया यस्य तत्संबुधौ ।



## हा हन्त ! कालेनापहृतं विद्वद्रत्नम् ।

श्रीक्षेत्रत्र्यंबकेश्वरे ऋग्वेदानुयायि एकं कलमकरोपाभिधं ब्राह्मणकुलं धरीवर्ति। तस्मिन्नेव ब्राह्मणकुले रामशास्त्रिभारताचार्याणां जन्म संजज्ञे ।तस्मिन्कुले पूर्वपरम्परया बहवो विद्वांसः ब्राह्मणाः समभवन् । तेषां मध्ये भारताचार्यरामशास्त्रिमहाशयानां जन्म। भारतवर्षे महाराष्ट्रीयजनतया एतत् शास्त्रिमहोदयानां

गुणगौरवं मानपत्रादिषु मुहुर्मुहुः स्पष्टीकृतं इत्यहो भाग्यं रामशास्त्रिणम्। धन्यास्ते पौराणिका रामशास्त्रिणः सन्ति, एषां कुलं धन्यं, यैः त्रिंशत्वर्षपर्यन्तं जनताजनार्दनस्य अखिलमहाराष्ट्रभागेषु वाग्यज्ञेनेन सेवा समपादि, तद्वारा स्वधर्मप्रसारश्चाकारि। अयि महाभागा दौर्भाग्यं महाराराष्ट्रजनतयाः विशेषतः त्र्यम्बकक्षेत्रवासिनां, यत् ईदृशी विभूतिः रामशास्त्रिमहात्मा ८।२।३८ ईशवीयदिने करालसर्वभक्तककालेनापहृतः, "मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः"—

न परिहरति मृत्युः पण्डितं श्रोत्रियं वा ।
धनकनकसमृद्धं बाहुवीर्यं नृपं वा ॥
तपसि नियमयुक्तं सुस्थितं दुःस्थितं वा ।
वनगत इव वह्निः सर्वभक्षः कृतान्तः ॥ १ ॥

इत्युक्तिः प्रतिदिनं अन्वर्था एव जायते। शास्त्रिमहाशयैः समं भाग्यं पौराणिकेषु क्वचिदुपलभ्यते इति प्रत्यक्षं सर्वेषाम्। शास्त्रिणां निःस्पृहता, दृढव्रतत्वं निश्चितनियमावहिर्वर्तनम् एतत्सर्वं अन्यैरपि अनुकरणार्हम्। श्रीत्र्यम्बकेशः तेभ्यः परमात्मैक्यसौख्यं वितरतु इत्याशास्महे इत्यलंपल्लवितेन—

त्र्यंबकाभिजनः शुक्लोपाह्व बालकृष्णशास्त्रि
तनुजन्मा विश्वेश्वरशर्मा साहित्य भूषणम्।

---

## काश्यां संस्कृतछात्रसम्मेलनम्।

गत शुक्रवारे आंग्लभाषायाः १८ तिथौ तदनुसारेण भाद्रकृष्णाष्टम्यां काश्यां संस्कृतच्छात्राणामेकं बृहत्सम्मेलनं विरलाविद्यालयाध्यक्षमहोदयानां श्रीसभापतिशर्मोपाध्यायानां साभापत्ये ससमारोहं सम्पन्नमभूत्। अस्मिन्ननेक संस्कृतपाठशालीयाश्छात्राः स्ववर्गैः राष्ट्रीयपताकाभिश्च सह सम्मिलिताः भूत्वा भागं जगृहुः।

सार्द्ध द्विवादनकाले दशाश्वमेधघट्टात् अध्यक्षमहोदयानां यानं सुप्रदर्शनपूर्वकं प्रचलितं तथा चैकघण्टानन्तरम् शनैःशनैः नगरभवनं समाययौ। मार्गे दीर्घपंक्तिषु चलन्तश्छात्राः "देववाणी चिरंजीवी हो" "संस्कृतभाषादीर्घजीवी हो" आदिक

तथा राष्ट्रियघोषनादं कुर्वाणा आसन्। सार्द्धत्रिवादनकाले सभायाः कार्यारम्भोऽभूत्। अत्र तादृशी महती जनसंख्या समायाता यत् बहवः छात्राः सभायाः समाप्तिपर्यन्तं बहिरेव स्थिता आसन्। उपस्थितेषु मान्यव्यक्तिषु माननीयशिक्षामन्त्रिणः श्रीसम्पूर्णानन्दमहोदयाः, डाक्टरमंगलदेवशास्त्रिणः, श्रीकमलापति त्रिपाठी, श्रीमत्यः जमुनादेव्यः, श्रीमदनमोहनशास्त्री पं० गोपालशास्त्री तथा पं० वामदेवमिश्राः इत्येतेषां नामानि विशेषतयोल्लेखयोग्यानि सन्ति।

अध्यक्षमहोदयाः संस्कृते भाषणं कुर्वन्तः संस्कृतशिक्षापद्धतौ समुचितसुधारस्य आवश्यकतां प्रदर्शयन्तः तस्या उन्नतेरुपायांश्च कथयामासुः। ततनंतरं श्रीमत्यः जमुनादेव्यः सुमधुरैः शब्दैः संस्कृतच्छात्राणां दशां स्पष्टीकुर्वन्त्यः शिक्षामन्त्रिमहोदयेभ्यः संस्कृतशिक्षायाः साहाय्यार्थं प्रार्थनामकुर्वन्। पश्चात् छात्रसंङ्घः शिक्षामन्त्रिमहोदयेभ्यः संस्कृतभाषायां मानपत्रं समर्पयामास। अस्योत्तरे भाषणं कुर्वन्तस्ते छात्राणामिदमान्दोलनंप्रति प्रसन्नतां प्रकटयन्तः छात्रेभ्य उपदेशं ददुः यत् "यदि देशस्योन्नतिकारिषु आन्दोलनेषु कार्येषु भागं गृह्णन्तः स्वशिक्षादीक्षासु च समयानुकूलं परिवर्तनं करिष्यन्ति भवन्तस्तदा भवतामुन्नतिः अवश्यम्भवितेति" अस्माकं दृढ़तरो विचारः। तदनंतरं श्रीमदमोहनशास्त्रिणां श्रीवामदेवमिश्राणां च मनोरञ्जनं भाषणमभूत्। अन्ते छात्राः डाक्टरमंगलदेवशास्त्रिणां पं० श्रीगोपालशास्त्रिणाञ्च सारगर्भितं भाषणं श्रुतवन्तः।

६॥ वादनकाले सभासमाप्तौ, छात्राः संघस्याग्रिमवर्षस्य पदाधिकारिणां कार्यकर्तृणां च निर्वाचनं कृतवन्तः। तन्निम्नाङ्कितं वर्तते - श्री पं० सभापति शर्मोपाध्यायाः अध्यक्षपदेनालंकृताः श्रीकाशीनाथपाण्डेयः "चन्द्रमौलि" श्रीशिवशंकरशास्त्री चोपाध्यक्षपदेन। प्रधानोपप्रधानमन्त्रिपदयोश्च श्रीमाधवप्रसादमिश्रः श्रीगिरिवरशास्त्री, अर्थमन्त्रिपदयोः श्रीपरमेश्वरमिश्रः श्रीगंगाधरमिश्रः, प्रकाशनमन्त्रिपदयोः वृजविहारी ओझा श्रीशिवप्रसादशास्त्री, प्रबन्धमन्त्रिपदयोः श्रीकेशवजी श्रीमातारूपमिश्रः, परिषद्मन्त्रिपदयो श्रीजितेन्द्राचार्यश्रीरामचोजत्रिपाठी, प्रचारमन्त्रिपदयोः श्रीगौरीशंकरशर्मा, श्रीवासुदेवशर्मा तथा निरीक्षकपदेषु श्रीकेशवार्य अणे श्रीवुद्धिसागरमिश्रः, श्रीकामाख्याप्रसादशर्मा, श्रीशिवबख्श शर्मा तथा श्रीकाशीनाथ शर्मा इत्येते जनाः मतसंग्रहपूर्वकं संस्थापिताः सन्ति।

वृजविहारी ओझा, प्रकाशन मन्त्री।



## सदुपदेशः ।

ले०—श्रीरामवचनपाण्डेयः "वचन," शान्तिनिकेतन
आशापगडरी ( आरा )

( १ )

वर्ध्यतां मानवाः ! शास्त्रचिन्ता भृशम् ।
प्राप्यतामात्मनीना समभ्युन्नतिः ॥
त्यज्यतां शत्रुरूपा दुरन्ता सदा ।
मोहनिद्रा यतो राक्षसी कीर्तिता ॥

( २ )

दृश्यतां भारते कीदृशी पूर्वजैः ।
शास्त्रतो वर्द्धिता धर्मकार्ये रतिः ॥
यत्प्रभावैर्भवन्तः किमद्यापि नो ।
सौख्यरामाः प्रकामं भजन्ते मुदा ॥

( ३ )

पाल्यतां धीधनाः ! सर्वकामप्रदं
ब्रह्मचर्यव्रतं येन लभ्यन्न किम् ? ॥
विस्मृतं तच्चरित्रं सुविज्ञैः कथम् ?
कीर्त्यते यन्महिम्नो गुरुर्भीष्मकः ॥

( ४ )

हीयतां हीयतां रूपजीवारतिः ।
चीयतां चीयतां कीर्तिराशिः सदा ॥
ध्यायतां ध्यायतां पावनी सा कथा ।
या शुकेन प्रसिद्धा जगत्यामहो ॥

( ५ )

विद्याप्रचारोऽस्तु यथानिकामं-
विद्यामधीत्यापि सखेऽत्र लोके,
संसारवृक्षस्य यशः फलैक्यं ।
चेयं ह्यवश्यं 'वचनरुच' श्रेष्ठम् ॥



# संस्कृतशिक्षाप्रचारः ।

भो ! इलावास-( इलाहाबाद ) वाराणसीप्रमुखदशकमिश्नरी-निवासिनः सज्जनाः !

सावधानतया निम्नलिखितप्रस्तावद्वयं शिक्षाविभागीयमन्त्रिमहोदयानां तथा श्रीमतां डाइरेक्टर महोदयानामेवमङ्ग्रेजी पाठशालीयेन्स्पेक्टर साहबानाञ्च सविधे प्रेषयन्तुतराम्। किञ्च मण्डलसमितिसभापतीनाञ्च सभापतित्वे सभाऽपि सम्पादनीया । प्रतिभाति चायमवसरस्साध्यसिद्ध्येः । नोदासितव्यं पौरुषेये कर्मणि पुरुषेण । प्रत्युत प्रचुरफलसाधनोपायो विधेयः । फलमपि पुरुषमपेक्षते । तथा चोक्तम्-पू० मी० अ० ३ पा० सू० ४ "फलञ्च पुरुषार्थत्वात्" ५ "पुरुषश्च कर्मार्थत्वात्" इति ।

( १ ) प्रस्तावः—प्रत्येक हिन्दीमिडिलस्कूले संस्कृतभाषाऽपि वैकल्पिकरूपा विभावनीयाः ।

( २ ) प्रस्तावः—अद्य सभायामेवं निश्चयो जातः—यदस्य मन्तव्यस्य प्रतिलिपिः प्रवर्त्तनीया—शिक्षा-मन्त्रिडाइरेक्टरयोः सविधे तथाऽङ्ग्रेजी पाठशालीयेन्स्पेक्टर महाशयान्तिके च ।

आवेदकः—श्रीरघुनन्दनशास्त्री पाण्डेयः काशीस्थ श्रीचन्द्रकालेजे धर्मशास्त्राध्यापकः, वलियामण्डलस्थः ।

---

# पौराणिक चरित्रसमालोचनम्।

निबन्धा—पण्डित दीनानाथ शर्मा शास्त्री सारस्वतः
[ स. ध. कालेजोपाध्यक्षः मुलतान ]
( क्रमागतम् )

किञ्चिदन्यदपि विवेक्तव्यम्।—अन्यदीयकन्यया सह मैथुनं पापं मन्मन्यते, स्वभगिन्या सह च विवहनं पापम्। परन्तु भवन्त ः पुरोहिताचार्य्यादिद्वारा वेद-मन्त्रविवाहविधौ पूर्ण्णे तां कन्यकां मैथुनायोपाददते, या विवाहात् पूर्व्वं भवद्भगिनी-सदृश्यासीत्। कन्या सा सैव स्थिता, तिलमात्रमप्यन्तरं तस्यां न प्राप्तम्। परं प्राग् भवतां तया सह मैथुनं पापमासीत्, परमधुना तयैव सह मैथुनं वैधं जातम्। यदि भवन्त एतमेवैकं नियमं स्थापयन्तु यद्—अन्यदीयकन्यया सह मैथुनं पापम्; तर्हि भवन्त ः खलु आमरणं ब्रह्मचर्य्यमेव समुपासताम्*। स्वपिताऽपि च भवद्भि ः पापी मन्तव्यो येन अन्यदीयकन्यायां भवन्तो वादिन उत्पादिताः। यदा वेदमन्त्रेष्वियं शक्तिर्यत्—कस्यचित् कन्यां वयं स्वपत्नीं निर्म्मातुं शक्ताः; एवं वेद-मन्त्र प्रणेतरि परमात्मनि देववृन्दे वाऽप्येषा शक्तिर्यत्—ते यां कामपि कन्यां पत्नीं निर्म्मातुं शक्ताः। प्रत्युत परमात्मा तु तासु निवसतीति सार्व्वजनीनम् सोमगन्ध-र्व्वाऽग्नयो देवा अपि च कन्यासु निवसन्ति। तेन ता ः पत्नीर्निर्मितवतां देवानां न पापयुक्तता।

अधुना योनिर्गृह्यताम्—एक योनिकृते यत् पापं भवति, न तद् योन्यन्तरकृते तथा। अनड्वान् स्वभगिनीं गां गर्भिणीं कुर्य्यात्; तर्हि न मन्यते पापी। परन्तु भवन्तस्तथा कुर्व्वाणा ः पापिनः स्युः। अथवाऽनड्वानुपेक्ष्यताम्। भवन्तो मनुष्य-जातिमाददताम्। शतपथब्राह्मण १४।४।२।५ मनुस्मृति १।३२ प्रभृत्यनुसारं परमात्मना स्वस्य द्वौ भागौ कृतौ, पुरुषः स्त्री च। इमावुभौ मैथुनान्नोत्पन्नौ। एवं दयानन्दिनां मतेऽपि स० प्र० अष्टम पृ० १३९ परमात्मना प्रत्येक जातेर्युगलमुत्पा-दितम्। अधुनोच्यताम् यद्—एकस्य सन्तानत्वादुभौ मिथो भगिनीभ्रातरौ जातौ नो वा ? एकस्या एव मातुर्गर्भादेकस्मिन् समये पुत्रपुत्रीद्वयं युगपद् भवति जातु; तौ पुत्रीपुत्रौ मिथो भगिनीभ्रातरौ भवतः। तदुच्यताम् यद् आदिमस्त्रीपुरुषौ मिथो भगिनीभ्रातरावपि कथं मैथुनेन संसारं वर्द्धितवन्तौ ? अथवा भवन्तोऽपि तथा स्वभगिन्या सह मैथुनं कथं न वैधं मन्यते ? एवं प्रश्ने भवद्भिः स्वयमेतन्मन्तव्यं

* उपासतामिति बहुवचनम्, सत्याऽत्।

भवेद् यद्—आदिमौ स्त्रीपुरुषावमैथुनोत्पन्नावास्ताम्, यथा च सत्यार्थ० अष्टम० पृ० १३८। वयञ्च भगिनीभ्रातर उभये पित्रोर्मैथुनादुत्पन्नाः। अत एव तयोरादिमयोर्मिथो मैथुनं मर्य्यादातो नासीन्निषिद्धम्। परन्तु अस्माकं मिथो मैथुनं मैथुनयोनिभवनान्मर्य्यादातो निषिद्धम्। इत्थं मन्तव्यं स्याद् यद्—देवजात्यै अमैथुनिकमनुष्यजात्यै चाऽन्या व्यवस्था भवेद्; मैथुनिक मनुष्यजात्यै चाऽन्या।

मनुष्येष्वपि सर्व्वेषां वर्णानां भिन्नभिन्ना व्यवस्था भवति। ब्राह्मणस्य याजनमध्यापनं प्रतिग्रहश्च कर्म्म; ब्राह्मणेतरेषाञ्च न तत्कर्म्म। द्विजानां वेदपठनं धर्म्मः; शूद्रादीनाञ्चाऽधर्म्मः। एवं पशुजातेरपि मिथो भिन्नभिन्नधर्म्माः स्युः। य एककृते धर्म्मो भवति ग्राह्यो वा, सोऽन्यकृतेऽधर्म्मोऽग्राह्यो वा भवति।

अधुना जातिर्गृह्यताम्।—हिन्दुजातौ पितृव्यस्य मातुलस्य वा कन्यया सह विवाहोऽधर्म्मो मन्यते; परन्तु मौहम्मदजातौ स धर्म्मः। अस्मदीयजातौ शिखायज्ञोपवीतादीनामपरिधानमधर्म्मो मौहम्मदादिजातौ तु तदपरिधानं धर्म्मो मन्यते। मौहम्मदा इतरोच्छिष्टपात्रे भुञ्जते जलमपि पिबन्ति; परन्तु हिन्दव एतद् घृणास्पदं मन्यन्ते। एकैव वार्त्ता एकत्र धर्म्मोऽन्यत्र च अधर्म्मोऽभूत्। अधुनोच्यतां यत् किं भवन्त एकमेव लक्षणमधर्म्मस्य एकमेव च धर्म्मस्य कदाचित् समग्रसंसारकृते निर्म्मातुं शक्ताः?

भिन्नजातिस्तु हेया, समानजातिरेव गृह्यताम्। समानजात्या धर्म्माऽधर्म्मौ सर्वं समाना ॥ किम्? कदाऽपि नहि। भवन्तोऽद्यत्वे हिन्दुजातिमेव पश्यन्तु—अस्यामार्य्यसमाजसम्प्रदायोऽशक्तपुरुषस्य स्त्रियाः (स० प्र० चतुर्थ पृ० ७३), दीर्घरोगिण ॥ पुरुषस्य च स्त्रियाः (स० प्र० पृ० ७४), पञ्चवर्षेभ्योऽधिकं प्रवसतः स्त्रियाश्च (स० प्र० पृ० ७३), पुरुषान्तरद्वारा मैथुनं कारयित्वा सन्तानद्वयस्य स्वस्मै, सन्तानद्वयस्येतरस्मै समर्पणञ्च धर्म्मं मन्यते; परं सनातनधर्म्म इत्थं विधानं व्यभिचारमधर्म्मं वा मनुते। यदा ते व्यभिचारं नियोगनामकधर्म्मं मन्वते; तर्हि तै ॥ पुराणेष्वपि ज्ञेयम्, यत् तत्र व्यभिचारो नास्ति; किन्तु नियोगनामक धर्म्म एव सः। कलियुगे च तस्य निषेधाद्, आर्य्यसामाजिकानामपि मते तस्य धर्म्मत्वेऽपि अद्यत्वे तत्रेष्टापत्तित्वाऽभावाद् अद्यत्वे स आचरणं नाऽर्हति; तेन पुराणेषु व्यभिचारदोषोऽपास्तः; अयं व्यभिचारोऽव्यभिचारो वा, अधर्म्मो धर्म्मो वा—अत्र शास्त्रीयपरिभाषैव प्रमाणं भवति। विधवया सह विवहनं चाण्डाल्या सह विवहनं, शिखाकर्त्तनं, यज्ञोपवीतस्याऽपरिधानञ्च सनातनधर्म्माऽऽर्य्यसमाजयोरुभयोर्मतेऽधर्म्मः; परं सुधारका एतदादिकं धर्म्मं मन्यन्ते।

एकस्मिन् सनातनधर्म्मे एव कश्चिद् भस्मधारणं धर्म्मं मन्यते; अपरश्चन्दनधारणम्। स स स्वविपरीतमन्यदीयकार्य्यमधर्म्मं मनुते। एकस्मिन्नेवाऽऽर्य्यसमाजे 'मांसपार्टी' 'घासपार्टी' च इमौ द्वौ विभागौ स्वस्वभक्ष्यवस्तु अदुष्टं मन्येते। अधुना

सर्व्वेषामेवेतिहासो लिख्येत; तर्हि भाविसन्ततय एषु कस्यचिच्छुभत्वेन मतं कार्य्यमप्यधर्म्मं * वेत्स्यन्ति; कस्यचिच्चाऽधर्म्मत्वेन मतमपि कार्य्यं धर्म्मं वेदिष्यन्ति। इदं वृत्तमेकजात्याः। एवं मौहम्मदादिजातिष्वपि ज्ञेयम्। फलत इत्थं पुराणेऽपि दृष्टिकोणस्थापनेन अद्य पुराणस्य काऽपि वार्त्ताऽस्माभिरभद्रा दृश्यते, काचिच्च भद्रा।

अधुना सूक्ष्मजातिष्ववधेयम्—मनुष्येषु कश्चन योगी भवति कश्चन च तद्भिन्नः। किं भवन्त एतयोरपि समानधर्म्माणौ कर्त्तुं क्षमाः? योगिद्वारा तपस्विद्वारा वा किञ्चन जातमपि पापं तं दग्धुं न शक्तम्; यतः स स्वतपश्चर्य्यया तत्पाप फलं दहति। तथा च मनुस्मृतौ—

> 'यत् किञ्चिदेनः कुर्व्वन्ति मनोवाङ्मूर्तिभिर्जनाः।
> तत्सर्व्वं निर्दहन्त्याशु तपसैव तपोधनाः' ११।२४१।
> वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा।
> नाशयन्त्याशु पापानि महापातकजान्यपि ११।२४५।
> यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात्।
> तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित्' ११।२४६।
> 'अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
> सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि' गीता ४।३६।

अधुनोच्यतां यत्—किं भवन्तः साधारणजनानां योगिजनानाञ्च समानतां कर्त्तुं कदापि प्रभवः?। यदि न; तर्हि तेषां समानाधिकारा अपि न भवितुमर्हन्ति।

भवन्त ऽ कञ्चित् पुरुषं हन्युः, अग्निर्वा कञ्चित् पुरुषं दहेद्, विद्युत् कमपि हन्तु, वृष्टिर्नदी वा कञ्चिन्निमज्जयेत्; तर्हि नेमे समानफलभाजः। पुरुषस्तु पापी मंस्यते; परमिन्द्राऽग्न्यादयो देवास्तत्र न स्यु ऽ पापिनः। भवन्त ऽ कस्याश्चित् स्त्रिया गुप्ताङ्गं करेण स्पृशन्तु; इतः सूर्य्यदेवोऽपि तत् स्वकरेण स्पृशतु। भवन्तस्तत्र पापा मंस्यन्ते न खलु सूर्य्यदेवः। भवन्त ऽ कयाचित् परस्त्रिया सह निधुवनं कुर्व्वन्तु; भवन्त ऽ पापिनः स्युः। परन्तु भवद्गुप्तेन्द्रिये स्थितः तत्र प्रवर्त्तयन्, तत्र व्यापकश्च परमात्मा न भवेत् पापी। तेन सिध्यति यद्—देवा ऋषिमुनयश्च भवद्दृष्ट्याऽधर्म्मं कुर्व्वाणा अपि न पापाः; यतस्ते शास्त्रोक्तविधिनिषेधव्यपवृक्ता भवन्ति; अत एवोक्तम्—'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः'। अथवा भवन्त एतदेव विचारयन्तु यद्—भवन्तो यत् खलु कण्ठं भित्वा पुराणेषु व्यभिचारो व्यभिचार इति जोघुष्यन्ते, तत्रेदं विवेक्तव्यं स्याद् यद्—अयं व्यभिचारो नास्ति; अयञ्च व्यभिचार इति, अत्र भवत्पार्श्वे किं प्रमाणम्?। भवन्तः स्वस्त्रिया सह मैथुनं व्यभिचारं न मन्यन्ते; अन्यस्त्रिया च साकं तादृशमेव व्यवहारं व्यभिचारं मन्यन्ते?। कथमेतद्।

* वेत्स्यन्तीति रौधादिकः, वेदिष्यन्तीति आदादिकः।

यद्यत्र शास्त्रं प्रमाणीक्रियते भवद्भिर्यत्—तत् स्वस्त्रिया सह मैथुनं शास्ति, अतो विधित्वात् स धर्म्मः। परस्त्रिया च सह तद् मैथुनं निषेधति; अतो निषेधत्वात् सोऽधर्म्म इति। तर्हि देवानां योगिनामृषिमुनीनां च कृते एतदादिविषये विधि-निषेधाऽभावात् तत्कर्म्म न धर्म्मपदवाच्यं नाऽपि चाऽधर्म्मपदवाच्यम्। अर्थात् तद् व्यभिचाराऽव्यभिचार शब्दव्यपदेश्यं न भवितुमर्हति। साधारणपुरुषाणाञ्च कृते तत्र निषेधात् तेषां कृते तत्कर्म्म अधर्म्मो वा व्यभिचारो वा तेन विधिनिषेधव्य-पवृक्तत्वादृषिमुनयो निर्दोषा× पुराणानि चाऽप्यदुष्टानि सिद्धानि—इति सूक्ष्मदृशा दृश्यताम्।

कथनस्य निष्कर्षोऽयम्—ये पुराणदूषकाः सन्ति, तैर्दोषारोपणरूपैकोपनयनं परिहितम्; तर्हि दोषमन्तरेण पुराणे तै× किमन्यद् दृश्येत? आम्, भवन्तोऽस्म-दुक्तचरनिकषं स्वनिकटे निदधतु *; ततो भवन्त× पौराणिकीं कुत्सितादपि कुत्सितां कथाञ्च तत्र परीक्षन्ताम्। स्वयमेव तत्परीक्षा भवेत्। भवतामस्मिन् देशे काले पात्रे वा यद् दोषत्वेन वीक्ष्यते; तदेव तस्मिन् देशे, तस्मिन् काले, तस्मिन् पात्रे, तस्यां योनौ, तस्यां जातौ, तस्मिंश्चाऽधिकारिणि दोषो न द्रक्ष्यते। अतएव महाभारतकारेण शान्तिपर्व्वणि स्पष्टमुक्तम्—

> "भवत्यधर्म्मो धर्म्मो हि, धर्म्माऽधर्म्मावुभावपि।
> कारणाद् देशकालस्य देशकालः स तादृशः॥
> मैत्राः क्रूराणि कुर्व्वन्तो जयन्ति स्वर्गमुत्तमम्।
> धर्म्याः पापानि कुर्व्वाणा गच्छन्ति परमां गतिम्" ॥ ७८। ३२-३३

अस्य आर्यसामाजिक सातवलेकरकृतोऽर्थः—'देशकालके व्यतिक्रम होनेसे उस देशकालके अनुसार ही धर्म्माऽधर्मका व्यतिक्रम अर्थात् धर्म अधर्म और अधर्म धर्म हुआ करता है। देखिये—उत्तङ्क पराशर आदि महर्षि लोगोंने क्रूर कर्म करके भी उत्तम स्वर्गलोकको जय किया है। और धर्मात्मा क्षत्रिय लोग भी पाप कर्म करके परम गति को प्राप्त हुए हैं।'

भवतामेतद् विदितं स्याद् यत्-प्राङ् मौहम्मदा यदा युयुधिरे; तदा हिन्दू-नामग्रे गा निधाय तान् पराजिग्यिरे। हिन्दवश्च गोवधभिया नैश्चिन्त्येन न व्यगृह्णन्। अधुना वीक्ष्यतां यत्—तेषां दृष्टौ गवां तदा मारणमधर्म्म आसीत्। परन्तु भवादृशा भारतहितैषिणो ब्रुवते यद्—'मैवम्। तत् तस्मिन् समयेऽधर्म्मत्वेन नाऽऽसीत्। यदि तदा गवां हननभयं न व्यधास्यत; तर्हि हिन्दवो मौहम्मदानवश्यं पराजेष्यन्त। तर्हि मौहम्मदराज्यनाशाद् अद्य परस्सहस्रा गावो नाऽमरिष्यन्निति'। एवमेकमेव कर्म्म एकस्य दृष्टावकर्म्म, अन्यस्य च दृष्टौ कर्म्म। तर्ह्युच्यतां यत्—साधारण

* निदधतु-इति बहु वचनम्।

जनाः कर्म्माऽकर्म्मणोर्निर्द्धारं कथं कर्त्तुं शक्ताः ?। अतएव भगवता श्रीकृष्णेनाऽप्य-कथ्यत—किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः' ४।१६।

अथ च पौराणिककथायां दोषोऽपि कथञ्चित् सिध्येत्; तर्हि भवद्भिस्तस्याः कथाया उपक्रमोपसंहारौ द्रष्टव्यौ यत्—पुराणमस्मभ्यमुक्तचरित्रे आचरणस्याऽऽज्ञा-मपि ददाति किम् ?। यदि तत् तद्विधिं नाचष्टे तर्हि भवद्भिर्ज्ञातव्यं यत्—तत् पुराणं तत्पुरुषस्य चरित्रमात्रमाचष्टे, तत्र वयं तदनुसर्त्तुं बाध्या न कृताः। शिष्टा वर्त्तते इयं वार्ता यद्—ईदृक्षं चरित्रं यस्य पुरुषस्य चित्रितम्; स साधारणोऽस्ति पुरुषो-ऽलौकिकशक्तिशाली वा ?। यदि स साधारणोऽस्ति पुमान्; तर्हि तस्य तद्—दोष-कुपरिणामोऽपि तस्यां कथायां दर्शितो न वा—इति द्रष्टव्यम्। ममाऽयं विश्वासो यत्—तस्य तद्दोषस्य कुपरिणतिरपि तस्यां कथायामवश्यं दर्शिता स्यात्। आम्—यदि स कश्चिदलौकिकशक्तिशाली मुनि प्रभृतिः; तर्हि तस्य अन्यासां लोकोत्तरशक्तीनां परिचयं प्राप्य भवद्भिरनुमेयं यत्—तेन स्वलोकोत्तरशक्त्या तद्दोषस्य कुपरिणामो दग्धः स्यात्। परन्तु वयन्तु लोकोत्तरशक्तिशालित्वाऽभावात् तद्दोषाऽनुसरणे गर्त्ते पात्येमहि। ईदृशाणां लौकिकदृष्टौ दोषतया भासमानानां चरित्राणां कृते भागवत-पुराणकारेण कियत्स्पष्टतयाऽभिहितम्—

'धर्म्मव्यतिक्रमो दृष्ट ईश्वराणाञ्च साहसम्। तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा' १०।३३।३०। नैतत् समाचरेज्जातु मनसाऽपि ह्यनीश्वरः। 'विनश्यत्याचरन् मौढ्याद् यथा रुद्रोऽब्धिजं विषम्' ।३१। ईश्वराणां बचः सत्यं तथैवाचरितं क्वचित्। तेषां यत् स्ववचोयुक्तं बुद्धिमाँस्तत् समाचरेत्' ।३२। कुशला-चरितेनैषामिह स्वार्थो न विद्यते। विपर्य्ययेण वाऽनर्थो निरहङ्कारिणां प्रभो ! ।३३। किमुताऽखिलसत्त्वानां तिर्य्यङ्मर्त्यदिवौकसाम्। ईशितुश्चेशितव्यानां कुशलाऽकुशला-ऽन्वयः ।३४। यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताऽखिल-कर्म्मबन्धाः। स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः' १०।३३।३५।

इदमुत्तरं भगवच्छ्रीकृष्णसदृशाऽलौकिकशक्तिशालिनां चरित्रस्य समालोचना-धृष्टतां कुर्व्वाणानां कृते पर्य्याप्तम्। अग्नौ विष्टाप्रक्षेपेणाऽप्यग्निर्न विक्रियते। सूर्य्यो-विष्टारसं समाकर्षन्नपि तेन न लिप्यते। गङ्गानदी आत्मनि प्रणालिकाजलप्रक्षेपणेऽपि तदीयकीटाणुभिर्लिप्ता न भूत्वा तानेव खलु नाशयति। पद्मपत्रं जले निवसदपि तेन नाऽऽविलं भवति। भगवान् रुद्रो हालाहलविषपानेऽप्यमरः स्थितः। परन्तु किं वादिसदृशाः साधारणा जना अपि तथा कर्त्तुं समर्थाः ?। श्रीकृष्णेन दावानलपानं कृतम्, तेनैव दुर्दान्तकालियनागस्य फणासु नर्त्तित्वा दर्शितम्। अमुनैव गोवर्द्धन-पर्व्वत एकाऽङ्गुल्यां निहितः, किं वादी तदीयशतांशमपि कर्त्तुमीशानः ?। यदि नेति, तत् पुनर्भवन्तः कथं तदीयसमालोचनां कर्तुमधिकृताः ?। यानि कर्म्माणि

भवद्भ्यः पापजनकानि, तानि तादृशाऽलौकिकशक्तिशालिने स्वदुष्फलमङ्कुरयितुं न शक्तानि। ते तत्कर्म्मरूपबीजं स्वसामर्थ्याद् दहन्ति। तदा तद् दग्धं कर्म्मबीजं पुनरङ्कुरीभवनेऽसमर्थम्। अत एव बृहदारण्यकोपनिषदि कथितम्—'स न साधुना कर्म्मणा भूयान्, नो एवाऽसाधुना कनीयान्' ६ ४।२२ एवं कौ० ब्राह्मणेऽपि ३।८। तत्रैवेदमपि लिखितम्—'तस्य मे तत्र लोम च न मीयते' इति। एतदर्थः स्वा० शङ्कराचार्य्येण वेदान्तदर्शनस्य १।१।३० सूत्रस्य भाष्ये लिखितः—'ईदृशान्यपि क्रूराणि कर्म्माणि कृतवतो मम ब्रह्मभूतस्य लोमाऽपि न हिंस्यते' इयमिन्द्रस्योक्तिः। एवं पुराणस्याऽधिकांशचरित्राणामुत्तरं त्वेतावतैव निष्पन्नम्।

श्रीमद्भिः स्वर्गतैर्महामहोपाध्याय-श्रीमदन्नदाचरणतर्कचूडामणिभिरप्येषैव दिक् स्वीकृता धर्म्मशास्त्रीयविरोधाभासमुपशमयितुं 'धर्म्मशास्त्रवचनविवेचन' नामके निबन्धे। तथा च तेषामिमे शब्दाः—

"जात्याश्रमदेशकालवयोऽवस्थाशक्तिकुलशाखाभेदत एव अधिकारिभेदो निर्णेतव्यः। अधिकारिभेदत एव व्यवस्थाभेदः।

जातौ यथा—ब्राह्मणानां कृते यौ विधिनिषेधौ भवतः, तत्रेतरे सर्वे नाधिकारिणः। यथा—ब्राह्मणस्य विहिते वेदाऽध्ययने शूद्रो नाऽधिकारी। ब्राह्मणस्य सुरापानं निषिद्धं शूद्रस्य तु न तथा।

आश्रमे—ब्रह्मचारिणां प्रतिदिनं भिक्षाचर्य्या विहिता, माल्यादिधारणं तु निषिद्धम्। गृहस्थस्य त्वनापदि भैक्ष्ये नाऽधिकारः, माल्यादिधारणे तु न दोषः।

देशे—दाक्षिणात्यानां मातुलकन्याविवाहो विहितो नेतरदेशवासिनाम्। अन्यदेशवासिनामेव मातुलकन्याविवाहो निषिद्धो न दाक्षिणात्यानाम्।

काले—अन्ययुगे क्षेत्रजपुत्रादयो व्यवस्थिता आसन्, कलियुगे तु ते निषिद्धाः। अन्ययुगजातानामधिकारस्तत्रासीत्, कलिजातानान्तु न तथा।

वयसि—पञ्चम—वर्षाधिकवयस्कस्य बालस्य यत ऽ पापं जायते, तन्न्यूनवयस्कस्य तु न ततस्तथा। सुतरां तन्निमित्तके तस्य प्रायश्चित्ते नाऽधिकारः। पञ्चमवर्षत ऽ पूर्व्वं ब्राह्मण बालकस्य उपनयने नाधिकारः, पञ्चमवर्षतस्तु विद्यते।

अवस्थायां—साधारण पापप्रायश्चित्ते विदुषां ब्राह्मणानां शिरोमुण्डने नाऽधिकारः, अविदुषां तु ब्राह्मणानां विद्यते तत्राधिकारः।

शक्तौ—सुस्थस्य युवकस्य एकादशीव्रतोपवासे अनुकल्पो नास्ति, पीडितस्य युवकस्य तु तत्राऽनुकल्पोऽस्ति। अत्र द्वितीयोऽनुकल्पेऽधिकारी, प्रथमस्तु अनुकल्पे नाऽधिकारी।

कुले—भृगुवंशीयानां चूडाकरणे शिखया सहैव मुण्डनम् अङ्गिरोवंशीयानां तु पञ्चशिखकेशवपनम्। अत्र प्रथमोक्तस्यैवैकविधोऽधिकारः, द्वितीयोक्तस्य त्वन्य-

विधः। गोत्रभेदतो जायते कुलभेदः। एकस्मिन्नपि गोत्रे पितृपितामहादिक्रमभेदतो भवति कुलभेदः।

शाखायां—सामवेदिनां वृद्धिश्राद्धे मातृपक्षो नास्ति; अन्यवेदिनां तु सोऽस्ति। अत्र वृद्धिश्राद्धे मातृपक्षस्थापने सामवेदी भवत्यनधिकारी, अन्यस्त्वधिकारीति॥ यजुर्वेदे कण्वशाखातैत्तिरीयशाखा च विद्येते। तत्र काण्वाः श्राद्धे 'नमो वः पितरो रसाय' इत्यादि मन्त्राणां प्रयोगे यथाऽधिकारिणः, तैत्तिरीयास्तु न तथा। शाक्त-वैष्णवादिसम्प्रदायभेदोऽप्यत्रैवाऽन्तर्भवति। शाक्ता यथाऽऽचरेयुः, वैष्णवास्तु न तथा।......

नास्ति वेदवचसामनैक्यम्, न विद्यते स्मृति-(पुराणे)षु परस्परविरोधः, न वर्त्तते च मुनिजनमतेषु वैषम्यम्। परन्तु अधिकारिभेदतएव उपदेशभेदः प्रदर्शितः। धर्म्माचरणे प्रथमतः शास्त्रमनुसन्धेयम्। तत्राऽऽपाततो मतभेदेऽनुभूयमाने महाजनपरिगृहीतं मतमेव परिग्राह्यम्। तत्राऽप्यनैक्ये उपलभ्यमाने स्वपितृपितामहादिभिरङ्गीकृतं महाजनमतमेवाऽऽश्रयणीयम्। तस्मिन्नविदिते वैषम्ये वा प्रतीयमाने आत्मतुष्टिकरमतमेवाऽनुकरणीयम्। तत्राऽपि संशये श्रीगुरोः, परमश्रद्धास्पदस्य धार्म्मिकस्य वा कस्यचिदुपदेशोऽवलम्बनीयः। शास्त्रविरुद्धं महाजनाचरणमपि नाऽऽदरणीयम्। अस्ति च गौतमसंहितायाम्—"दृष्टो धर्मव्यतिक्रमः साहसञ्च महतां, न तु दृष्टोऽर्थो वरो दौर्बल्यात्"। महतामपि धर्म्मव्यतिक्रमः साहसञ्च दृश्यते, तद् दृष्टमाचरणं प्रमाणं न भवति, यतः—शास्त्राऽऽचरणयोर्मध्ये शास्त्रं बलवत्। तस्माच्छास्त्रविरुद्धं महाजनाचरणमपि नाऽऽदेयम्। एवं शास्त्रसिद्धमपि महाजनाऽपरिगृहीतमाचरणं नाऽऽदरणीयम्। एवं महाजनपरिगृहीतमपि स्वपितृपितामहाऽपरिगृहीतमाचरणं न ग्रहीतव्यम्; यथा—पशुबलिदानमिति।"

इत्थं पुराणानां निष्कलङ्कता सिद्धा। तदीयमुनिप्रभृति चरित्रपरीक्षणस्याऽपि निकषोऽस्माभिः प्रदर्शितः। अवशिष्टानि सन्ति तेषु देवचरित्राणि। तेष्वपि तथैवाऽलौकिक सामर्थ्यम्। तेषां भिन्नयोनित्वाद् अस्मद्योनिनियतपापानि तेषां कृते न पापानि। यथैव भवदीयानि पापकर्म्माणि भोगयोनिनां पशुयोनिनां कृते न पापानि; तथैव भोगयोनि देवादियोनीनां कृतेऽपि न पापानि। देवानां तथा तेभ्योऽधस्तनानामृषिमुनीनामप्यलौकिकशक्तिमत्त्वाद् अल्पशक्तिकानां तैः सह साम्यं दुश्शकम्। भवदीया लघुशङ्का (मूत्रं) यथा पिपीलिकायै समुद्रः, वृष्टिश्च तत्कृते महाप्रलयः, भवत्पुरीषं खलु पर्व्वतः पिपीलिकाकृते; तथा पर्व्वतपतनं पिपीलिकायै सर्व्वं पृथिवीपतनम्; तथैव भवन्तो देवानां प्रतियोगितायां पिपीलिकाया लक्षतमांशादपि न्यूनाः। भवन्तः सूर्य्यदेवमेव पश्यन्तु; भवन्तस्तस्य सम्मुखे पिपीलिकायाः कोटितम भाग तुल्या अपि न स्युः। एवं यदा देवतानां भवताञ्च परि-माणे तथा योग्यतायां तथा पदव्यामियान् भेदः, तर्हि भवतां तेषाञ्च कर्म्मणां साम्यं कथं भवितुमर्हेत्?।

भवन्तः कुन्त्याः सूर्य्यदेवेन कुमाराऽवस्थायां धर्म्मराजवायुपुरन्दरादिदेवैश्च विवाहितावस्थायां नियोगं मन्यन्ते। वयं नियोगप्रश्नम् * अप्रकृतत्वाद् इहोपेक्षामहे। भवन्त इमं नियोगमुत्तमं मन्यन्ते। परन्तु भवन्तो जानीयुर्यत्—पुराणेतिहासानुसारं धर्म्मराजः ( यमः ) सूर्य्यस्य पुत्रोऽस्ति। सूर्य्यश्च यस्याः कुन्त्याः † कर्णनामकं पुत्रमजीजनत; सैव कुन्ती सूर्य्यपुत्रस्य धर्म्मराजस्य मातृसदृशी जाता। परन्तु पुनर्धर्म्मराजेनाऽपि कुन्त्यां युधिष्ठिरः कथमुत्पादितः? यदा भवन्त इमं नियोगं युक्तं मन्वते; तर्हि स्पष्टं जातं यद् धर्म्मराजस्य स्वपितुः स्त्रीत्वात् तस्यां गमनं मनुष्ययोनिदृष्ट्याऽयुक्तमपि देवयोन्यै तन्न दोषावहम्। एवं देवताद्वयस्य तया सह नियोगे सति तस्यां स्त्रियामन्यस्याऽधिकारे मनुष्यदृष्टिकोणेनाऽयुक्तेऽपि इन्द्रवाय्वादिभिः पुनस्तन्नियोगोऽभूद् यो भवन्मते युक्तः। एतेन सिद्धं यद्—देवयोनेर्व्यवस्था भिन्ना, मनुष्ययोनेश्च व्यवस्था भिन्ना। अतएव महाभारतव्याख्यात्रा श्रीनीलकण्ठेन महाभारते आदिपर्व्वणि २।११३ श्लोक व्याख्यानवसरे उक्तम्—

'सर्वे सर्वात्मका देवा विरजोऽवयवा यतः। सर्व्व एव समाः सर्व्वेऽनन्ता इति हि वेदगीः॥ नत्वेषां व्यभिचारोऽस्ति, न चेत् सूर्य्यंयमौ कथम्। पितापुत्रौ, सतीं कुन्तीमुपेयातां सुरोत्तमौ॥ द्रौपदीं देवजां पार्था देवजा यदि भुञ्जते। न तेषामत्र दोपोऽस्ति देवा एव हि ते स्वयम्॥ श्रूयते नहि वै देवान् पापं गच्छति सर्वथा तस्माद् यज्ञैर्दैवभावं प्रार्थयेत निरागसम्"। एवं महाभारतेऽन्यत्राऽपि क्वचिदुक्तम्—'कृतानि यानि कर्म्माणि ऋषिभिश्च पुरातनैः। न चरेत्तानि धर्मात्मा श्रुत्वाऽपि न कुत्सयेत्'।

( क्रमशः )

---

* नियोगविपये 'संस्कृतम्' पत्रे ८।७।८ मल्लेखो द्रष्टव्यः।

† वस्तुतस्तु सूर्य्यस्य कुन्त्या सह मैथुनं न जातम्, अतएव महाभारते वनपर्व्वणि उक्तम्—'नाभ्यां पस्पर्श चैव ताम्' ३०७।२२ 'तिग्मांशुस्तां तेजसा मोहयित्वा, **योगेनाऽऽविश्याऽऽत्मसंस्थं** चकार। न चैवैनां दूषयामास भानुः' ३०७।२८। एतेन योगविद्यया स स्वं कुन्त्यां निहितवान्, तत्कन्याभावं न दूषयामास। एवं पाण्डवानां विपयेऽपि वरदानादुत्पत्तिः कथिता, तथा च—'कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा। धृतराष्ट्रस्य पाण्डोश्च पाण्डवानाच सम्भवः' आदिपर्वणि २।१०१।

## बहराइच ( अवध ) मण्डलस्थ-संयुक्तप्रान्तीय-संस्कृत-शिक्षा-सुधारसम्मेलनस्य सभापतेरभिभाषणम्।

[ सम्वत् १९९५ वै० वैशाखकृष्ण नवम्याम् ]

[ बहराइच—( अवध ) मण्डस्थ-संयुक्त प्रान्तीय-संस्कृत शिक्षा-सुधार-सम्मेलन-सभापतिपदमधितिष्ठतां, महामहाध्यापकानां, क्षेमधरिणां, श्रीमतां दर्शनकेशरि-पण्डित-श्रीगोपालशास्त्रि त्रिपाठि महोदयानाम्, ( साहित्याचार्य-न्यायतीर्थ-व्याकरणशास्त्रि-राष्ट्रभाषाभूषण-पण्डितभूषणानाम्; श्रीकाशी-विद्यापीठदर्शनाध्यापकानां, काशीपण्डित-सभाप्रधानमन्त्रिणाम्; काशीस्थ-साहित्यसमाजसदस्येष्वन्यतमानाम् ]

ॐ रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नस्कृधि, रुचं विश्येषु शूद्रेषु, मयि धेहि रुचारुचम्। ॐ आ ब्रह्मन्! ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्। द्रोग्ध्री धेनुर्वोढाऽन-ड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम् योगक्षेमो नः कल्पताम्।

सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् देवा भागं यथापूर्वे संजानाना उपासते। समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषाम्। समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा संजुहोमि।

निगमनिहितमूला या रसाङ्कै विरूढा,
स्मृति-विविध-पुराणैः प्रसृता या पृथिव्याम्।
कपिल-कणभुगाद्यैः साद्य तर्काम्बु-सिक्ता
दिशतु फलमनल्पं संस्कृता कल्पवल्ली॥ १॥

युगे युगे योऽवततार गोपितुं यां भारतीं स्वाममराभिवन्दिताम्।
विमार्गितां सम्प्रति शासकैरहो तामानयेदध्वनि सोऽधुना हरिः।

अयि श्रीमन्तः स्वागतसमिति-सभापतयस्तथा तत्सदस्याः! उपस्थिता-श्चान्ये सभासदो विद्वांसः! विविधानवद्यविद्या-विभूषिताश्च विदुष्यः छात्राश्च प्रेयांसः!

सत्स्वपि विद्वत्तल्लजेषु बहुषु श्रीमत्सभासञ्चालनदक्षेषु मय्येवायं भारो

भवद्भिरर्पित इति तत्र भवतां सादरातिरेकमुपहारमिमं वोढुमसमर्थोऽपि श्रीमतामतिगाढस्नेहावर्जितस्वान्तो नितान्तमानतशिराःससाहसं सहसोरीकृत्य "सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति" इति नीतिनियमं स्मारम् स्मारम् श्रीमतां साहाय्यबलदत्तहस्तावलम्बः श्रीसुरसरस्वतीसेवायां समुपस्थितोऽस्मि ।

यद्यपि वर्षस्याऽन्तिमोऽयं समयोऽस्माकमध्यापकानां कृते कार्यबाहुल्यसम्भृत एव भवति । तथापि श्रीमतामनुरोधस्यानुल्लङ्घनीयतया, साम्प्रतिकसंस्कृतशिक्षासरणेः सुतरां संशोधनावश्यकतया, समुपस्थित-सुरसरस्वतीसेवावसर-सन्त्यागासमर्थतया, स्वमनोऽभिलषित-कर्तव्य-मध्यपतितैककर्तव्यतयेत्येतादृशान्यकारणकलाप-गरिमाणमाकलय्य समयाऽभावेऽपि श्रीमतामन्तिके समुपस्थातुं समुत्सुकोऽभवमेव । सम्प्रति तस्यैवाशेष-कार्य्योपादानगोचरापरोक्षज्ञान - चिकीर्षाकृतिमतोऽनिर्वचनीयाविद्या - द्वितयसचिवस्य भगवतः करुणावरुणालयस्य करुणाकटाक्षक्षेपेण श्रीमताञ्च सामर्थ्यवतां सत्साहाय्येनावश्यमिदं कृत्यजातं साफल्यमेष्यतीति नास्तीह संशयलवलेशः । प्रान्तेऽस्मिन्नैषमो बहवो वाराणसीस्था बहिस्थाश्च मान्या विद्वद्धौरेया अस्मान् विहाय परलोकं प्रस्थिता इति तेषां नामग्राहं स्मरणं विधाय तेभ्यः सश्रद्धाञ्जलि शोकपुष्पोपहारमेवोपहरामः । तत्र महामहोपाध्यायाः स्वनामधन्याः सर्वतन्त्रस्वतन्त्राः पण्डित अन्नदाचरणतर्कचूडामणिपादाः, महामहोपाध्यायाः पं० मुकुन्दझा बक्शीमहोदया महापण्डिताः काशीनाथशास्त्रिणो, व्याख्यानवाचस्पतयो महामहोपदेशकाः पण्डितदीनदयालुशर्माणः, महात्मान इमे स्मृतिपथमुपेताः शोकाकुलितं चित्तं चञ्चलयन्ति। एवम् एतेषां त्रिदिवं प्रस्थितानामभावेन संस्कृतभाषायाः सनातनधर्मस्य च महती क्षतिः सञ्जाता साऽपूरणीयैव भाति—अस्तु "जातस्य हि ध्रुवो मृत्यु र्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्य्येऽर्थे नत्वं शोचितुमर्हसी"ति श्रीमद्भगवद्वचनं संस्मरन्तो वयमग्रे व्रजामः—

संस्कृत-भाषा-शब्दार्थ-विवेचनम्—

सर्वप्रथमं संस्कृतभाषाशब्दार्थे एवाधुनिकानां तदनभिज्ञानां प्राकृतभाषापक्षपातिनां विवादो विद्यते । ते हि कथयन्ति "यदियं भाषा कदापि लोकव्यवहारे प्रयुक्ता नाभवत् । किन्तु लोकव्यवहारे प्रचलन्तीं प्राकृत-

भाषां संस्कृत्य इयं संस्कृता भाषा विद्वद्भिराविष्कृता। केवलमियं पुस्तक-लेखन-ग्रन्थप्रणयन-मात्रोपयोगिनी विद्यते। नेयं कदापि व्यवहारभाषा आसीदिति।"

परन्तु अत्र विषये ते भ्रान्ताः सन्ति। "संस्कृतभाषा-शब्दस्यार्थो हि, संस्कृता परिष्कृता शुद्धा चासौ भाषा वाक् इति। आहोस्वित् संस्कृतानां संस्कारवतां मानवानां भाषा वाणी इति वा। फलतो या हि वाणी शुद्धा व्यवहियतेऽथवा संस्कारशालिभिर्नरैर्व्यवहियते सा संस्कृत-भाषा कथ्यते।

भाषाशब्दार्थोऽपि, भाष्यते स्पृष्टादिप्रयत्नैः कण्ठताल्वादिस्थानैरुच्चार्यते या सा 'भाषा' इति व्युत्पत्तिलभ्योऽर्थ एवास्या व्यवहारोपयोगितां प्रकाशयति। प्राकृतभाषा तु प्राकृतानां पृथग्—जनानां भाषा प्राकृत-भाषेति व्युत्पत्त्या सामान्यजनैः प्रयुज्यमानाया भाषायाः संज्ञा भवितुमर्हति। इत्येवं वैदिकेतिहासदिशा यां भाषां प्राक्तने काले संस्कारवन्तः शिष्टाः सभ्या मानवा भाषन्ते, प्रयुञ्जते स्म, सा संस्कृतभाषेति नाम्ना व्यवहृताऽभूत्। या च तदानीन्तनैः "मुखबाहूरुपाज्जनां या लोके जातयो बहिर्म्लेच्छवाचश्चार्य्यवाचस्ते सर्वे दस्यवःस्मृताः" इति दस्युशब्दवाच्यैः पृथग्जनप्रभृतिभिर्व्यवहृता समजनि सा हि प्राकृतभाषेति नाम्ना उच्यते स्म। यथा साम्प्रतमपि एकस्मिन्नेव प्रान्ते-कोल-भिल्ल-किरातादिभिर्भाष्यमाणा अन्यैव भाषा विद्यते। शिष्टैर्भाष्यमाणा त्वन्यैवास्ति इति। अपरञ्च पाणिनिसूत्रेषु कात्यायनवार्तिकेषु त्वस्याः संस्कृतभाषायाः कृते केवलभाषा शब्दप्रयोग एवास्यास्तदानीन्तने लोके व्यवह्रियमाणत्वं डिण्डिमघोषमुद्घोषयति। तथाहि—पाणिनिसूत्रेषु लौकिकी वैदिकीति भाषाद्वयी संसाध्यमाना दृश्यते। लौकिकभाषा तु इयं संस्कृतभाषैव गृह्यते नान्या। इत्येवं सति लोके प्रयुज्यमाना यदीयं न स्यात् तर्हि कथमियं भाषाशब्दमात्रेणैव तेषु सूत्रेषु गृहीता स्यात्। सूत्राणि—च यथा—

"भाषायां सदवसश्रुवः" ३-३-१०८। "सख्यशिश्वीति भाषायाम्" ४।१-६२। "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः"-४-३-१४३। "स्थे च भाषायाम्" ६-३-२०। "प्रथमायाश्च द्विवचने भाषायाम्"—७-२-८८। "पूर्वन्तु भाषायाम्" ८-२-९८। "प्रत्यये भाषायां नित्यम्" (वार्तिकम्) इति च।

मानवानां भाषेयमासीदित्यत्र तु वक्तव्यमेव किञ्चिन्नास्ति । अपि त्वियं विश्वभाषा आसीदित्येव मे वक्तव्यं विद्यते । यथा साम्प्रतं इङ्गलिश-भाषा विश्वभाषास्थानमासादयतीव दृश्यते, तथेयमस्माकं संस्कृतभाषा तदानीं विश्वस्मिन्नपि द्वीपे विश्वभाषास्थानमासाद्य सर्वैरपि सभ्यैः पुम्भि-र्व्यवहृता भवति स्मेति निश्चप्रचम् । पश्यन्तु, वाल्मीकिरामायणे सुन्दरकाण्डे हनुमत्सीतासंवादम् । तत्र हि भाषान्तरभाषी हनूमान् यदा अशोकवाटि-कायां सीतादेवीसकाशं गच्छति तदा तत्र कया भाषया व्यवहर्तव्यमिति विचारे प्रस्तुते देव्या सीतया सह स संस्कृत-भाषामाश्रित्यैव स्वव्यवहार-मातनोति—तथाहि—

"अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ।"

इत्यतः स्फुटमेव प्रतीयते, यत् पूर्वकालेऽस्माकं संस्कृतभाषा सर्वत्रापि अविहतप्रचाराऽऽसीत् । अत एव महाकविः श्रीहर्षोऽपि दमयन्तीस्वयम्वरे सर्वतो दिग्देशान्तरतो द्वीपद्वीपान्तरतश्च समवेतानां मानवानां राज्ञां महाराजानां देवानाञ्च समवाये संस्कृतभाषयैव व्यवहारो भवति स्मेति स्पष्टमेवाभिदधाति । तथा हि—

"अन्योऽन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु ।
दिग्भ्यः समेतेषु नृपेषु तेषु सौवर्गवर्गो न जनैरचिह्नि ॥इति॥ (नै० १०।३४)

महाभारतेऽपि राजसूयाध्वरे द्वीपद्वीपान्तरतः समुपस्थिता राजानः संस्कृतभाषयैव व्यवहरन्तिस्म । तदानीन्तु न काप्यन्या भाषा विश्वजन-व्यवहारसाधिका दृश्यते, ऋते इमां संस्कृतां सुरभारतीम् ।

ऐतिहासिका अपि कथयन्ति यत् मातृ-पितृ-भ्रातृ—स्वसृ—प्रभृतयः परिवारपरिजनवाचकाः शब्दास्सर्वत्रैव शर्मण्याङ्गल-रोम-मिश्रजय-माणादिदेशेषु समाना एवोपलभ्यन्ते । अतः सर्वेऽपि इमे पूर्वं संस्कृतभाषा-भाषिण एकत्रैव समवेताश्चासन्, तत एव च पृथग्भूता इति । संस्कृत-भाषात एव च सर्वा अपि प्राचीना द्वीपान्तरस्था लैटिनप्रभृतयो भाषा विनिर्गता इति च । इह भारतेऽपि सर्वत्रैवेयं सामान्यतो राष्ट्रभाषापदम-

लङ्कुर्वती नेपाल-लङ्का-मगध-सौराष्ट्र-सौरसेन-वङ्ग-गुर्जरान्ध्र-महाराष्ट्रादि-देशेषु पूर्वं व्यवहियमाणा आसीदित्यत्र तु पाली-मागधी-सौराष्ट्री-सौरसेनी-वङ्गाली-गुर्जरी-महाराष्ट्री-हिन्दीप्रभृतिभाषासु अस्याः संस्कृतभाषायाः तत्सम-तद्भवशब्दानां प्राचुर्यमेव जागरूकं प्रमाणं विद्यते, इत्यत्र विषये-दिङ्मात्रमभिधाय—

"वह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः॥ (मा० २।)

इति माघोक्तिमनुस्मरन् भगवतः सहस्ररश्मेश्चण्डांशोर्मार्तण्डस्य प्रखर-किरणप्रतप्त-दिग्देशोष्म-विभीषिकायाश्च विभ्यत् प्रक्रान्त-पोपक्रमपि प्रकृता-न्तर मनभिदधदेवाति-संक्षेपेणैव प्रकृतमनुस्मरामि!

प्राक्तनी पाठ्यप्रणाली।

एवं सर्वभाषाजनन्या द्वीपद्वीपान्तरसंचारणशीलाया विश्ववन्दिताया वृन्दारकवृन्दवन्द्याया अस्याः सुरसरस्वत्याः प्राक्तने काले कीदृगा-सीदध्ययन-पद्धतिरित्यत्र विमृश्यते किञ्चित्—

भारतीय-संस्कृति-समेधकस्तदीय-मर्मज्ञो विद्वान् महाकविकालिदासो हि स्वकीय—रघुवंशमहाकाव्ये वरतन्तु-कौत्ससंवादमिषेण प्राक्तनी-मध्ययन-पद्धतिं प्रकटीकरोति। तथा हि—

"समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद् गुरुदक्षिणायै॥
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात्।
निर्बन्ध-सञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः॥
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति"

इति पद्याभ्यां सूच्यते यत् प्राक्तने काले गुरुभक्तिं पुरस्कृत्य—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्याश्चैताश्चतुर्दशेति

चतुर्दशापि विद्या गृहस्थाश्रमप्रवेशतः पूर्वमेव गुरुकुलमधितिष्ठन्नेवान्ते-वासी अधीते स्म। पश्यन्तु, कीदृशी सा पाठ्यप्रणाली आसीत् यत्र—

शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च।
ज्यौतिषञ्चेति बोध्यानि षडङ्गानि क्रमाद् बुधैः।

इति षडपि अङ्गानि, ऋग्यजुः सामाथर्वेति चत्वारोऽपि वेदाः । पूर्वोत्तर-मध्यभेदेन तिस्रोऽपि मीमांसाः । जैमिनिनिर्मिताः पूर्वखण्डात्मिका अङ्गिरोनिर्मिता उत्तरखण्डात्मिका चेत्युभयखण्डा कर्ममीमांसा, भरद्वाजनिर्मिता दैवीमीमांसापरनामधेया मध्यमीमांसा, व्यासप्रणीता तूत्तरमीमांसा वेदान्तापरनामधेया न्यायविस्तारशब्दवाच्यानि न्याय-वैशेषिक-सांख्य-योगादीनि तार्किकदर्शनानि, मन्वादीनि धर्मसूत्राणि, "'म'-द्वयं 'भ'-द्वयञ्चैव 'ब्र'-त्रयं 'व'-चतुष्टयम् । 'अ'-'ना'-'प'-'लिं'-'ग'-'कू'-'स्कानि पुराणानां नवद्वयी' इति। अष्टादशपुराणानि च प्रसिद्धानि। इत्येवं चतुर्दशापि विद्या अल्पीयसैव कालेनाधीत्य व्यवहारदीक्षिता भूत्वा प्राक्तना विद्वांसः सर्वाण्यपि लोकवेद-व्यवहारकार्याणि कुर्वन्ति स्म । प्राक्तनानां विदुषां शास्त्रलोकोभयव्यवहार-दक्षतायान्तु—

"लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ।
चत्वारो लोकधर्मज्ञाः पर्षत् त्रैविद्यमेव वा"

इति स्मृतिकृतामुक्तिरेव बलीयसी प्रमाणकोटीमाटीकते । तादृशा एव विद्वद्धौरेयाः तदानीन्तनराजन्यनिचयचुम्बितचरणाः चाणक्य-माधवाचार्यमेधातिथिप्रभृतयो बहवो मान्यतया गण्यन्ते ऐतिहासिकै ये हि शास्त्रे लोके चाविहतप्रतिभा आसन् । चाणक्यो हि संस्कृत-विद्यायाः पारङ्गतो विद्वानासीत् इति तदीय-कामसूत्रवात्स्यायनभाष्य-कौटिल्यार्थशास्त्रादिग्रन्थत एव प्रतीयते । तस्य राजनीति-निपुणताऽप्येतादृशी दृश्यते यया स नवनन्दान् प्रच्याव्य चन्द्रगुप्तसाम्राज्यं दृढीचकारेति के संस्कृतज्ञा ऐतिहासिका वा न जानन्ति ? माधवाचार्य्यस्यापि धर्मशास्त्रवेदभाष्य-जैमिनीयमीमांसा - वैयासिक-न्यायमाला - पञ्चदशीप्रभृतिग्रन्थराशिप्रणयनात् प्रस्फुटमेव शास्त्रीयं पाण्डित्यं प्रद्योतते, व्यवहारकौशलञ्च —

"इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि-
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥

इत्यादि तदीयवाक्येन तथा विजयनगरप्रतिष्ठापनाद्यनेक-राजनैतिक-व्यावहारिक-कार्यकलापतः प्रतीयत एव। प्राक्तना हि विद्वांसः कं विषयं न जानन्ति स्म। राजसमाजसभायां, व्यवहारकुशलतायां, सैनापत्ये, शुल्कशालायां, शासनविभागे, सन्धि-विग्रहादिकृत्येषु सर्वत्रैव तु तानेव प्राक्तनान् सुधियः पश्यामः। किम्बहुना, श्रीहर्षाप्पयदीक्षित-जगन्नाथादीनामाधुनिकानामपि विदुषां सर्वतोमुखीना पाण्डित्यप्रकृष्टि र्दृश्यते। प्राक्तनानां विदुषान्तु कथैव दूरे तिष्ठतु, अर्वाचीनस्य मल्लिनाथस्य महाकवे र्भारत-पारतन्त्र्यावस्थायामपि—

"वाणीकाणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत्।"
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां।
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः॥ इति तदुक्त्या

माघभारविकालिदासादिप्रसिद्धकवीनां काव्यस्योपरि तदीयपाण्डित्यपूर्णव्याख्यया च सर्वशास्त्रप्रसृतं तदीयं पाण्डित्यं के हि प्रकृष्टप्रज्ञाः प्राज्ञा न जानन्ति ?

ज्योतिः शास्त्रप्रणेतुः भास्कराचार्यस्यापि—

"अष्टौ व्याकरणानि षट् च भिषजां व्याचष्ट ताः संहिताः।
षट् तर्कान् गणितानि पञ्च चतुरो वेदानधीते स्म यः।
रत्नानां त्रितयं द्वयञ्च बुबुधे मीमांसयोरन्तरम्।
सद्ब्रह्मैक्यमगाधबोधमहिमा सोऽस्याः कविर्भास्करः।
"भास्करीयगिरां सारं भास्करो वा सरस्वती।
चतुर्मुखोऽथवा वेत्ति विदु र्नान्ये तु मादृशाः।" इति

इत्याद्युक्तयो मर्मज्ञानां विदुषां न सन्त्यगोचराः। आधुनिकस्यैव साहित्यदर्पणकर्तुर्विश्वनाथस्येयमुक्तिर्विद्यते यद्—"अष्टादशभाषावारविलासिनीभुजङ्गोऽहमिति"। इत्येवं कीदृशाः प्रकृष्टाः पदवाक्यप्रमाणपारावारीणा विद्वांसः पूर्वं प्राक्तन-पाठ्य-पद्धत्या पठन्तो भवन्ति स्मेति तेषां ग्रन्थराशेः पर्य्यालोचनयैव प्रतीयते।

अवदधतु, राजनीतिनिपुणस्य महाकवेर्विशाखदत्तस्य तदीये मुद्राराक्षसेऽतिप्रसिद्धे सकलशास्त्रवैदुष्यम् कीदृशमभिव्यज्यते ?

"साध्ये निश्चितमन्वयेन घटितं बिभ्रत् सपक्षे स्थितिम् ।
व्यावृत्तश्च विपक्षतो भवति यत् तत्साधनं सिद्धये ।।
यत्साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धश्च यत् ।
तस्याङ्गीकरणेन वादिन इवाऽस्यात् स्वामिनो निग्रहः" (मुद्रा० ५।१

इत्यादिना नैयायिकत्वम्—

"क्रूरग्रहः स केतुश्चन्द्रमसं पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात् रक्षत्येनं तु बुधयोगः ।
लग्नं भवति सुलग्नं सौम्ये ग्रहे यद्यपि दुर्लग्नम्
वहसि दीर्घां सिद्धिं चन्द्रस्य बलेन गच्छन् । (मुद्रा० ४।२

इत्यादिना ज्योतिर्विद्यावेदित्वम् ।

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना ।
मुहुः सम्पूर्णाङ्गी मुहुरतिकृशा कार्य्यवशतः ।
मुहुर्नश्यद्बीजा मुहुरपि बहुप्रापितफले-
त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ।।

इत्यादिना राजनीतिज्ञतागाधता च । सर्वमप्यक्षन्तु मुद्राराक्षसेति रा
नीतिप्रधान नाटकप्रणीतिरेव तदीयं राजनीतिनैपुण्यं प्रकाशयति ।

भवभूतेश्च महाकवेः—

विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि विप्रलयः कृतः ।

इत्यादिना वेदान्तित्वम् ।

माघस्य च कवेः—

रणद्भिराघट्टनया नभस्वतः पृथग् विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ।

इत्यादिना सङ्गीताभिज्ञता ।

उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृतेः पृथक् विदुः पुरातनं त्वां पुरुषं पुराविदः ।।

इत्यादिना सांख्ययोगज्ञता ।

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ।।

इत्यादिना वैयाकरणत्वम्।

किम्बहुना सर्वेऽपि प्राक्तनाः कवयः सर्वशास्त्रविदो लोकव्यवहार-पटवश्चासन् इति तेषां ग्रन्थगवेषणया ज्ञायते। आधुनिकश्रीहर्षीयनैषधं काव्यमेवावलोकयन्तु, सर्वेषामेव शास्त्राणां रहस्यं तत्र सम्भृतमुपलभ्यते। तथाहि—

अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम्
अगाहताष्टादशतां जिगीषया नवद्वय-द्वीप-पृथग्जयश्रियाम्॥ (नै० १।५)

इत्यत्र पाकशास्त्रीयं ज्ञानम्।

विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये
विग्रहं मखभुजामसहिष्णुर्व्यर्थतां मदशनिः स निनाय। (नै० ।५।३९)

इत्यादिना मीमांसकत्वम्।

एकचित्ततनिरद्वयवादिन्नत्रयीपरिचितोऽथ बुधस्त्वम्
पाहि मां विधुतकोटिचतुष्कः पञ्चबाणविजयी षडभिज्ञः। (नै० २१।८८)

इत्यादिना बौद्धसिद्धान्तवेदित्वम्।

ध्वान्तस्य वामोरु! विचारणायां वैशेषिकं चारु मतं मतम्मे।
औलूक्यमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय।
(नै० २२।२६)

इत्यादिना वैशेषिकसिद्धान्तानुसारित्वं प्रतीयते। किम्बहुना, नैषधीये काव्ये कस्य विषयस्य कस्या वा लोकोत्तरकल्पनाया उपन्यासो न दृश्यते, अवलोकयन्तु, काव्यावसाने स्वयमेव ग्रन्थकृता मनागन्यरूपि—

"ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वराद्।
यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्॥
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः।
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥

इत्यादिना स्थालीपुलाकन्यायेन प्रतीयते यत् प्राचीना विद्वांसः पाण्डित्यप्रकर्षप्रदीप्ता लोकव्यवहारविदो देशकालज्ञानावगाहिनो भवन्ति स्म। न केवलन्ते साम्प्रतिक-कियद्विद्वद्गणा इव द्वित्र-पञ्चष-ग्रन्थपाठनमात्र-पाण्डित्यसाराश्चित्रालय-संग्रहालय-स्थापन-योग्या एवेति। अत्र विषये संक्षिप्य ब्रूमश्चेदित्येवं वक्तुम्पारयामो यत्संस्कृतवाङ्मयमहार्णवस्य यस्मिन्नेव

विषये दृष्टिं पातयामस्तत्रैव पूर्णं वैदुष्यं निभालयामः। अवद्धतु लोकव्यवहारमात्रोपयोगिनि आयुर्वेदविषयेऽपि 'अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते' इति चरकग्रन्थे चक्षुश्चालयामश्चेत्तत्रापि 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्' इति सर्वाण्येव विज्ञान तर्कशास्त्राणि तत्रैवोपलभामहे। आधुनिकमाधवनिदानीयमधुकोशव्याख्यायामपि अद्वितीयं पाण्डित्यप्रकर्षं पश्यामः। अध्ययन-पद्धतिविषये आयुर्वेदवावदूकेन विदुषा वाग्भटेनाऽपि, स्फुटमेवाऽभ्यधायि यत्—

"एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम्।
तस्माद् बहुश्रुतः शास्त्रं विजानीयाचिकित्सकः।"

इति बहुविषयाभिज्ञतैव तेनाप्यनुमोद्यते। तत एव तु देशकालात्मज्ञानमपि जायते। यस्य कृते—

"देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम्"।

इति स्वशब्देनैव स स्वाभिप्रायं प्रकाशयति। पूर्वस्मिन् काले—

"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्याश्चैताश्चतस्रस्तु लोकसंस्थितिहेतवः।"

इति चतस्रोऽपि विद्याः संस्कृतज्ञैरेव स्वायत्तीकृता आसन्। यत्र आन्वीक्षिक्यां तर्कशास्त्राणि गृहीतानि। त्रय्यां धर्मशास्त्राणि, अध्यात्मशास्त्राणि चान्तर्भूतानि। वार्तायाम् कृषिगोरक्ष्यं, चतुःषष्टिकलात्मकं शिल्पशास्त्रं, वाणिज्यश्चान्तर्गतम्। दण्डनीत्यां हि राजशास्त्रं समाजशास्त्रञ्च सम्प्रविष्टम्। यथोक्तं केनचित्—

"कृषिगोरक्ष्यवाणिज्यमिति वार्ता प्रशस्यते।
वार्तया संश्रितो लोको न वृत्तेर्भयमृच्छति॥
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति॥

इति, आन्वीक्षिकी-त्रयी-वार्तादण्डनीतिवेदिभिः संस्कृतज्ञैरेव तु लोकस्यास्य सर्वोऽपि व्यवहारः साध्यते स्म। अत एव तु स्वातन्त्र्यप्रधाने तदानीन्तने भारते उदयनाचार्यसदृशाः सुधीरा उच्चैर्घोषम्—

"वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा, यदि पथि विपथे वा वर्तयामः स पन्थाः।
उदयति दिशि यस्यां भानुमान् सैव पूर्वा, न हि तरणिरुदीते दिक्पराधीनवृत्तिः"

इति व्याजहुः, इत्थं प्राचीनसंस्कृतपाठ्यपद्धतेर्गुणगरिमाणमाकलयन्तो वयमपि तत्पथानुसरणमेव श्रेयस्करं मन्यमानास्तत्र मनाङ्मार्गनिदर्शनमादिशन्तो विरमामो विस्तराद्—इति।

## कीदृशी स्यात् संस्कृतपाठ्यपद्धतिः?

साम्प्रतमिह संयुक्तप्रान्ते व्याकरणाध्ययनायापेक्षितमात्रातोऽप्यधिकं महत्त्वं दत्तं दृश्यते। तन्नास्ति समीचीनम्, यतो हि तत्रैव सर्वोऽप्यायुषो भागो यापितो जायते, येन विषयान्तरप्रवेशनिरोधायार्गलास्थानमासादयति साम्प्रतिकं व्याकरणाध्ययनम्। पद्धतिमिमामन्यभाषाभाषिणस्तु निन्दन्त्येव, संस्कृतज्ञा अपि विद्वांसो बहुज्ञा नैव समर्थयन्ते सम्प्रतीमां व्याकरणमात्राध्ययनपरामध्ययनपद्धतिम्। तथा हि विश्वविदितवैदुष्यः स्वर्गीयो महामहोपाध्यायः पण्डितप्रवरो गङ्गाधरशास्त्री ( सी० आई० ई० ) महोदयः स्वीये 'अलिविलासिसंल्लाप'काव्योपक्रमेऽभिदधाति यत्—"पश्यत, प्राचीनानां भारतवर्षीयाणां विद्योपार्जनशैलीं यथोदाजहुर्महाभाष्यकाराः श्रुतिम्—"ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" यदि वर्तमानसमय इव तदानीन्तना अपि कस्यचिदेकस्य व्याकरणादेरङ्गस्य साकल्येन ज्ञानसम्पत्तिमेव बहुमन्यमानास्तामृते नैव स्प्रष्टव्योऽस्माभिरन्यो विषय इति कृतशपथाः स्युस्तर्हि कं प्रवर्तयदेषा भगवती श्रुतिः।

पश्यत, यदि कश्चन सप्तभौमं प्रासादं निर्मित्सुस्तदुचितामेकामेव भित्तिं तावदुन्नतामपरिसमाप्य न मया भित्त्यन्तरमारम्भणीयमिति निश्चित्यान्यासु दिक्षु भित्त्यन्तरं नोत्थापयेत् किन्तु तामेवैकां भित्तिं तावदुन्नमयितुं यतेत, तदा सहायकान्तराभावात् प्रथमन्तु तावतो भित्तिः स्थातुमेव नार्हति। महता प्रयत्नेनावस्थापितापि न किञ्चित् फलं जनयेत् स्वामिनः। क्रमेण तु चतसृषु—भित्तिषूत्थाप्यमानास्वेकभूमगृहसम्पत्तावपि साधु सम्पद्येत वसत्याद्युपयोगः। परस्तादपि तथैव चतुरस्र-द्वितीयादि-भूमीर्निर्मापयन्नधिकाधिकं फलं लभेत।" एतेनेदमवसीयते यदिदानीं परीक्षासु प्रथमात आरभ्याचार्यावधि विषयस्यैकस्यैव सन्निवेशः संस्कृतज्ञान् परीक्षार्थिनो विमार्गयति न्याय्यान्नयात्। तत्रापि, "मुखं व्याकरणं स्मृतम्" इति जल्पन्तः साम्प्रतिकास्तदीयाभ्यर्हिततामुद्घोषयन्ति। परन्त्वेतेन साम्प्रतमन्धगो-

लाङ्गूलन्यायेन प्रवृत्ता व्याकरणमात्रैकाध्ययनपरता कदापि न समर्थ्यते यतो हि—"संस्कृतवाङ्मयस्य मुखं द्वारं—व्याकरणं स्मृतं कथितम्" इति तद्द्वारैव वाङ्मयदुर्गे प्रवेष्टव्यम्,—इत्येवार्थोऽस्य वाक्यस्य प्रतीयते। किन्तु तत्रैव द्वारि आजन्मोपवेशनं कृत्वा वाङ्मयदुर्गे प्रवेष्टव्यमेव नहि—इत्यर्थस्तु कदापि न सम्भाव्यते। नापि वाक्याभिधातुः कवेरेवायमभिप्रायो भवितुमर्हति, अपि तु द्वारदेशादभ्यन्तरे प्रविश्य विषयान्तरपर्यालोचनमेव कर्तव्यमित्येव कवेरप्याशयः। स एव हि श्रेयस्करः सफलप्रवृत्तिकश्च।

अन्यच्च व्याकरणान्तरेषु बहुषु विद्यमानेष्वपि किमिति पाणिनीये एवैतावानाग्रहः? साम्प्रतिकानामिति नास्माकम्मतावारोहति। ये हि महावैयाकरणत्वमात्मनोऽभिलषन्ति ते खलु समाश्रयन्तु पाणिनीयां दुरूहां विस्तीर्णां प्रक्रियां स्वश्रेयस्करीम्। ये तु विषयान्तरमधिजिगमिषवस्ते कथन्न सारस्वत-मुग्धबोधादिभिः शीघ्रबोधविधायिभिः पदसाधुत्वप्रक्रियायां शीघ्रायमाणा विषयान्तरप्रवेशं स्वात्मनः सफलयन्तु?

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा इत्यष्टौ शाब्दिका मताः॥"

इति प्राचीना अष्टौ महावैयाकरणा व्याकरणप्रणेतारः श्रूयन्ते। ततोऽपि भूयांसो लघुतरव्याकरणप्रक्रियाप्रवर्तका महावैयाकरणा आविर्भूताः, यैर्विरचितानामृजुप्रक्रियाणां सम्प्रति सदुपयोग एव सर्वथा पाणिनिप्रक्रियाप्रेम्णा प्रतिरुद्धो दृश्यते। तत्रापि समवधानं देयं विद्यते।

व्याकरणात् पदज्ञानं न्यायविस्तराच्च प्रमाणज्ञानं मीमांसाशास्त्राद्धि वाक्यज्ञानमिति ज्ञानत्रितयं संस्कृतवाङ्मयपाण्डित्यप्रकर्षाय नितरामावश्यकमनुपेक्षणीयश्चास्ति। परन्तु, अद्यत्वे संस्कृताध्ययनाऽध्यापनपद्धतिस्तु ईदृशी विगुणिता विद्यते, यया च बहुशस्तु विद्यार्थिनो व्याकरणात्पदज्ञानमात्रे पश्चपाश्च न्यायैकदेशव्याप्तिपक्षताहेत्वाभासमात्रतः प्रमाणज्ञानमात्रे द्वित्राः पवित्रम्मन्या मीमांसाशास्त्रमात्रतो वाक्यज्ञानाय प्रसरन्तः स्वीयं जीवनं यापयन्तोऽवलोक्यन्ते। विरला एव स्वप्रतिभाप्रकर्षात् समुदितं ज्ञानत्रितयं समुपार्जयन्तः प्रशस्तपथपथिकाः संस्कृतवाङ्मयमहार्णवमुत्तरन्ति, इति सम्प्रति पदप्रमाणवाक्यानां समस्तानामेव ज्ञानं संस्कृत-

वाङ्मयमहार्णवरत्ननिचयविचयार्थं नितरामावश्यकम् इति। अत एव

"कणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्"

इति ताभ्यां सह—

"आर्षं धर्मोपदेशञ्च वेद-शास्त्राविरोधिना
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।"

इति मीमांसाया अपि पाठ्यपद्धतौ प्रवेशः कार्य्यः। अद्यत्वे सर्वेषामेव देशानां द्वीपान्तराणाञ्च सम्पर्को धूमयान-वायुयानविद्युद्यन्त्रादिना प्रतिदिनं परस्परं समेधमानः सान्निध्यमागेवावलोक्यतेऽग्रेऽपि च सन्निहिततरः सन्निहिततम एव भावीत्यवभात्येव। इत्येवं स्थितौ सार्वदेशिकेतिहास-भूगोलयोरावश्यकता प्रतीयत इति तयोरपि विषययोः संस्कृतपाठ्यपद्धतौ सन्निवेश आवश्यक एव। सर्वथा सर्वदा च व्यवहारोपयोगिनो गणितस्यापि नितरामपेक्षैव विद्यते।

वर्तमानसमये हिन्दीभाषा हि राष्ट्रभाषा भवितुं याति, सर्वोऽपि लौकिको व्यवहारस्तस्यामेव भाषायां सन्निविष्टो विद्यते, आंग्लभाषा च विश्वभाषास्थानमासादयति, इति तयोरपि भाषयोर्ज्ञानमावश्यकमेव भाति। अतश्च यथा कथञ्चित्तयोः सन्निवेशं विनापि संस्कृतज्ञेषु देशकालविज्ञानमागन्तुन्नार्हतीत्यपि नितरां विमर्शनीयं विद्यते।

इत्येवं प्राक्तने काले यावतां विषयाणामावश्यकं ज्ञानमपेक्षितमासीत्ततोऽप्यधिकमिदानीमपेक्ष्यते ज्ञानम्। पूर्वं हि सदाचार-स्वास्थ्यविज्ञानयोस्तु सर्वेषामान्हिककृत्येष्वेव प्रवेश आसीत्तयोर्ज्ञानन्तु नित्यकर्तव्यानुष्ठानत एवानायासं भवतिस्म। सम्प्रति तु नास्ति सा ब्रह्मचर्याश्रमनियमप्रणाली यया तयोर्ज्ञानमनुष्ठानपद्धत्यैवोपार्जितं स्यादिति तयोः कृतेऽपि मानवधर्मशास्त्रस्यायुर्वेदविज्ञानस्य चावश्यकाध्ययनमपेक्ष्यत एव। सर्वोपरि सम्प्रति संस्कृतज्ञानां जीविकासमस्या दैनन्दिनं जटिलायमानैव दरीदृश्यते, इति तदुपयोगित्वमपि संस्कृतशिक्षायाः स्यादित्यत्राप्यवधानीयमेव। इत्येवं सर्वतोऽपि विगुणितायां संस्कृतशिक्षापद्धतावयमपरो जीविकासमस्यात्मको गण्डस्योपरि विस्फोटकः संवृत्तो विद्यते, यस्य प्रतीकारः सर्वप्रथमं सर्वोपरि च विद्यते। ततश्च साम्प्रतिकी

संस्कृतशिक्षाशैली नूनमामूलत एव परिवर्तनमपेक्षत इति विमृशन्तु विमर्शिनो विद्वांसः । तत्र च—

"भवद्भिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः ॥"

इति प्राक्तन-कवि-भणितिमनुस्मरता मयापि किमप्युपक्रमणीयं श्रीमतां पुरस्तादुपहियते, तद्यथा—

## परीक्षा-पाठ्यक्रमः ।

मन्मते प्रथमायां परीक्षायां प्रवेशलाभाय राष्ट्रभाषायाः चतुर्थकक्षावधि पर्याप्तं ज्ञानं नितरामावश्यकम् । एतादृशा एव च्छात्रा अस्यां परीक्षायां प्रवेशाधिकारिणः स्युः । अत्र च प्रश्नपत्राणि वर्षत्रयस्य पाठ्यरूपेण निर्धारितानि दश संख्यकानि भवेयुः । तत्र च (१) व्याकरणस्यैकम्—

(अत्र धातुरूप-शब्दरूप-कृदन्त-तद्धित-समासकारक-स्त्रीप्रत्ययाव्ययसन्धिज्ञानमात्रमेवापेक्षितं स्यात्, अत्र कस्यापि व्याकरणविशेषस्य नाम निर्देशो न स्यात्, कस्माच्चिदपि व्याकरणादेतावन्मात्रं ज्ञानं सम्पादितं स्यादित्येव निर्देशः कर्तव्यः)

१—संस्कृतसाहित्यस्यैकम्, (३) राष्ट्रभाषाया एकम् (४) इतिहासभूगोलयोरेकम् । (५) गणितस्यापेक्षितकर्मकाण्ड-ज्यौतिषज्ञानस्य चैकम्, (६) स्वास्थ्यविज्ञान-सदाचारयोरेकम्, (७) भारतीयसंस्कृतिपरिचायक-राजनीति-समाजनीति-धर्मनीति-विषयकमेकम् । (८) अध्यात्मज्ञानसम्बन्धिप्रश्नपत्रमेकम् (९) संस्कृतव्युत्पत्तिपरिचायकं हिन्दी-संस्कृतानुवाद-बोधकञ्चैकम्, (१०) आङ्गलभाषाया वा यत्किञ्चिज्ज्ञानाधायकमेकमिति कृत्वा दश प्रश्नपत्राणि स्युः । एतत्परीक्षोत्तीर्णाय च्छात्राय 'पण्डित'—इति एतत्सदृशोऽन्यो विशारदः, प्राज्ञ इत्येवंरूपो वोपाधिर्निर्धारितः स्यात् ।

मध्यमायामपीमे एव विषया वर्षत्रयेण पाठ्यरूपेण निर्द्धारिताः परिवर्द्धिताश्च भवेयुः । तत्र ग्रामसङ्गठन-गृहचिकित्सा—ग्रामचिकित्सोपयोगिज्ञानमायुर्वेदतो नूनं सम्पादनीयम् । व्याकरण-साहित्ययोर्दर्शनानाञ्चापेक्षितं ज्ञानमवश्यं सन्निवेशनीयम् । अत्र वाक्छक्तेः सम्वर्द्धनाय

काचन समुचिता व्यवस्था नूनं निर्धारणीया। एतत्परीक्षणञ्च तत्तत्पाठशालायां पाठशालाध्यक्षा एव विधाय लब्धाङ्कान् परीक्षाध्यक्षपार्श्वे प्रहिणवन्तु। अत्रापि कश्चिदुपाधिरवश्यं निर्द्धारणीयः। अत्र चाङ्गलभाषाज्ञानमावश्यकं वर्तते।

इतोऽग्रे शास्त्रिपरीक्षा तथा आचार्यपरीक्षा चैकैका वर्षत्रयपाठ्यतया गृहीते स्याताम्। इत एव च प्रधानत्वेन विषयविभागः कर्तव्यः। तत्रापि च दर्शनस्यैको विभागो व्याकरणस्यैको ज्यौतिषस्यैक आयुर्वेदस्यैको धर्मशास्त्रपुराणेतिहासानामेको वेदोपनिषद्ब्राह्मणानामेकः साहित्यस्यैक इत्येवं प्रतिशास्त्रं पृथग् विभागा भवेयुः। तत्रापि लोकव्यवहारोपयोगिनां राजनीति-समाजनीत्यर्थनीतिप्रभृति-विषयाणां सर्वत्रैव प्रवेशः स्यात्, एषां परीक्षा च सामान्यतयाऽनिवार्य्यरूपेण सर्वसाधारणप्रश्नपत्रतया गृहीता स्यात्। संस्कृतसाहित्यस्येतिहासोऽपि तज्ज्ञैर्विद्वद्भिः सम्पादितः सन्निवेशनीयः।

इत्येवमपेक्षितानां विषयाणां पृथक् पृथग् विभागशः परीक्षा गृहीता स्याद् यत्र च तत्तच्छास्त्रेषु शास्त्रीत्युपाधिः परीक्षोत्तीर्णेभ्यः प्रदीयेत।

आचार्यपरीक्षायामपीमे एव विषया निवेशिताः स्युः। तत्र चाध्यापका विशेषयोग्यताशालिनो विद्वांस एव प्रविष्टाः स्युः। तत्र ग्रन्थविरचनयोग्यतायाः शास्त्रार्थप्रतिभाया व्याख्यानकलायाश्च परीक्षणप्रकारः समस्ततया व्यस्ततया वा सन्निवेशितःस्यादित्येवं संस्कृतशिक्षापद्धतिरामूलतः परिवर्तिता परिवर्द्धिता यदि भवेत्तर्हि प्राचीनाधुनिकगम्भीरज्ञानार्जनतया साम्प्रतिकाः संस्कृतज्ञा अपि विद्वांसः स्वीयगौरवेण सहैव भारतीयं गौरवं समेधयमाना देशकालात्मविदो भूत्वा पुनरपि भारतं भारतं विदधतो वर्तमानप्रगतिप्रतिस्पर्द्धिनो भवेयुरित्यस्माकं सम्मतिः।

अन्यत्र—शास्त्र्याचार्यपरीक्षयोः केन्द्रस्थापनम्, संस्कृतविद्यालयनिरीक्षणव्यवस्था, संस्कृतशिक्षाबोर्डसदस्यसंग्रहः, संयुक्तप्रान्तीयसंस्कृतविद्यालयानां विदुषाञ्चार्थसाहाय्यप्रदानम्, संस्कृतज्ञानां विदुषां विद्यार्थिनाञ्चान्योन्यमेकीभावापादनम्, एवमाद्यप्रस्तुतविषयेष्वपि नूनमवधानं देयमन्यथैतदखिलमायोजनमपूर्णमेव भवेदिति प्रासङ्गिकं प्रस्तुतमेव किञ्चित्प्रकृत्य वाग्देवतां वन्दमानो विरमामि विस्तरात्—

वयमिह निजसत्त्वात् साम्प्रतं विप्रलब्धा—
भगवति ! फलयन्ती प्रार्थनां नोऽचिरेण ।
शतमिह शरदः स्यामेत्यदीना नितान्त—
न्द्रुतमुचितपथेऽस्मान् भारति ! त्वन्नयेथाः ।

( संस्कृत-शिक्षासंशोधन-सम्मेलनसभापतेः सम्भाषणमिदं सामयिकं तथा यू० पी० प्रान्तीय-शिक्षामन्त्रिसंयोजित-संस्कृतशिक्षासुधारसमिति प्रकाशितप्रश्नावलीविषयकविचारोपयोगि स्यादिति मत्वा सम्प्रति प्रकाश्यते मया। )
( स सम्पादकः )

## बहराइच संस्कृतशिक्षासुधार-सम्मेलनम्

गतग्रीष्मसमये वहराइच नगरे यू० पी० प्रान्तीय-संस्कृतविदुषाम् संस्कृतशिक्षा सुधारविषये महता समारम्भेण त्रिराड् विशेषाधिवेशनं सम्पन्नम्। तत्र सर्वेऽपि प्रान्तीया विशिष्टा विद्वांसः संस्कृतानुरागिणः श्रीमन्तः रानोपालीमठाधीशाः केशवरामोदासीनप्रभृतयो विशिष्टाः साधवो धनिनश्च समुपस्थिता आसन्।

संस्कृतशिक्षा-सुधारविषये वहवः सामयिकाः प्रस्तावाः समुपस्थिताः सर्वसम्मत्या स्वीकृताश्चाभूवन्।

तद्यथा (१) मातृभाषाया माध्यमिक-विद्यालयेषु (मिडिल स्कूल) इङ्गलिश भाषोर्दूभाषावत् संस्कृतभाषाऽपि वैकल्पिकतया सन्निवेशिता स्यादिति।

(२) भारतीयसंस्कृति-संरक्षणार्थम् संस्कृत-शिक्षायाः प्रसारस्य भारतीयार्य्यमहिलासु नितान्तमावश्यकमिति तासां कृते तदुचित-संस्कृत-शिक्षा-पद्धत्यन्तरं निर्माय साम्प्रतिकराजकीय-संस्कृत-परीक्षासु तत्सन्निवेशः करणीय इति।

सम्प्रति प्राचीना संस्कृताध्यापन-पद्धतिः सर्वथा विस्मृता विगुणा च दृश्यते, इति पुनस्तस्याः समुद्धाराय संस्कृताध्यापनशिक्षणकक्षाशालायाः प्रतिष्ठापनप्रवन्धः काशिकराजकीयसंस्कृतविद्यालयेऽवश्यमग्रिमवर्षत एव विधातव्य इति तदधिकारिणोऽनुरुध्यन्ते।

इत्येवं विविधाः प्रस्तावाः सर्वसम्मत्या स्वीकृताः। तत्र स्वागतसभापतयः पं० भगवानदीन वैद्य एम्० एल्० ए० महोदया आसन्। सम्मेलन सभापतयश्च काशीस्था प्रसिद्धविद्वांसो दर्शन केशरिणः पं० श्रीगोपाल शास्त्रिण आसन् येषाम् अभिभाषणमुपरि मुद्रितं विद्यते। ( प्रकाशकः )

चतुर्दशे वर्षे] आश्विन कार्तिकपूर्णिमा १९९५ [४-५ संख्ये




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्त्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces and Bombay Presidency for use in Schools and Colleges.

सम्पादकः—
त्यक्त महामहोपाध्यायपदवीको
महामहाध्यापकः श्रीपञ्चानन तर्करत्न भट्टाचार्यः।

सहकारि सम्पादकः—
अवधेशप्रसादशर्मा द्विवेदः

उद्गम-स्थानम्—
श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम्।
संरक्षकेभ्यः ५) । वहिर्भारतम् ६)    छात्रेभ्यः पुस्तकालयेभ्यश्च २)

---

# विषय-सूची ।

# सूर्योदयः ।

चतुर्दशे वर्षे } आश्विन-कार्तिक-पूर्णिमयोः १६६५ { ४-५संख्ये


## स्त्रीशिक्षायाः प्राचीनादर्शः ।

सम्प्रति भारतीयाः सर्वस्मिन्नपि विषये पाश्चात्यसभ्यतावात्याचक्रावर्तपतिताः सन्तः किंकर्तव्यविमूढाश्चंकितचकिता इव दृश्यन्ते । पश्यन्तु, इह भारते विशेषतः संयुक्तविहारप्रान्तादिषु सर्वथापि धार्मिक-स्त्रीशिक्षाया अभावेन स्त्रीणां या हि दयनीयावस्था विद्यते, सा नास्ति विशेषज्ञैरविदिता । संयुक्तप्रान्तादिषु स्त्रीणामशिक्षया विरलमेव गृहं विद्यते, यत्र दाम्पत्यसौख्यं यथाकथं नाममात्रेणापि लब्धुं शक्यते । किं कथयामो बहुत्र रात्रिन्दिवं कलहायमानयोरेव दम्पत्योः सर्वथा समयो व्यत्येति । कुत्रचन वध्वा अपराधेन श्वश्रूरात्महत्यामाचरति । कुहचन श्वश्वा उद्वेगेन स्नुषा आत्मानं विघातयति । क्वचन गृहस्त्रीणां कलहेन पुरुषा उद्विग्नाः सन्तः क्लिश्यन्ति । कुत्रचन गृहव्यवहारानभिज्ञाः सर्वथा श्वश्रूताडिताः स्नुषाः स्वीयमौर्ख्याद् विजातीयं कञ्चन पुरुषं गृहीत्वा गृहादेव निःसरन्ति । एषु प्रान्तेषु स्त्रीणामशिक्षादोषेणैव विधर्माणो यवना आर्याणां मूर्खस्त्रियं गृहान्निःसार्यान्यत्रदेशे नीत्वा स्वधर्मसमाजे पातयन्ति, एवं बहवः सामाजिका दोषा उद्भवन्ति ।

अन्यच्च स्त्रीणामशिक्षितत्वदोषेणैव भारतीय-समाजे सर्वेऽपि भारतीयाः सामाजिका दोषाः प्रत्यहं नवनवाः समुद्भवन्ति, गुणाश्च शैथिल्यं भजन्ते । स्त्रीणामियमशिक्षा अस्माकमनवधानतयैव समुद्भूतेत्यपि नैव विस्मरणीयम् । एकतश्च वयं स्त्रीणां शिक्षां प्रति अनवधानं दद्मोऽपरतश्च पाश्चात्यसभ्यताप्रेमाणः तत्सभ्यतापिशाचीग्रस्ता मानवाः पाश्चात्यशिक्षादीक्षिता एव स्त्रियः कामयन्ते । ते हि अभिलषन्ति यत् भारतीया नार्यो यावद् इंग्लिशभाषामधीत्य पूर्णाः स्वतन्त्रा भूत्वा पाश्चात्यसभ्यतासमुद्भवान् दोषान् सर्वानेव स्वायत्तीकृत्य भारतीयं गार्हस्थ्यसुखं न विनाशयिष्यन्ति, तावत् भारतीयं कल्याणमेव न भविष्यतीति ! ते वराका अज्ञातभारतीयमर्य्यादामर्माणः पाश्चात्यसभ्यतामेव प्रियतरां

मन्यन्ते । तथैव पद्धत्या च ते भारताभ्युदयमभिलषन्ति !

पश्यन्तु, सम्प्रति भारतीया नार्य्यः इंग्लिशकलाशालासु इंग्लिशभाषा
अध्ययनं कृत्वा सर्वप्रथमं स्वीयं स्वास्थ्यं विनाशयन्ति । पाश्चात्यसभ्यतां
कामयन्ते । वेशाच्छादनानि पादत्राणादीनि च भारतीयानि ता न कामयन्ते
पाश्चात्यवस्तूनि एव सर्वथा कामयन्ते । तासां मानसिकः सर्वोऽपि भा
भारतीयसंस्कारं प्रति कलुषितो जायते । ताश्च भारतीयं सौभाग्यचिन्हं सि
रमपि भालसीम्नि न धारयितुमभिलषन्ति । भारतीयं गृहन्तु तासां कृते का
गारमिव भाति पतिश्वश्रूप्रभृतीनां शुश्रूषा तु तासां कृते विडम्बनैव विद्यते

पूर्वं हि भारतीया नार्य्यो भारतीयसंस्कारसदाचारपालिता भारतं
संस्कारशिक्षिता भूत्वा भारतीयां मर्य्यादां संवर्द्धयन्ति स्म, यासां कृते क
गुरुः कालिदासोऽपि अभिज्ञानशाकुन्तलाख्ये नाटकेऽभिदधाति—

> "शुश्रूषस्व गुरून् कुरु प्रिय सखीवृत्तिं सपत्नीजने
> भर्तुर्विप्रकृताऽपि रोषणतया मास्म प्रतीपं गमः ॥
> भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
> यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः" ॥

इयं हि भारतीया प्राचीना आर्य्यमर्य्यादा । अनयैव मर्य्यादया पू
भारतीया नार्य्यः परिचिता भवन्ति स्म । श्लोकस्य भावस्तु स
एव दृश्यते । गुरून्-श्वश्रूः श्वसुरांश्च शुश्रूषस्व, पत्युर्महामहिमशालित्वा
बहुपत्नीकतायां सपत्नीजने ज्ञातृवर्गे च सखीवद् व्यवहारं कुरु समाच
भर्तुः पत्युः सकाशात् विप्रकृता अनादृताऽपि क्रोधेन प्रतीपं प्रतिकूलत्वं माग
मा गच्छ, परिजने भृत्यवर्गे भूयिष्ठमधिकतया दक्षिणा उदाराश
भव । भोगेषु भोग्यवस्तुषु वेशभूषाभोजनादिषु उत्सेको भोगगर्द्धा, (इदमे
वस्त्रं यदि स्यात्तर्हि परिधास्यामि, इदमेव भूषणं परिधास्ये नान्यद् इत्यादि
भोगस्पृहातिरेक इति यावत्) स विद्यते यस्याः सा उत्सेकिनी तद्भिन्न
भोगस्पृहातिरेकरहिता भवेत्यर्थः । यद्वा, मम एतादृशा भोगा विद्यन्ते नान्यस्य
इति गर्वं मागाः ।

इत्यादिपद्याभिप्रायेण स्पष्टमेव भारतीयसंस्कारपरिचयो भवति यद् इहत्या
कुलीना नार्य्यो भोगाभिलाषातिरेकशून्याः पत्यादि प्रदत्तं भोगं लभमाना अपि
गर्वविरहिता भवन्ति स्मेति । सम्प्रति तु सर्वथा वेशभूषादिपरिच्छदबाहुल्यमेव
ललनाः प्रतिष्ठामूलमात्मनः समर्थयन्ति । प्रतिक्षणं वेशपरिवर्तनमेव निरन्तरायं
कामयन्ते । उपर्य्युक्तकालिदासीयपद्यविपरीतमेव भावं इंग्लिशभाषाऽध्यायिन्यो

नार्य्यः सम्प्रति समाचरन्ति, तत्र तत्र चोत्कर्षेण गर्विताश्च भवन्ति । सर्वोऽप्येव भारतीयमर्य्यादाविनाशकरो भावः भारतीयानामस्माकमुपेक्षया समुचितस्त्रीशिक्षाऽभावादेव विवर्द्धते । एकतो मूर्खताऽज्ञानसाम्राज्यं समेधतेऽपरतश्च पाश्चात्यशिक्षया वृद्धिमिता तत्सभ्यतापिशाची सर्वतोऽपि देशमिमं ग्रसितुमुद्यता मुखं व्यादाय तिष्ठति । अतश्च लेखमिमं संहर्तुमुद्यता वयं भारतीयमर्य्यादासमेधनपरान् सनातनधर्ममर्मज्ञान् विदुषो निवेदयामो यत् स्त्रीशिक्षायाः कृते शीघ्रमेव कश्चन सुदृढः प्रयत्नः सनातनधर्मानुयायिभिरस्माभिरनुष्ठेयः ।

इह भारते पूर्वं स्त्रीशिक्षा नासीदिति कथनन्तु साहसमात्रम् । सामान्यतो लोकव्यवहारोपयोगिनी स्त्रीणां सच्चरित्रसमर्द्धिका शिक्षा तु सर्वत्रैवासीत् । यच्च, स्त्रीणां ब्रह्मवादिनीत्वं वेदेषु दृश्यते । वाचक्नवी गार्गीप्रभृतीनामुपनिषदि कथा प्रसिद्धा च श्रूयते । भवभूतिरपि उत्तररामचरिते आत्रेयीमुखेन—

"अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति ।

तेभ्योऽधिगन्तुं निगमान्तविद्यां, वाल्मीकिपार्श्वादिह पर्य्यटामि ।"

इति वेदान्तस्यापि अध्ययने स्त्रीणामधिकारं समर्थयति । तत्तु वामदेवशुकदेववत् प्राक्तनजन्मान्तरसंस्कारशालितयाऽपवादकोटिमाटीकते । नहि तत् सामान्यतः सर्वासां द्विजस्त्रीणां कृते सम्भवति । एतदेव महर्षि वादरायणः—

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा कर्मश्रेयसि मूढानां श्रेयस्तेषां कथं भवेद् । इति भारतमाख्यानं कृपया मुनिना कृतम्" इति वेदाध्ययनं तासां कृते परिहापयन् महाभारतादीतिहासपुराणाध्ययनमेव तासां कृतेऽनुजानाति । किं वहुना-'कन्याप्येवं शिक्षणीया पालनीया प्रयत्नतः' इत्यादिना सामान्यतः स्त्रीशिक्षा तु आवश्यककर्तव्यकर्मणि समायाति एव ।

तस्याः पद्धतिः कीदृशी कल्पनीया स्यादित्यत्रैव मतभेदः संभवति । ये पाश्चात्यशिक्षापद्धत्या स्त्रीशिक्षां समभिलषन्ति तेषां सिद्धान्तस्तु बृहस्पतिनापि परावर्तितुं न पार्य्यते । अस्माकमपि तेषां कृते न किञ्चिद्वक्तव्यमस्ति । ते यथाभिलाषितं व्रजन्तु । परिणाम एव तान् मार्गं नेष्यति । अस्माभिस्तूपरि मनाङ् निर्दिष्टाः स्त्रीणां पाश्चात्यपद्धत्या शिक्षणे के समुद्भवन्ति दोषा इति । सम्प्रति सनातनधर्माणो भारतीया निवेद्यन्ते यत्ते एवमेव हस्तोपरि हस्तं धृत्वा न तिष्ठन्तु । स्त्रीणां शिक्षणे साम्प्रतं यदि ते न दत्तावधाना भवन्ति, तर्हि फलद्वयमेव भविष्यति । एकतस्तु स्त्रीणां मूर्खतयाऽज्ञानेन च भारतीयसमाजेषु विविधानामपरिहार्य्याणां दोषाणां समुद्भवः, अपरतश्च यत्र कुत्र पाश्चात्यपद्धत्या शिक्षणेन सर्वस्यापि पाश्चात्यदोषस्य भारतीयार्य्यमहिलासु

प्रवेशेन भारतीयसंस्कारस्यैव विलोपः ।

अधुना पाश्चात्यसभ्यतापिशाचीग्रासविमोचनाय भारतीयैः स्त्रीणां शिक्षा स्वायत्तीकर्तव्या । स्त्रिय एवार्यमर्यादाधारस्तम्भाः सन्ति । तासामपि मस्तिष्कं यदि पाश्चात्यशिक्षया दिने द्विगुणं रात्रौ चतुर्गुणं समेधमानया विपाकं कृतं स्यात्तर्हि तु विनष्टमेव भारतं जानन्तु । अद्यावधि तु पुरुषा एव पाश्चात्यशिक्षया विकृतमस्तिष्का जाताः सन्ति । परन्तु स्त्रियस्तु अद्यावधि सन्ति सुरक्षिताः । तास्वपि शनैः शनैः पदन्यासो विधीयतेऽनया कुशिक्षया । तत्कृतेऽयमेव साधुः मार्गो विद्यते यत्तासां शिक्षाप्रबन्धः सनातनधर्मभिः कृतः स्यादिति । तस्या उपक्रमोऽधुना महामण्डलीयैरनुष्ठितो विद्यते । अन्यैरपि भारतहितैषिभिस्तेषां हस्तावलम्बनं देयम् । इह काश्यां एतैरेक आर्य्यमहिलामहाविद्यालयः प्रतिष्ठापितो विद्यते ।

यस्य सञ्चालनाय एका 'आर्य्यमहिलाहितकारिणी महापरिषद्' विद्यते यया च एका 'आर्य्यमहिला' नाम्नी मासिकपत्रिकापि हिन्दीभाषायां प्रकाश्यते यया धार्मिक-सामाजिक-साहित्यिक-विषयकै लेखैरार्य्यमहिलासु सम्यग् भारतीयार्य्यमर्यादाप्रचारः क्रियते । महाविद्यालये चास्मिन् सर्वथा धर्मशिक्षायाः प्रबन्धो विद्यते । यत्राधीयानाः बालिकाः कुमार्य्यो नार्य्यो वा सर्वा अपि धर्मशिक्षाया ग्रहणं कुर्वन्ति । धर्म्मशिक्षायां प्राथम्यमुपगताभ्यश्छात्रिकाभ्यः पारितोषिकमपि प्रदीयते । अस्माभिस्तु सर्वा अपि भारतीया धर्मानुरागिण्यो राज्यो महाराज्यो विद्यानुरागिण्योऽन्याश्चार्यमहिला धनिनश्च स्त्रीशिक्षानुरागिणोऽन्ये च सुधियो विज्ञाप्यन्ते यत्तैः सनातनधर्मरक्षार्थं भारतीयसंस्कारेषु श्रद्धाविवृद्धये च स्त्रियः सनातनधर्मानुकूलशिक्षायां प्रवर्तयितव्या इति । भारतीयानां धर्म एव जीवनं विद्यते । स च धर्मः स्त्रीषु धार्मिक-शिक्षाप्रसारत एव रक्षितः स्यादिति सर्वथा सर्वदा तत्र दत्तावधाना भवन्तु भवन्तः ।



## स्वर्गीया म० म० पद्मनाथभट्टाचार्य्याः ।

अहो ! कालस्य नैष्ठुर्य्यम् न कोऽपि प्राणिनो जगति जन्मभाजः सन्ति ये कालहतकस्य गोचरतां न व्रजन्ति । म० म० पं० पद्मनाथभट्टाचार्य्यमहोदयाः स्वजन्मना वङ्गभुवमलंकृतवन्तो विद्यया वाग्देवीं तोषितवन्तः संस्कृतविद्वत्सु परमोच्चस्थानमासादितवन्तो भारतप्रसिद्धा विद्वांस आसन् । इमे हि सिलइट्

मण्डलान्तर्गतवनियाचङ्ग्रामजन्मभाजः, समधीतविद्याः परमख्यातिभाजो भारतशासकै र्महामहोपाध्यायोपाधिना समलंकृता आसन् । इमे स्वदेशे प्रायशो वाराणस्याञ्च स्वनिवासं विदधतः संस्कृताध्यापनादिकृत्यं कुर्वन्ति स्म । एतेषां वैदुष्येन परमं प्रमोदमधिगता श्रीभारतधर्ममहामण्डलाभिधा भारतवर्षीयसनातनधर्मैकप्रतिनिधिभूता संस्था महामान्येन विद्योपाधिनेमानलं कृतवती । इमे श्रीभारतधर्ममहामण्डलतः सञ्चाल्यमानस्य अखिलभारतीय-संस्कृताध्यात्मिकविश्वविद्यालयस्य पदाधिकारिण आजीवनमासन् । सम्प्रति विगते मासि स्वदेशे स्वजन्मभूमौ अभिजनपरिजनपरिवृते स्वीये भवने नश्वरं कलेवरं परित्यजन्तो द्युनिवासमाश्रिताः । एतेषां निधनेन सनातनधर्मस्य संस्कृतविद्यायाश्च अपूरणीया हानिः समजनि । एतेषामाकस्मिकनिधनेन दुःखितैरेतत्परिवारकुटुम्बैः सह समवेदनां प्रकटयन्तो वयं श्रीकाशीविश्वेश्वर-मेतदीयां शाश्वतिकात्मशान्तिं प्रार्थयामहे ।



## हिन्दीभाषाया दुरवस्था ।

सम्प्रति राष्ट्रनायका हिन्दीभाषां राष्ट्रभाषां कर्तुं व्यवसिता इति हर्षा-स्पदम् । परन्तु तां हिन्दीभाषां स्वरूपच्युतां कृत्वा "हिन्दुस्तानी" ति नाम्ना व्यवहरन्तः तस्याः स्वरूपविनाशं कुर्वन्तीति असह्यं विद्यते । प्रथमं तु हिन्दीति नामैव वैदेशिकैर्दत्तं विद्यते । प्राचीनन्तु अस्या नाम 'प्राकृतम्' 'भाषा' इत्येव दृश्यते । तथाहि-"जे प्राकृत कवि परम सयाने, भाषामय जेहि चरित बखाने, 'भाषानिबद्धमतिमञ्जुलमातनोति' इत्यादि गोस्वामितुलसीदासीय-कवितासु 'प्राकृत'-'भाषा' शब्दयोरेव प्रयोगो दृश्यते । 'हिन्दी' 'हिन्दवी' 'हिन्दुस्तानी' प्रभृतिशब्दप्रयोगस्तु वैदेशिकैरेव कृतः । परन्तु अद्यावधि नाम्नि एव वैदेशि-कत्वमासीत् । सम्प्रति तु शब्दस्वरूपे, रचनायां, भावे, छन्दसि, विषये, सर्वत्रैव हिन्दीभाषायां वैदेशिकत्वमायातीति तज्ज्ञैर्विमर्शनीयं विद्यते । शिमलाशैले पेषमस्सम्पन्ने हिन्दीसाहित्यसम्मेलने सभापतिपदमधितिष्ठन्तः श्रीबाबूराव-विष्णुपराडकरमहोदयाः "आज"-सम्पादकाः हिन्दीस्वरूपोषमर्दं प्रति सर्वानेव हिन्दीभाषाविज्ञान् सम्बोधितवन्तः सचेष्टत्वमाधातुमिति शुभावसरो हिन्दीभा-षायाः । वयमपि सम्प्रति 'सूर्योदय'-पाठकान् सङ्केतयामो यद् हिन्दीभाषा संस्कृतभाषात एव स्वस्वरूपमाविष्कृतवतीति संस्कृतज्ञैरपि तद्रक्षणे यत्न आधेय एव । अतश्च सम्प्रति राष्ट्रनायकैरन्यैर्वा वैदेशिकैरपवाह्यमानां हिन्दीभाषां रक्षितुं तस्याः संस्कृतोद्भवत्वपरिरक्षणमत्यावश्यकं विद्यते । तच्च

तत्समतद्भवशब्दानां परिरक्षणेन, संस्कृतज्ञानां हिन्दीभाषाया अध्ययने लेखने
प्रबलप्रवृत्या संस्कृतज्ञधौरेयाणां च विविधविषयक-संस्कृतग्रन्थरत्नानां हिन्दी
भाषायामनुवादेन, तस्या भाषायाः पृथङ्मौलिकग्रन्थलेखनेनैव भवितुमर्हतीति
स्वल्पत एव विरन्तुमिच्छन्तः तुलसीदासादीन् संस्कृतज्ञान् सत्यपि संस्कृतमय
प्रबन्धलेखनपाटवे हिन्दीभाषायामेव प्रबन्धलेखकान् अनुकर्तुं स्मारयामः।

——:०:——

## युगप्रवृत्तिविचारः ।

सम्प्रति भारतेऽस्मिन् युगपरिवर्तनविषयमादाय पण्डितेषु केषुचि
परस्परं विवाद उपस्थितो विद्यते। तत्र किञ्चिद्विविच्यते। तथाहि—"
२००० सहस्रद्वयवर्षे कलयुगसमाप्तिः" इति शीर्षकमेकं लघु पुस्तकं गुर्जरभाषा
याम् कच्छप्रान्तीय देशलपुरनिवासिना पं० दयाराम खटाउ गङ्गाधर शर्मणा
महोपाध्याय वेदान्तवाचस्पतिना सनातनधर्मभूषणेन प्रकाशितम् विद्यते
(मूल्यम् =) आणक द्वयम्।)

पुस्तकेऽस्मिन् प्रमाणेन युक्त्या च साधु विवृतं विद्यते यत् कलिर्युग
प्रथमचरणेनैव प्रविष्टो विद्यते। सम्प्रति तु कलेः केवलं ५०४४ चतुश्चत्वारिंश
दधिकपञ्चसहस्रवर्षाण्येव व्यतीतानि। अधुना तु ४२६९५६ चत्वारि लक्षाणि
षड्विंशतिः सहस्राणि नव शतानि षट्पञ्चाशत् वर्षाणि अवशिष्टानि सन्ति।

केचन हरेराम ब्रह्मर्षि प्रभृतयः स्वाज्ञानेन सत्ययुगप्रवेशं मन्यन्ते। तेऽध
स्तनस्य—

"यदा सूर्यश्च चन्द्रश्च तथा तिष्यवृहस्पती
एकराशौ समेष्यन्ति तदा भवति तत्कृतम्"

इति पद्यस्यार्थं नैव जानन्ति। अस्यार्थः स्पष्टो विद्यते। तथाहि यदा
इमे त्रयोऽपि ग्रहाः समानांशभाजः कर्कराशिगस्य पुष्यनक्षत्रस्य प्रथमचरणे
युगपत् प्रवेक्ष्यन्ति तदा तस्य युगस्य प्रवेशो भविष्यति।

आगामिनि सहस्रद्वयवैक्रमाब्दे तु २००० एषां त्रयाणां ग्रहाणाम् आषाढ
मासीयामाथा दिने पुष्यचतुर्थचरणे सम्मेलनं विद्यते, न तु प्रथमचरणे। अतः
सम्प्रति सत्ययुगप्रवेशे मिथ्यैव भ्रमं सञ्चारयन्ति अनभिज्ञा इति। अत्रार्थे प्रमा
णमपि तत्रैव दत्तं विद्यते तथाहि—श्रीमद्भागवतसुबोधिन्याम्—

चन्द्रः सूर्यः तिष्यः वृहस्पतिरेते यदा सहैव कर्कराशौ समेष्यन्ति तदा
तत्कृतं युगं भविष्यति। महाभारतीयवनपर्वणि १९१ अध्याये ९० नवतितमश्लो

पद्यस्य टीकायां नीलकण्ठेनाप्युक्तम्—यदा गुरु-सूर्य्य-चन्द्रा युगपत् पुष्य-नक्षत्रमेष्यन्ति तदा कृतयुगप्रवृत्तिरिति ।

कृतयुगादीनां वर्षप्रमाणमपि मनुप्रभृति प्रामाणिकग्रन्थतस्तत्रैवोपन्यस्तं विद्यते । तथाहि—

चत्वार्य्याहुः सहस्राणि वर्षाणां तत्कृतं युगम्
तस्य तावच्छती सन्ध्या संध्यांशश्च तथाविधः ।
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु
एकापायेन वर्तन्ते सहस्राणि शतानि च ।

अत्र कुल्लूकभट्टाः—चत्वारि वर्षसहस्राणि कृतयुगकालं मन्वादयो वदन्ति । तस्य तावद्वर्षशतानि सन्ध्या सन्ध्यांशश्च भवतः । युगस्य पूर्वा संध्या उत्तरश्च सन्ध्यांशः । अन्येषु त्रेताद्वापरकलियुगेषु सन्ध्यासन्ध्यांश-सहितेषु एकहान्या सहस्राणि शतानि च भवन्ति ।

तेनैवं सम्पद्यते चत्वारि वर्षसहस्राणि सत्ययुगम् । तस्य तु चत्वारि एव वर्षशतानि सन्ध्या वर्षचतुष्टय एव सन्ध्यांशः । त्रीणि वर्षसहस्राणि त्रेतायुगम् तस्य त्रीणि वर्षशतानि सन्ध्या तावानेव सन्ध्यांशश्च । एवं द्वे वर्षसहस्रे द्वापरः तस्य द्वे वर्षशते सन्ध्या तावानेव सन्ध्यांशश्च । एकवर्षसहस्रं कलिः तस्यैकवर्षशतं सन्ध्या एकवर्षशतं सन्ध्यांशश्च ।

तथाहि सन्ध्यासन्ध्यांशसहितं देवमानेन ४८०० कृतयुगम् । ३६०० त्रेतायुगम्, २४०० द्वापरयुगम् १२०० कलियुगमिति निर्गलितोऽर्थः तत्र देवाना-ञ्चाहोरात्रं मानुषाणामेकवर्षस्य भवतीति ३६० षष्ठ्युत्तरशतत्रयदिनसंख्यागुण-नतः चत्वारि लक्षाणि द्वात्रिंशत् सहस्राणि मानवमानतः कलियुगस्य वर्षसंख्या ज्ञेया—तत्र मनुः ।

दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः
अहस्तत्रोदगयनं रात्रिःस्याद्दक्षिणायनम्
तदैतत्परिसंख्यातमदावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ।”

एतस्य श्लोकस्यादौ यदेतन्मानुषं चतुर्युगं परिगणितं तद्देवानां युग-मुच्यते । चतुर्युगशब्देन सन्ध्यासन्ध्यांशयोरप्राप्तिशङ्कायामाह एतद्द्वादश साहस्रमिति । स्वार्थेऽण् । सिद्धान्तशिरोमणिवाक्येनापि इदमेव समर्थ्यते तथाहि—

खखाभदन्तसागरैर्युगाग्नियुग्मभूगुणैः ।
क्रमेण सूर्य्यवत्सरः कृतादयो युगांघ्रयः ।

इत्येवं युगप्रमाणे निश्चिते किमिति मिथ्यावाक्छलादिभिरर्थविपर्यं कुर्वन्तोऽज्ञान् विमोहयन्तः, अन्धगोलांगूलन्यायं समर्थयन्ति कियन्तः पण्डितम्मन्या इति !

—:०:—

# ग्राहकमहोदयेभ्यो निवेदनम् ।

श्रीमन्तः पाठकमहानुभावाः कठिनेऽस्मिन् धर्मविप्लवसमये सर्वाभ्युदयप्रदस्य सनातनधर्मस्य प्रचारार्थं प्रयतमानोऽयम्, 'सूर्योदयः' भगवतः श्रीविश्वनाथस्य परमानुग्रहेण चतुर्दशे वर्षे पदं निदधातीति निवेदयतो मेऽत्यन्तं प्रसीदति चेतः । बहुविधविघ्नबाहुल्येन गतवर्षे 'सूर्योदयः' ग्राहकमहोदयानां समीपे यथासमयं न प्रेषितोऽभूदिति बहुवारं निवेदितम् । साम्प्रतं अस्य मुद्रणादिसर्वविधो प्रबन्धोऽन्यस्मिन् मुद्रणालये कृतोऽस्ति । अतः परं चास्य प्रकाशनं यथासमयं भविष्यतीति सुदृढोऽस्माकं विश्वासः ।

बहूनां ग्राहकमहोदयानां वार्षिकम् अद्यावधि न प्राप्तम् । पर्याप्तकालं यावत् प्रतीक्षां विधाय तेषां सन्निधौ सूर्योदयः वी० पी० द्वारा प्रेषितोऽभवत् । यैश्च वी० पी० स्वीकारपूर्वकं मूल्यं प्रेषितम्, ते नूनं धन्यवादार्हाः सन्ति । ये च अद्यापि मूल्यं न प्रेषितवन्तः, ते शीघ्रं धनादेश-( मनिआर्ड ) द्वारा स्वकीयं वार्षिकं मूल्यं प्रेषयन्तु । धर्मस्य स्वात्मनः सुरभारत्याश्च गौरवरक्षणाय किञ्चित् साहाय्यं वितरितुं सनातनधर्मपक्षपातिनो भवन्तः पराङ्मुखा न भविष्यन्तीति अस्माकं विश्वासः । आशास्ति भवन्तोऽस्य वार्षिकं मूल्यं द्रुतं प्रेषयिष्यन्तीति । अथवा वी० पी० द्वारा—'सूर्योदयम्' प्रेषयितुमनुमतिपत्रं कार्यालयेऽस्मिन् सम्प्रेष्य स्वकीयं ग्राहकत्वं संरक्षिष्यन्ति । धनादेशपत्रे ( मनिआर्डरकूपन ) स्वकीयेन पूर्णसंकेतेन सह 'नवीनोऽहं' ग्राहकः प्राचीनो वा इति सुस्पष्टतया लेखनीयम् ।

येषां ग्राहकमहोदयानां 'सूर्योदय' ग्रहणेच्छा न वर्तते, तैः कृपया एतत् विज्ञप्ति पठनानन्तरमेव वयं विज्ञापनीयाः, अन्यथा वी० पी० परावर्तनेन निरर्थकं वयं क्षतिग्रस्ता भविष्यामः,—तथा विधा ग्राहकाश्च सुरसरस्वत्याः सेवायां महतीं बाधां च समुपस्थापयिष्यन्ति इति सबहुमानं सानुरोधं निवेदयामः ।

—कार्याध्यक्षस्य ।

# ब्राह्मणस्य श्रेष्ठत्वं जन्मना वर्णव्यवस्था च

निबन्धा—श्रीदीनानाथशर्मा शास्त्री सारस्वतः
( स० ध० कालेजोपाध्यक्षः, मुलतानस्थः )

( क्रमागता )

ननु य ् कोऽप्येतानि कुर्यात्, सोऽपि ब्राह्मणपदवाच्यः स्यात्। यत ् प्राक् तत्तद्वर्णानां जन्मसिद्धोत्पत्तिर्निरूपिता; तत एव तत्तत्कृते कर्म्माणि निरूपितानि। ततश्च 'अधीयीरँस्त्रयो वर्णाः स्वकर्म्मस्था द्विजातयः' मनु० १०।१ 'वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः' मनु० ४।१४ 'न विरुद्धेन कर्म्मणा' मनु० ४।१५ 'वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्मेण जीवन् हि सद्यः पतति जातितः' मनु० १०।९७ इति स्वधर्मस्य वरत्वं परधर्म्म-जीवनेन च पातित्यं प्रदर्श्य मनुना परकर्म्माचरणं निषिद्धम्। 'दण्डेनैव तमप्योषेत् स्वकाद्धर्म्माद्धि विच्युतम्' मनु० ८।२७३ इति स्वकर्म्मपरित्यागे च दण्ड ् प्रयुक्तः; तर्हि परधर्म्मनिषेधे स्वकर्म्माचरणे च पुरुषस्य कथं स्ववर्ण-परिवर्त्तनं स्यादित्याश्चर्य्यमाभाति नः। 'श्रुताऽध्ययनसम्पन्ना धर्मज्ञाः सत्य-वादिनः। राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः' याज्ञवल्क्यस्मृ० व्यवहाराध्याय० २ इति गुणिनां सभ्यत्वमादिश्य 'सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्व्वधर्म्मवित्' ।३। इति ब्राह्मणस्य पृथङ् नियुक्तिः; तेन जन्मना वर्णः। अथ च १।८८ मनुपद्येन सिध्यति यद्-उत्पन्नानां ब्राह्मणादीनां कृते इमानि कर्म्माणि; ननु य ् कोऽप्येतानि कुर्यात्, स एव ब्राह्मणादिपदवाच्यः स्यात्। अन्यथा क्षत्रियवैश्ययोरपि 'अध्ययन-यजन-दानानि' कर्म्माणि सन्ति ब्राह्मणवत्; तर्हि किम् 'अध्यापन-याजन-प्रतिग्रहा एव कठिनास्तेषां कृते?। यस्तद्वदधीते क्षत्रियादिः, स किं पाठयितुं न शक्तः? प्रत्युत तस्य पाठनसामर्थ्येऽपि-'प्रब्रूयाद् ब्राह्मणस्त्वेषां नेतराविति निश्चयः' मनु० १०।१ इतरौ क्षत्रियवैश्यौ। इति मनुस्तयो ् पाठनं निश्चयपूर्वकं व्युदास्थत्। अथ च दानग्रहणमपि किं कठिनं यत्-क्षत्रियादिर्ग्रहीतुं न शक्ष्यति? यत्र मनुना क्षत्रियवैश्ययोरध्याप-काऽदिसम्भवेऽपि सामान्यतया तत्कर्त्तृकाऽध्यापनं निषिद्धम्; तत्रैव याजनप्रति-ग्रहावपि प्रतिषिद्धौ। तथा च—'षण्णां तु कर्म्मणामस्य ( 'ब्राह्मणस्य' ) त्रीणि कर्म्माणि जीविका। याजनाऽध्यापने चैव विशुद्धाच्च प्रतिग्रहः। १०।७६ अग्रे-

२

'त्रयो धर्म्मा निवर्त्तन्ते ब्राह्मणात् क्षत्रियं प्रति । अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः' १० ७७ 'वैश्यं प्रति तथैवैते निवर्त्तेरन्निति स्थितिः । न तौ प्रति हि तान् धर्म्मान् मनुराह प्रजापतिः' १०।७८ कीदृशी स्पष्टता । अनेन निषेधेन प्रतीयते यद्-अध्यापने याजने प्रतिग्रहे च वैश्यक्षत्रियौ समर्थौ तु स्तः; परं तेषां सत्त्वे निषेधाज्जन्मना वर्णव्यवस्था सिध्यति; अन्यथा तत्कर्मसामर्थ्येऽपि तौ कथं निषिद्धौ ? तेन प्रतीयते-कर्म्माणि तु त्रयाणां वर्णानां समानानि; तैस्तु न हि वर्णभेदः; किन्तु जन्मनैव भेदः । जन्मना भेदत्वाच्च वृत्तावपि भेदः कृतः ब्राह्मणस्य अध्यापनयाजनप्रतिग्रहा वृत्तयः कृताः । क्षत्रियाणां युद्धादिका वृत्तिर्नियतीकृता । वैश्यानाञ्च धनसङ्ग्रहादिवृत्तिर्नियमिता । तेन जन्मनैव वर्णव्यवस्था सिद्धा; न कर्म्मणा ।

'ब्रह्मवर्च्चसकामस्य कार्यं विप्रस्य पञ्चमे' मनु० २।३७ 'गर्भाऽष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम्' मनु० २।३६ इति ब्राह्मणस्योपनयनकालो गर्भाऽष्टमोऽब्दो मतः । गर्भाऽष्टमाब्दग्रहणं साधयति यदत्र ब्राह्मणो जन्मनैव जन्मना किमु, प्रत्युत निषेककालादेव मतः । अधुनाऽपि कस्यचित् साहसं भवितुमर्हेद्, यो निषेकेऽपि 'गुणकर्म्मणा वर्णो' प्रलपेत ? । वादिनस्तु पञ्चविंशतिवर्षोत्तरमेव गुणकर्म्मपरीक्षां मन्वते; तर्हि कथं तत्पूर्व्वं - तत्पूर्व्वमपि किम्—प्रत्युत निषेकसमये ब्राह्मणशब्दवाच्यता । तेन स्पष्टं जन्मना वर्णव्यवस्था सिध्यति । एवं 'शर्म्मवद् ब्राह्मणस्य स्यात्' मनु० २।३२ इत्येकादशे दिने नामकरणेन स शर्म्मादिव्यवस्थापनमुपोद्बलयति यद्-ब्राह्मणत्वं जन्मनैव। अन्यथा एकादशे दिने कुतो गुणकर्म्म-परीक्षा ? वादिमतानुसारं तु पञ्चविंशतिवर्षेभ्यः पूर्व्वं कोऽपि वर्णो न भवितुमर्हेत; यतो गुणकर्म्मानुसारमेव ते वर्णव्यवस्थां मन्वते । गुणकर्म्मपरीक्षणञ्च तन्मते पञ्चविंशत्तितमवर्षे । तेन प्रतीयते तत्कथनस्य व्याजादधिकं न मूल्यम्; यतः सर्व्वाणि शास्त्राणि जन्मनैव वर्णानां तत्सङ्केतादिकञ्च ब्रुवते । केवलं शर्म्मादिभेद एव किमु; प्रत्युत तेषां वर्णानां 'मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला । क्षत्रियस्य तु मौर्व्वी ज्या वैश्यस्य शणतान्तवी' मनु० २।४२ मुञ्जाऽलाभे तु कर्त्तव्या कुशाऽश्मान्तक-बल्वजैः' मनु० २ ४३, पारस्कर गृ० २ ५।२१-२८-२३-२४, आश्वलायन गृ० १।१६ ११, गोभिल० २।१०।१० इति मेखलाभेदः। 'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्' मनु० २ ४४ इति यज्ञोपवीतभेदः । 'गर्भाऽष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः' मनु० २।३६-३७, पारस्कर गृ० २।२।१-२-३, आपस्तम्ब

म्त्रगृह्यसूत्रे ४।१०।२-३, गोभिल गृ० २।१०।१-२-३, द्राह्यायण गृ० ३।४।१-३-४, वसिष्ठ० ११ इति यज्ञोपवीताऽवस्थाभेदः । 'वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण' आपस्तम्ब गृ० ४।१०।४, शतपथ० २।१।३।५ इति ऋतुभेदः । सद्यस्त्वेव तु गायत्रीं ब्राह्मणेभ्योऽनुब्रूयाद्, आग्नेयो वै ब्राह्मणः, त्रिष्टुभ ँ राजन्यस्य, जगतीं वैश्यस्य, पारस्क० २।१।७-८-९, मानवगृह्यसूत्रे १।२।३, ऐतरेये १।५।२८ इति छन्दाभेदः । 'आ षोडशाद् ब्राह्मणस्य सावित्री नाऽतिवर्त्तते । आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः' मनुः २।३८, पारस्क० २।५।३६-३७-३८, गोभिल० २।१०।४, द्राह्यायणगृ० ३।४।२-४-६, आश्वला० १।१९, बौधायन० १।२।३, वसिष्ठ ११ अ० याज्ञवल्क्य० आचाराध्या० इति गायत्र्यवधिभेदः ।

'ब्राह्मणो बैल्वपालाशौ, क्षत्रियो वाटखादिरौ । पैलुवौदुम्बरौ वैश्यौ दण्डमर्हन्ति धर्मतः' मनु० २।४५, पारस्क० २।५।२५-२६-२७, गोभिल० २।१०।११, आश्वलायन० १।१९।१३, आपस्तम्ब० ५।११।१६, वसिष्ठस्मृ० ११ अ० इति दण्डभेदः । 'केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः । ललाटसम्मिता राज्ञः स्यात्तु नासान्तिको विशः' मनु० २।४६, पारस्कर०, इति दण्डपरिमाणभेदः । 'भवत्पूर्वं चरेद् भैक्ष्यमुपनीतो द्विजोत्तमः । भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्' मनु० २।४९, पारस्कर० २।५।२-३-४, वसि० ११ इति भिक्षाभेदः । 'कार्ष्ण-रौरव-बास्तानि चर्म्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शणक्षौमाविकानि च' मनु० २।४१, पारस्क० २।५।१७-१८-१९, आश्वला० १।१९।८, वसिष्ठ० ११ इति चर्म्मभेदः । 'हृद्गाभिः पूयते विप्रः, कण्ठगाभिस्तु भूमिपः । वैश्योऽद्भिः प्राशिताभिस्तु, शूद्रः स्पृष्टाभिरन्ततः' मनु० २।६२ इत्याचमनभेदः । 'केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः' मनु० २।६५ इतिकेशान्तभेदः । 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च, मनु० २।१२७ इति कुशलादि प्रश्नभेदः ।

'प्रत्यभिवादेऽशूद्रे' ८।२।८३ इति पाणिनिसूत्रे प्रत्यभिवादवाक्ये ब्राह्मणस्य टेर्नित्यं प्लुत ँ क्रियते; शूद्रस्य तु निषेध एव । 'भोराजन्यविशां वेति' इति वैश्यस्य क्षत्रियस्य च टेः प्लुतत्वविकल्प इति प्रत्यभिवादवाक्ये भेदः । 'गौरपा ँ सु ब्राह्मणस्य, लाहितपा ँ शु क्षत्रियस्य, कृष्णपा ँ सु वैश्यस्य, गोभिल० ४।७।३-४-५, द्रायाण गृ० ४।२।१ इति वास्तुनिर्म्माणभेदः । 'एकमाडुर्वैश्यवरं

द्वौ तु क्षत्र-स्त्रियो वरौ । त्रयस्तु राज्ञो राजेन्द्र ! ब्राह्मणस्य शतं वराः' महाभारतेसभापर्व० ७१।३६'इति वरयाचनभेदः । इत्यादयो बहवो भेदा ् पृथक् पृथग् आरम्भादेवाऽऽपादिताः । गुणकर्म्मणा वर्णव्यवस्थायां तु इमे भेदा व्यर्थाः स्युरारम्भात् । तत्परीक्षाया ् पञ्चविंशे वर्षे एव सत्त्वात् । इमे भेदा एव साधयन्ति, यद्वर्णव्यवस्था जन्मना नतु गुणकर्म्मणा । अन्यथा इमानि भेदग्राहकाणि लिङ्गानि व्यर्थान्येव स्युः; तदा गुणकर्म्मणामेव भेदकानां विद्यमानत्वात् । अत एव तु मनुस्मृतौ—'तान् सर्वान् घातयेद् राजा शूद्रांश्च द्विजलिङ्गिनः, ९।२२४ इति द्विजलिङ्गधारिणां शूद्राणां घातनमादिष्टम् । अन्यथा गुणकर्मभिरेव तस्य शूद्रतायां स्पष्टायां लिङ्गादिनैष स कथं द्विजो मन्येत ? ।

'८ वें वर्ष के आरम्भ में, द्विज अपने सन्तानों का उपनयन करके आचार्यकुलमें....भेज दें । और शूद्रादि वर्ण उपनयन किये विना....गुरुकुल में भेज दें' सत्यार्थप्रकाशे द्वितीयसमु० पृ० १८ इत्युपनीतब्राह्मणादीनामाचार्य्यकुले पाठनाय प्रेषणेन, शूद्राणाञ्चोपनयनवर्ज्जं गुरुकुले पाठनोल्लेखेन च जन्मसिद्धवर्णव्यवस्थायां स्वगुप्तसम्मति ् पिशुनिता स्वा० दयानन्देन । आचार्य्यगुर्वोः मनु० २।१४०, २।१४२ लक्षणे भेद एवाऽस्ति नतु पर्य्यायवाचकता ( तेनाधुनिकाऽऽर्यसमाजगुरुकुलानि आर्यसमाजप्रवर्त्तक स्वा० दयानन्दानुसारं शूद्रच्छात्रवन्ति ज्ञेयानि ) ।

'ब्रह्म वा इदमग्रमासीत्, एकमेव'''तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते' शत० १४।४.२।२३, बृहदारण्यक० ३ (१) ।४।११ 'भूयान् वै ब्राह्मणः क्षत्रियात्' ऐतरेय ब्रा० ७।३२ 'त्रयो लोकाः सम्मिता ब्राह्मणेन' अथर्व० १२।३।२० 'शूद्र एव न दुह्यात्, असतो वा एष सम्भूतो यच्छूद्रः' तैत्तिरीय० १।२।३ 'तद्धै नाऽब्राह्मणः पिबेत्' शत० २।३।१।३९ अत्राऽपि जन्मना जातिः अन्यथा गोदोहनादिके शूद्रस्य को दोषः स्यात् । 'मन्त्रदः क्षत्रियो विप्रैः शुश्रूषानुगमादिना । प्राप्तविद्यो ब्राह्मणस्तु पुनस्तस्य गुरुः स्मृतः' इति मनुमिताक्षरोद्धृतव्यासवचनम् । अत्र क्षत्रियप्राप्तविद्याकस्य ब्राह्मणस्य पुनस्तस्य क्षत्रियगुरोरेव गुरुत्वकथनाद्, अप्राप्तविद्यतायामपि 'विप्र' शब्दस्य, तदध्यापकतायामपि क्षत्रियशब्दस्य प्रयोगदर्शनाद् गुणकर्म्मकृतवर्णव्यवस्था निरस्ता । मनुना ब्राह्मणस्य कृते १०।८१-८२ आपदि क्षत्रियवैश्यादिवृत्त्यवलम्बनं विहितम् । यदि तन्मते कर्मणा वर्णव्यवस्थाऽभविष्यत्; तर्हि तस्य ब्राह्मणस्य तादृशकर्म्मशीलत्वाद् वैश्यता क्षत्रियता वाऽऽदिष्टाऽभविष्यद्; न ब्राह्मणता । न चाऽऽपत्कालसमाधानम् ।

ब्राह्मणानां श्रेष्ठतासाधका मन्त्रा 'बाबूदलेन' श्रोतव्याः।—'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिने दिने नमस्कुर्य्यान्नाऽश्लीलं कीर्त्तयेद्। एता एव देवताः प्रीणाति' तैत्ति० आ० २।१५ एतद्विवरणे सायणः—'न केवलम् अग्निर्वायुरादित्य इत्येतत् देवतात्रयं किन्तु सर्वा अपि देवता वेदविदि वसन्ति; तस्माद् ब्राह्मणान् वेदविदो दृष्ट्वा स्मृत्वा वा प्रतिदिनं नमस्कुर्य्यात्; नतु तस्मिन् विद्यमानमपि दोषं कीर्त्तयेत्' ऋग्वेदभाष्योपोद्घाते ॥ 'तं वृक्षा अपसेधन्ति छायां नो मोपगा इति। यो ब्राह्मणस्य सद्धनमभि नारद! मन्यते' अथर्व० ५।१९।९ इति ब्राह्मणधनापहर्त्तुर्वृक्षकृतकोऽपि तिरस्कारो निर्दिष्टः॥ 'ये ब्राह्मणं प्रत्यष्ठीवन्, ये वाऽस्मिञ्छुल्कमीषिरे। अस्नस्ते मध्ये कुल्यायाः केशान् खादन्त आसते' अथर्व० ५।१९।३ कीदृग् दुरवस्था प्रादर्शि वेदेन ब्राह्मणतिरस्कर्तॄणाम्, अस्नः कुल्यायाः—इत्यस्यार्थो रुधिरनद्या मध्ये, शिष्टं स्पष्टम्; 'येवास्मिञ्छुल्कमीषिरे, इति मन्त्राशयमेव मनसिकृत्य मनुमुनिनाऽभ्यधायि—'म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करम्' ७।१३३। 'यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा। तस्याऽपि तत्क्षुधा राष्ट्रमचिरेणैव सीदति' मनु० ७।१३४ अयमपि वेदमन्त्रानुवादः—'उग्रो राजा मन्यमानो ब्राह्मणं यो जिघत्सति। परा तत् सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते (तिरस्क्रियते)' अथर्व० ५।१९।६। 'न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति, तस्माद् राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत' ऐतरेय ब्रा० ८।२४। 'नैनं पुराऽऽयुषः प्राणो जहाति, आजरसं जीवति, सर्वमायुरेति न पुनर्म्रियते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः' ऐत० ८।२५ इति ब्राह्मणस्य पुरोहितत्वाऽधिकारः। 'देवपीयुश्चरति मर्त्येषु, गरगीर्णो भवत्यस्थिभूयान्। यो ब्राह्मणं देवबन्धुं हिनस्ति, न स पितृयाणमप्येति लोकम्' अथर्व० ५।१८।१३

(क्रमशः)

## वर्षर्तु-वर्णनम्।

लेखक—जगदीशचन्द्रो 'विद्या-वाचस्पतिः' लवपुरीय-ब्राह्ममहाविद्यालयीयः (पठियार-काङ्गड़ास्थः)

षट्स्वृतुषु प्रावृडृतु र्महत्त्वसंवलितै र्विशेषैस्तद्विद्भिः प्राधान्यभाग् जेगीयते। ऋतौ ह्यस्मिन् कानिचिदीदृशानि वैशिष्ट्यानि दृष्टिपथमवतरन्ति,

यानि दृशा पिबद्भिः परिशीलयद्भिश्चानुभावुकैः प्राणभृद्भिः परिमुक्तकण्ठेन प्रशस्यत ऋतुरेषः । प्राकृतिकान् दृश्य-सन्दोहान् दृक्पथमानयद्भिर्वर्षा-संसि-सेविषुभिरेतस्य प्रशंसने, महत्त्वोद्गीथने च विरतिर्न विधीयते । समेषामेव मनुष्याणां प्रमोदोत्पादकोऽयं महानृतुः । निदाघ-समय-सन्तप्ता अतिशय-सन्तापसन्दन्दह्यमानदेहा देहभृतः कयापि पानीयाप्लुत्याऽऽप्लावयितुमात्मानं कामयन्ते । तेषां सूर्य-सन्ताप सन्तप्त मानसं मानसे संस्नातुं समीहते अत एवामी मनुजाः सन्ताप-ज्वरमपज्वरीकर्तुम पयःपूर-पूरितान् पयोदान् वियति व्रजतो दिदृक्षन्ते । कथमिवेमे वारिवारं वर्षयन्तोऽस्मत्सन्तापमपसारयेयुः विदूनानि मनांसि शमयेयुः—इत्येवोद्घीयते देहधारिभिः ।

एतामुत्कटां लालसामालोकयतेन्द्र-देवेन निदाघकाले नीलायमानमम्बरं श्यामलाभिर्मेघ-घटाभिश्छादितं विधीयते । वारिदावृतं विहायसं सम्प्रेक्ष्य लोक-चेतोऽम्बुजानि पूर्वं मुकुलितानि पुनर्विकसितानि प्रफुल्लानि च जायन्ते । तेषु मनस्सु नूतनाऽऽमोद-सन्ततिः पदमाधत्ते । विद्यावेदनेन विद्वांस इव १ वन-२ संवननेन वारिदा नितरां नम्रीभवन्ति । सन्तां दारुण-दुर्जन-वचनानि इव गिरयः कर्कशपातं प्रपतन्ति बिन्दु-३ स्वाराणि सहन्ते ।

न केवलं प्राणभृज्जगत्येव प्रत्युत जडजगत्यपि सर्वत्रैवामन्दानन्द-सन्दोहः प्रसरति । चिर-घर्म-घृष्टा पिपासातुरा मेदिनी पयोऽवाप्य तृषमपनयति । शुष्काणि घास-तृणानि हारित्यमाहरन्ति । हरिद्वर्ण-वीरण-स्तबक-संयुता ४ शाद्वल-संवलिता ३ भूर्वितत हरिद्वसनमिव दधाना शोभते । सर्वत्र प्रसृतो हरितिमा हरति मनांसि मानुषाणाम् । ५ पलाशिषु पलाश-श्रीः सञ्जायते विशुष्काणि म्लानानि च किसलयानि सलिल-परिषेचनेन ६ हारित्यमुपयन्ति । एषूपविष्टा हरिद्वर्णाः शुका अपि भ्रान्त्या पत्रतया प्रतीयन्ते । ऋतावस्मिन् रसाल-फलं यावज्जायते न तावदन्यत् । फलं हीदं खलु प्रधानम् । किञ्चेदं मधुरत्वात् सुस्वादुत्वान्न केवलं शिशुभ्य एव रोचतेऽपि तु तरुणेषु स्थविरेषु चापि रुचिं विरचयति । वृक्षेषु निषण्णाः पक्षिण इमानि चूतफलानि ७ स्वादुङ्कारं भुञ्जते । पर्वतीयप्रान्तेषु यदा झञ्झा-वातो वाति, आम्राणि च तरुभ्यः सडफडफ शब्दं भुवि निपतन्ति तदा बालका बालिकाश्च निपातसमकालमेव तान्यादधानाः

१ पयः कीलालममृतं जीवनं भुवनं वनम् इत्यमरः । २ 'वन' संभक्तौ । ३ 'समूह निवहः वारसंघात-संचयाः । ४ शाद्वलः शादहरिते । ३ भूर्भूमिरचला । ५ पलाशी द्रुद्रुमागमाः । ६ 'इण् गतौ' इणो यण् । ७ 'स्वादुमि णमुल्' पाणिनिः ।

परमां मुदमुपयन्ति । इतरेऽपि फलभाजः शाखिनः स्वपुष्प-फल-समृद्ध्याऽतितरामुल्लसन्ति । अस्मदीये प्रान्ते केतक्या मालत्याः सुदर्शनस्य च कुसुमानि स्व-२सुषमया पुष्पवाटिकामुद्भासयन्ति ।

३ प्रावृषि पिच्छिलायां पृथिव्यां पादप्रक्षेपं विदधाना जनाः स्खलन्तितमाम् । ऋतावेतस्मिन् ४ वर्त्मानि पङ्किलानि वारिवारसंवृतानि सञ्जायन्ते । अध्वावरोधादध्वनीन-जनो ज्ञान-जननादिन्द्रियसमुदाय इव विरतिमुपैति । ५ उर्वी-रजो जुष्टं ६ जीवनं मायामिलित-जीव इव म्लानिमायाति । दुर्जन-प्रीतिरिवाऽस्थिरा विद्युद् वियति विद्योतते । द्योतमाना सा सौदामनी रजन्यां वहिर्निस्सृतान् गच्छतः पथि पान्थान् भृशं भीषयति । ७ विभ्यतोऽमी कस्यचन करुणा-वरुणालयस्यालये निलीयन्ते । कमनीय-कायाः काञ्चनकान्तयः कान्ताः, मण्डन-मण्डित-माणवकाः, केचनापचित-शक्तिका मानुषाश्च विद्युद्भियो मुहुर्मुहुः प्रकम्पमानाः ८ शरणमाश्रयन्ते । मेघ-मातङ्ग-घटाभी रणाङ्गण-गगनमाव्रियते । तोयदाः सतडतडतारावमतितरां नदन्तो गर्जन्तश्चेन्द्रवज्र-प्रपातेन विदीर्णहृदया रुधिरमिव वारि वर्षन्ति । पर्वतीय-प्रान्तेषु तु पञ्चषाणि अहानि कदाचन दशाहानि यावद् वर्षुका वारिदाः सातत्येन सलिलसन्ततिं स्यन्दयन्ति स्यन्दमानानां सरितां तीरमधिवसन्तो लोकास्तत्रत्यां शोभामवलोक्य नितरां प्रहृष्यन्तः प्रसीदन्तश्च सरित्सुषमां प्रशंसन्ति । शृङ्गि-शृङ्गेषु वृष्टेनोदक-कलापेन परिपूर्णत्वान्नद्योऽति ११ जवेन १२ जवन्ति । कूलयुगलं कर्षयन्त्यः कदाचन क्वचन तटोपरि निर्मितानि भव्य-भवनानि भ्रंशयन्ति । शालि-शालितानि क्षेत्राणि निज-प्रवाहेषु निमज्जयन्ति । प्रचुर-प्रवाहपतिताः केचन वराका वराका विहित विविधविचेष्टा अपि १३ तटिन्यां निमज्जन्ति ।

समयेऽस्मिन् क्षोदीयांसः कृमिकीटप्रभृतयो वैपुल्येन वीक्ष्यन्ते । १४ क्वचित्सरिसृपाः सर्पन्तः सरणिमनुसरन्ति । अध्वानि धावता मनुष्येण पादविदलिताः समीचीनं समयं समीक्ष्य दलन्तं दशनैर्दशन्ति ।

भूयांसो धर्म-मर्म-वेत्तारः पुरातन-धर्म-प्रचारचिकीर्षया वैदिक-विप्रवरोपदेश-पीयूषैरधर्मघर्म-सन्तप्तान् पिपासूनापिप्लावयिषवः, अविद्या

---

१ झञ्झावातः सवृष्टिकः । २ सुषमा परमा शोभा इत्यमरः । ३ स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः । ४ अयनं वर्त्ममार्गाध्वपन्थानः । ५ वसुधोर्वी वसुन्धरा । ६ जलं ७ वियद्विष्णुपदं वातुपुंस्याका-शविहायसि । ८ तडित्सौदामनी । ९ नाभ्यास्ताच्छतुः इति नुम् १०शरणं गृह-रक्षित्रोः ।११ जवः-वेगः । १२ जुसौत्रो धातुः-जुधङ्क्रम्य-इत्यत्रोक्तः । १३ नदी तटिनी ह्रादिनी धुनी । १४ सर्पे व्याल सरीसृपाः ।

१ तमीतिमिर-निमग्नानुद्दिधीर्षवः पण्डित-प्रवरा जनपदेषु, ग्रामेषु ग्रामटिकासु विचरन्ति । केचन प्रसाद-रसोपेतया सङ्गीतमय्या महाभारत-रामायणकथा वर्णनया जन-कर्णपुटानि आपूरयन्ति आह्लादयन्ति च । धार्मिकस्थलेषु भगवज् जयकृतिभिर्गगनं गुञ्जितं जायते । पर्वत-प्रान्तेषु निर्मिते रेल-गन्त्री-मार्गे कदाचनोपरि-प्रदेशात् शिखरि-शिखराणि परिभ्रश्यन्ति मार्गमवरुन्धन्ति, येषामुत्थापने महीयस्यो विघ्न-बाधाः समुपतिष्ठन्ते । वर्षाकालोऽयं प्राच्यादि-दिशो व्यवहृतिं विलुम्पति खलु । कदाचनैव २ भानोर्भानवो निजभाभिर्भासयन्ति लोकान् । धृतेन्द्रधनुषो विहायसः शबलिमा कुण्डल-कान्ति-कलापांशु-संवलि-तस्य श्यामल-श्याम-शरीरस्य विडम्बनां विदधति । कलधिलापीनि कलापि-कदम्बकानि कीलालकलापमालोक्य परमां मुदमनुभवन्ति नृत्यन्तितमाम् । पतत्रिकुलं ३ कुलायेषु निलीयते ।

नव-नीप-पुष्पाणां रजः सर्वत्र प्रसरद्विलासिनां पट-वासमिवोपजनयति । दधिकणसन्निभाः कुटज-कुसुमधूलयो निष्पिष्ट-मौक्तिक-क्षोदा इव चकासते । ४ नीहार-निर्मलानां कोमल ५ मालती ६ सुमनसां सुषमा जनमनांसि मोदयति तमाम् । छिद्रन्त दन्त-धवलं भृङ्गसङ्गगुञ्जायितं केतकीकुसुमं व्योम्नो विगलितं ७ घन-घनाघनौघोपघ्रातेन मृग-लाञ्छितं कृशं शिखं शशि-शकलमिव शोभते ।

क्षोदीयस्यो निर्झरिण्यः क्षुद्रसलिलसमृद्ध्या खलाः सम्पदासक्त्येव मर्या-दामतिक्रामयन्ति । इतस्ततः समेत्य सलिलसन्दोहाः सलिलाशये सति सद्गुणा इव संक्रामन्ति । सरितः समुद्रमासाद्य हरिमिव भक्तहृदयानि स्थेमानमुपयन्ति । वटवो वेदध्वनिमिव दर्दुरा टर-टररवमातन्वते । रजन्यां ज्योतिरिङ्गणा दुर्जन-समाजे दुष्टा इव निजजालं विस्तारयन्ति । ऊषरायामुर्वर्यां तृण माला साधौ कामनेव नोपजायते । कलौ वर्णाश्रमधर्मा इव प्रावृषि बक-धाका विलीयन्ते । क्रियद्वर्णनं वितन्येत वागेव न विरमति । तदपि विस्तरभिया विरम्यते

---

१ रजनी यामिनी तमी । २ भानुः करो मरीचिः स्त्रीपुंसयोः । ३ स्युः प्रभा भारुच्छवि-द्युतिदीप्तयः । ४ कुलायोनीडमस्त्रियाम् । ५ अवश्यायस्तु नीहारतुहिनं हिमम् । ६ सुमना मालती जातिः । ७ स्त्रियः सुमनसः पुष्पं शब्दोऽयं बहुवचने प्रयुज्यते तदुक्तमाचार्यैः-"आपः सुमनसो वर्षा अप्सरःसिकताः समाः एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम् । ९ हन्तेश्च इति वार्त्तिकेन अचि ह्रस्वमाक्चाभ्यासस्य । १० वाभ्राशभ्लाशभ्रमुक्रमु० इतिवैकल्पिकःश्यन् क्रमः परस्मैपदेषु इति दीर्घः ।

# दुर्गा-चरणस्मरणम् ।

ले०—श्रीगिरिजादत्तपाठकः काव्यतीर्थ आयुर्वेदाचार्यः ।
प्रधानाध्यापकः श्रीकालिकेश्वरायुर्वेदविद्यालयस्य ।

भातु भव्या भवानीयं भावनाभाविता शुभा ॥
भवाङ्गसङ्गतो यस्या भूतयो भान्ति भूतले ॥ १ ॥

भास्वन्ती भुवनाभिरामभरिताभोगप्रभाभासुरा ।
भूत्येकप्रभुतामुपेत्य भुवने या भासते भर्गगा ॥
भूयोऽमी भुवनेश्वराः सुरगणा यत्पादपाथोद्भवैः
पूर्णैः पूतपरा भवन्ति गलिताऽज्ञानान्धकारैर्बुधाः ॥ २ ॥

वीणावादनतत्पराऽर्थलहरीमुद्वेल्लयन्ती सती ।
सा माता जगतां जयत्यतिशयज्ञानप्रदा भारती ॥
यस्याः—पादनखप्रभामनुसरँश्चन्द्रोऽम्बरे चञ्चते ।
रागेणापगतादरो जलजनिः पुष्पाञ्जलिं याचते ॥ ३ ॥

आस्तां समस्तवरवस्तुवितानवृन्दे मातुश्चराचरनमस्कृतपादरेणुः ॥
सैका सुरासुरविवन्दिशिरोऽर्चिता स्याद्भर्गोत्तमाङ्गमिलिता भजतां विभूत्यै ॥४॥

भास्वत्करैः समुचितं विकचं करोति शम्भोर्विलोचनगतेन च सङ्गितं तत् ॥
पादाम्बुजं विकसितं न मृषोक्तिरेषा वैधो विधिर्न विबुधैरपि बाधनीयः ॥ ५ ॥

उत्तमाङ्गसुभगा सुरापगा मौलिलब्धशरणा दिवश्च्युता ।
साहसैकरसिका शिवा हि सा पद्गताऽऽयनतिर्नचाश्रिते ॥ ६ ॥

सुधान्धःपतिस्ते सुधासुन्दरं किं नमत्यंघ्रियुग्मं यतो भाग्यवान् सः ॥
धरायां श्रियः साधुतैषां त्वदर्थे धराया धवत्वं कियत्तद्यशोऽदः ॥ ७ ॥

पार्वतीपतिरयं वृषध्वजः किं श्रुतेरपि पतिर्न गीयते ।
तेन किं सुरपतिप्रपूजितः सेव्यसेवकमतिर्न चिन्त्यते ॥ ८ ॥

जटा सा धुता देवनद्या जलेन न पूतेति तेनानतेनापि मूर्ध्ना ॥
उमापादपद्मप्रसूतैः परागैः प्रयुक्तः प्रणामः शिवस्याऽस्तु भूत्यै ॥ ६ ॥

नमामः प्रयामः पदद्वन्द्वचन्द्रं चमत्कारचंचच्चरित्रं च श्रमः ।
भजामोऽर्चयामः श्रवः सौम्यवर्णमुमे गौरि दुर्गे शिवेऽम्बे[1] भवानि ॥१०॥

[1] अम्ब+इ ! ( ईकारो लक्ष्मीस्तत्सम्बुद्धौ ) ।

# ऐतिहासिकं वृत्तम् ।

## [ काशिक-गवर्नमेण्ट-संस्कृत-कालेज-विषयकम् ]

लेखकः—काशिक-राजकीय-संस्कृत-महाविद्यालयाध्यक्षः श्रीयुत डाक्टर मङ्गलदेव शास्त्री एम० ए० डी० फिल० ( आक्सन ) महोदयः ।

( पूर्वतः प्रवृत्तम् )

प्रायेण नाविदितमेतद्बहूनां यदीशवीय १८४४ संवत्सरात्प्राक् काशिक-राजकीय-संस्कृत-महाविद्यालयस्य नैवाधुनिकस्थान एव स्थितिरासीत् । किन्तु काशीनगराभ्यन्तर एव कुत्रचित्तत्स्थानमवर्त्तत । १८४४ ई० संवत्सरे तत्स्थान-परिवर्त्तनविषयकमधिकारिणां "श्रीमत्कम्पनी-सम्बन्धिसाहबानाम्" निश्चय-मवगत्य, विद्यालयीयपण्डिताश्छात्राश्च, उपद्रुता अशान्ताश्च, आन्दोलनारूढाः महामहिमलेफ्टिनेन्टगवर्नर-समीपे विज्ञप्तिद्वयं प्रेषितवन्तः । तद्विषयकमेव वृत्तमधस्तादुद्धृतेन लेखेन वर्ण्यते—

काशीस्थ-विद्यालयस्याधुनिक-स्थानस्थितिविषयकम् विद्यालयीय-पण्डितानां छात्राणां च विज्ञप्तिपत्रद्वयम् श्रीमत्कम्पनीसम्बन्धिभिस्साहबैर्महा-महिम-लिफ्टिनेण्ट गवर्णर-समीपेऽव्यवहितपूर्वकाले प्रेषितस्बभूव । इदानीम्प्रो-क्तस्य महामहिम्नस्साहबस्योत्तरं लब्धम् । तत्र लिखितमेतत् महामहिम्ना गव-र्णरसाहबेन पण्डितच्छात्राणामप्रार्थना सुष्ठु विचारिता, तता विद्यालयस्य स्थानविकाराद्धानिः पण्डितादिभिरनुमीयते इति प्रतीयते । परन्तु प्रोक्तस्थान-विकारो वस्तुतो विद्यालयस्याभ्युदयार्थमभिप्रेतस्य च तद्धानिकारको न भवि-ष्यतीति स्वयं प्रार्थयितॄणां बोधविषयोऽचिरेण भवितुमर्हतीति श्रील-श्रीयुत गव-र्णरस्य मतम् । अपरञ्चाभीष्टस्थान-विकारात्प्रथमतः पण्डितादिभिः क्लेशानु-भवो भवितेति सत्यं, परन्तु स क्लेशानुभवः कालात्ययेनाचिराल्लोप्स्यति-इति श्रीमद्गवर्णरस्य प्रतीक्षास्पदम् ।

ता० १ मई सन् १८४४ ईसवी ।

( २ )

अद्यत्वे उक्तविद्यालयो ग्रीष्मावकाशहेतोः प्रायो मासत्रयं पिहितद्वारस्त-आस्ते । प्राचीनकाले पुनरन्यथैव वृत्तमासीदित्यधस्तादुद्धृता विज्ञप्तिः सुतरां प्रकटीकरोतिः—

"स्वस्ति श्री ५ पाठशालामहाध्यक्षेषु सान्तेवासिविदुषां विज्ञप्तिः इदानीं ग्रीष्मर्त्तुतापेन गमन-समये वयं पीड़िता भवामः तदुपशान्त्यै क्षुद्रघटी-

द्यावकाशकृपा यावच्छैत्यं भवतु भवताम्। यथा च सुखिनः सन्तु सर्वेऽपि कृपापालिता इति

अत्रार्थे श्लोकश्चैकः—

श्रीष्मार्कतप्तविबुधच्छात्रेषु भवतां दया।
घण्टामात्रावकाशस्य दानेन च्छत्रतामियात्॥१॥ शुभम्

—ता० ११ मई सन् १८४४ ईसवी।

| | |
|---|---|
| लज्जाशङ्कर शर्म्मणः | काशीनाथ शास्त्रिणः |
| नन्दलाल शर्मणः | देवदत्त शर्म्मणः |
| कृष्णचन्द्र भट्टाचार्यस्य | दुर्गादत्तशर्मणः |
| नारायणशास्त्रिणः | हीरानन्दशर्म पण्डितस्य |
| बलदेवशर्मणः | बापूदेव शर्म-ज्योतिर्विदः |

ईशवीय-१८४४ संवत्सरात्प्राक् काशिक-राजकीय-संस्कृत-महाविद्यालये विद्यमानायाः पाठ्यपद्धतेर्विषये पुनरेव यथावकाशं विचारः करिष्येत। अधो निर्दिष्टाऽऽज्ञप्तिस्तु तस्मिन्नेव संवत्सरे विद्यालयाध्यक्षमहोदयानां तस्यां पद्धतौ के के परिष्कारा अभिप्रेता आसन्नित्येव सुव्यक्तमभिव्यनक्ति—

विद्यालये वर्त्तमानपाठनक्रमावलोकनाच्छात्राणां मनोयोगः प्रायश एकस्यां विद्यायां किंवा विद्याद्वये भवति। अनेन तु क्रमेण च्छात्राणां यथेप्सितो ज्ञानोदयो न जायते इति प्रतीयते। अतः सर्वैश्चाल्पवयोभीर्विद्यार्थिभिर्व्याकरणाभ्यासानन्तरं गणितकाव्यविद्ये अपि अभ्यास्ये (?) इति श्री मदध्यक्षाय रोचते तदनन्तरं चतुर्थे किं वा पञ्चमेऽब्दे प्रोक्तविद्यालयाभ्यासादूर्ध्वं स्मृतेः किं वा न्यायस्याभ्यासः करिष्यते। शेषे च व्याकरणादौ यथेष्टं प्रवेशे जाते तत्यक्त्वा कस्यापि विद्यान्तरस्याभ्यासः कर्त्तव्यः। क्रमश्चायं वक्ष्यते-तथाहि अल्पवयसां प्रथम द्वितीय वर्गा (?) १ व्याकरण, २ गणित, ३ काव्यानि, अध्येयानि। तृतीयवर्गेण व्याकरणगणितकाव्यानन्तरं स्मृतेः किं वा न्यायस्य वाभ्यासः कर्त्तव्यः। चतुर्थवर्गेण वेदान्तसांख्यादीनामभ्यासः कर्तुं शक्यते। पूर्वोक्ताज्ञप्तिसफलीकरणार्थम् श्रीमत्पण्डितैर्मिलितैरुपायप्रयोगोऽविलम्बेन कर्त्तव्यः। अपरञ्चाधुनारभ्य व्याकरणसम्बन्धिविद्यार्थिनो गणितकाव्याभ्यासार्थं तत्तच्छालयोरमुकसमये निरुपिते प्रेषयितव्या इति प्रधानोपनिधि डेपाटी-शब्द-वाच्य-पण्डितेनेयं रीतिरनुसारणीया पाठालये।

ता० २५ माह अप्रैल सन् १८४४ ईसवीसंवत् १९०१ वैशाख शुक्ल ७।

—:०:—

## श्रीधन्वन्तरिस्तवनम्।

देवासुरैः सरससागरसारविद्भिः सारस्य यस्य सुलभम्प्रतिपादयद्भिः।
साश्चर्य-सस्मित-मुखैरवलोकितोऽसौ धन्वतरिर्धृतसुधा-कलशोऽवतान्नः ॥१॥
कालान्तरेऽपि तनुतां न तनुस्तनोतु स्वास्थ्यं सुखं सकललोकललाम-शर्म।
तद्वद्यशोधवलिताऽमरताऽस्तु चैषास्पीयूषवर्षिवपुषः सदनुग्रहोऽयम् ॥२॥
आरोग्यमूलमिदमत्र वपुर्जनानामारोग्यमस्ति सुलभं न गदान्वितानाम्।
आरोग्यदानकुशलस्य कृपापरस्य पीयूषवीर्यवपुषः सदनुग्रहोऽयम् ॥३॥
आजीवनं जनिमतां हि रुजो रुजन्ति, जीवस्य जीवनमहो चिरुजं न जातु।
आवश्यकं गमनमेव विचार्य चार्याः ! पीयूषवर्षिवपुषः सदनुग्रहोऽयम् ॥४॥
पीताम्बरं कटितटे विधृतंविभाति शम्पाशिखेव विमले गगने मनोज्ञम्।
तद्वानुजाजलगताब्जपरागशोभामुच्चै र्जहार सुतराम्प्रथिताम्पृथिव्याम् ॥५॥
सद्भिर्विभाव्य सुचिरं स्वहृदब्जमध्ये संचिन्तनीय इति नाऽकृतपुण्यलभ्यः।
सोऽयं समागत इह प्रणतिम्प्रकुर्मः स्वास्थ्यायुषी सुभगतासुखिते समेमः ॥६॥

भावत्कस्य—पं० श्रीगिरिजादत्तपाठकस्य।

—·—:०:——

## छात्रेतिकर्तव्यता।

ले०—साहित्यभूषणं त्र्यंबकनिवासी शुक्लोपाख्यो बालकृष्णशास्त्रितनुजः विश्वेश्वर शर्मा।

अयि भो महाभागाः! विद्यार्थिनां प्राधान्येन किं कर्तव्यमिति यथामति विचार्यते—येनानुष्ठितेन सर्वेषां मानवानां सर्वं वय इह तथा परत्र सुखानुभवि भवति। स्वर्गादिप्राप्त्या जीवात्मा मानवशरीरसाफल्यं भजते।

मनुष्याणां सविधे किं श्रेयः साधनं वर्तते ? येन साधनेन मनुष्या ऐहिकामुष्मिकं द्विविधमपि श्रेयः संपादयेयुः, इति जिज्ञासा मनसि प्रादुर्भवति विवेकिनाम्। तदेव यथाबुद्धि विवृणोमि मर्त्यानां द्विविधं श्रेयःसाधनं वरीवर्ति तच्च सहजमेव नराणाम्। एकं शरीरं द्वितीयं मनश्च। इति सकलजनविदितमेवास्ते। उक्तद्विप्रकारकसाधनेन कल्याणपरम्पराम् ऐहिकां आमुष्मिकां लभते नरः, इति सर्वेषामनुभवसिद्धम्। तयोश्चादौ शरीरमेव विचारयामः पश्चान्मनः।

अध्येतृभिः पूर्वे वयसि स्वतनोर्दार्ढ्यं सम्पादनीयम् । अत एव शास्त्रकारैरुपन-यनानन्तरं नियमेन शौचस्नानसंध्यासूर्यसहस्रनमस्कारादिविधिः तथा अग्नि-परिचर्या प्रादर्शि । येषामनुष्ठानेन शरीरदार्ढ्यं मनोदार्ढ्यं क्रमादेव लभतेऽनुष्ठाता । तत्र मंत्रस्नानेन प्रतिदिनं शरीरशुद्धौ संध्याकर्मणि प्राणायामैः शरीरस्य विशु-द्धतापूर्वकं बलसंवर्धनं मनस्थैर्यं च विन्दते मनुष्यः ।

"प्राणबन्धनं हि सौम्य मनः" इत्युक्तत्वात्, योगसूत्रं वक्ति "अहिंसासत्या-स्तेयब्रह्मचर्यापरिग्रहा यमाः" तथा "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" तत्र अहिंसादिषु चादौ ब्रह्मचर्यस्यैव विचारं करिष्यामः, ततश्च अहिं-सादिसर्वेऽपि निवृत्तिलक्षणा उपरमा यमाः । यम उपरमे इति स्मरणात्, तथा बाह्याभ्यंतरशौचसंतोषादिसकलानि विधिरूपत्वात् नियमाः । एतेषु शरीरबल संवर्धनाय ब्रह्मचर्यस्यात्युपयोगित्वात् शरीरान्तर्गतास्थित्वङ्मज्जादिषट्कोशानां सप्तधातूनां च विवृद्ध्यर्थं दृढतायै च ब्रह्मचर्यस्यावश्यकत्वात् । ब्रह्मचर्यस्य कोऽर्थः इति भवेत् केषांचिदाकांक्षा मनसि । ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म तच्चर-तीति ब्रह्मचारीति ब्रह्मचारीशब्दस्य निर्वचनं तत्रभवद्भिः भट्टोजीदीक्षितैः कृतम् । तथा अष्टधामैथुनाभाववोधितब्रह्मचर्यण शरीरदार्ढ्यं बुद्धेस्तैक्ष्ण्यं च कृत्वा तस्या-साधारणवृत्तित्वसंपादनेन मेधासंज्ञाभाजनं घटयति ब्रह्मचर्यदीक्षा ।

ब्रह्मचर्येणैव प्राचीनमहर्षिभिः लोकोत्तराणि कार्याणि सम्पादितानि देव-ताभिश्च यथा ब्रह्मचर्यपूर्वकगुरुगृहनिवासेन भगवता देवेन्द्रेण प्रतर्दनात् महर्षेः ब्रह्मविद्या समपादि इति सुस्पष्टं छान्दोग्ये निगद्यते । श्रीरामभक्तेन मारुतिना वज्रदेहित्वं लब्धम् । दुष्टरावणवधादि राष्ट्रकार्यं समुद्रोल्लघनं परदेशगमनं सीतालक्ष्मणान्वेषणं चाकारि । एतत् सर्वमविहतपराक्रमत्वं एकस्या ब्रह्मचर्य-पूर्वककृतरामोपासनायाः फलं वरीवर्ति ।

ब्रह्मचर्येणैव महाप्रतापवान् भीष्मः स्वच्छन्दमृत्युं चाविन्दत । अहो माहात्म्यं ब्रह्मचर्यस्य एकशतोत्तरसप्ततिसमात्मकं आयुरन्वभावि यस्मात् गांगे-येन । तथा—गृहस्थाश्रमेऽपि अशास्त्रीयस्त्रीपुरुषव्यतिकरः मैथुनं ब्रह्मचर्याभावः इत्यस्य विपरीतशास्त्रीयस्त्रीपुरुषसंसर्गरूपब्रह्मचर्येणाऽपि गार्हस्थावस्थायां नियमाक्तब्रह्मचर्यं चैकविधमुच्यते स्मृतिकारैः । भीमार्जुनाभ्यां गृहस्थाश्रम-विहितब्रह्मचर्येण लब्धशारीरबलेन रसातलस्वर्गाक्रमणमपि समनुष्ठायि । अतः अभ्युदयनिःश्रेयसेच्छुभि विद्यार्थिभि ब्रह्मचर्येण शारीरबलसंवर्द्धनं सम्पादनी-यम् । यतो नहि शारीरदार्ढ्यात् विना धर्मार्थकाममोक्षाणाम् उपलब्धिर्भविता इति सुनिश्चितम् । "नायमात्मा बलहीनेन लभ्यः" इति श्रुतावपि चोक्तम् । तथा परमदयालुना भगवता श्रीकृष्णेनापि तथैव प्रत्यपादि—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १ ॥

इति शरीरतपसि ब्रह्मचर्यस्य कथितत्वात् दैहिकबललाभार्थम् आवश्यकत्वमेव तस्य दृश्यते प्रत्यक्षसिद्धत्वाच्च तथा च देवद्विजगुरुप्राज्ञानां पूजनमपि निर्दिष्टम् । तत्र ब्रह्मचर्यावस्थायां सूर्योपासनं शास्त्रकारा अत्यावश्यकमकथयन् । इतराश्रमेऽपि तदेव अनुष्ठेयम् । सूर्योपासना तु साष्टांगनमस्कारसहस्रैः प्रतिदिनं कृता चेत् शरीरस्नायूनां दृढ़त्वं सम्पन्नं भवेत् ।

तथैव दैहिकसप्तधातवः विरुजः सन्तः पुष्यन्तीति तु प्रत्यक्षसिद्धम् । प्रवृद्धे च शारीरबले धर्मादिसंपादने समर्थो भवति मानवः । तनोर्बलं प्राधान्येन पूर्वस्मिन् वयसि सुसंपाद्यम् । तदर्थमेव ब्रह्मचर्यदेवाद्युपासना विद्यार्थिभिः कर्तव्या इति न विस्मरणार्हम् ।

( क्रमशः )

## संस्कृतस्यावनतिःकीदृशी ?

( ले०—पण्डित जगदीशप्रसादमिश्रशास्त्री काव्यतीर्थः, इन्दौर । )

भारतेऽमुष्मिन् स्वधर्मविमुखदुःखभागिनोऽभिनवमस्तिष्कमया मानवाः सम्प्रति कियत्परिमितां कुत्सां संस्कृतभाषायाः स्वसमाजे विकसितहृदयेन विदधति, तत्प्रकाशनविषयेऽप्यस्मदादीनाङ्कीदृशी मनोरमा सुशिथिलता दरीदृश्यते । अहो ! स्वप्नग्रस्तपुरूषस्य दशेयन्तु नहि ?, यत्स्वकर्तव्यदूरीभूता वयङ्कथमेतां दशां प्रवृत्ताः । आत्मा स्वयमेव रोदिति, वेदान्तज्ञानमत्रानुयोगो भवति, आत्मा तु ब्रह्म, परञ्च कोषकारेण व्यलेखि नाम "आत्मा जीवे तथा देहे स्वभावे परमात्मनि, इति । अस्तु - यत्सम्मुख एव स्वजीवनजीवदा धर्म्मपोषका प्रकृतिपालिका समस्तशास्त्रसहजतत्त्वप्रदर्शिका, आत्मोन्नतिसमर्था सनातनी संस्कृतभाषा सर्वोच्चतराऽऽधुनिकै र्नवीनै "मृतक भाषे"त्युपाधिनाऽलंक्रियते, सर्वथा सर्वत्र सर्वतोभावेन चैते नूतनास्संस्कृतभाषाया अपकारमेव कुर्वन्ति । संस्कृतज्ञानां कृते, एतेषां मनोवृत्तयः सुस्पष्टं वैरभावमुत्पादयन्ति वै, एवमपि प्रकटयन्ति एते सर्वे संस्कृतज्ञा भावशून्या निरक्षका निरक्षराश्चैव वरीवृतन्ति, हा ! अस्मच्छैथिल्यस्य परिपाकोऽयं स्फुट एव अधुनापि न किमपि जातम् । यदि समस्ता स्संस्कृतज्ञास्तथा च संस्कृतानुरागिणः स्वे स्वे प्रदेशेऽस्य विषयस्य संघं विरचय्य, "संघे शक्तिः कलौ युगे" इति व्यासोपदेशस्यानुसरणं पूर्णरूपेणामुष्मिन् कर्तव्ये च विविच्य जागृतदशायां संघशक्तिश्चाऽऽनाय्य निजकेनाऽपि कार्यकृतं वैरभावमपास्य कृतबुद्धिशुद्धतत्वंभावं सन्धार्य,

आर्य्यसमाजस्य श्रेष्ठतरां विवृद्धिञ्चालोक्य, अन्याऽऽङ्ग्लादिनाञ्चोन्नतिमपि सन्दर्श्य दैनिक-यौवनवृद्धित्वञ्च विगणय्य, द्रव्यप्राप्तिविषयेऽपि स्थिरबुद्धिं संस्थाप्य स्वकर्तव्याकर्तव्यञ्च विमर्श्य, सर्वात्मना संस्कृतस्योन्नतिमङ्गीकृत्य पुनरस्य संस्कृतस्योन्नति-सम्पादनकर्म्मणि समासक्ता भवेयुस्तदा पूर्णतया कथ्यते खलु संस्कृतभाषा यौवनप्रतापमया सर्वत्र प्रचारतां प्रकाशतां चाल्पीयसा कालेनैव यास्यति । संस्कृतभाषामाहात्म्यमतीव श्रेष्ठतरं शोभनञ्च वरीवर्ति । यो यो विषयः संस्कृतबद्धोऽवलोक्यते जनैस्तस्मिन् तस्मिन्नभिरुचिः शोभना जायते । अस्या भाषाया प्रबलजागृतदेवत्वात् कियानानन्दः, परञ्च साम्प्रतं व्याधिग्रस्तोऽस्ति, व्याधेरस्या भाषाया दूरीकरणे संस्कृतज्ञानां हस्ते नियतं प्रत्यक्ष एव तु विद्यते प्रयोगः । परञ्च प्रयोगशैथिल्यस्य चिकित्साऽऽदौ विधातव्या तैः, सा चिकित्साऽपि संस्कृतज्ञैः सत्वरमेव करणीया, त्रिप्रकरणेनाऽवनतेर्वृद्धिः कदाऽपि नहि भविता, यादृश्यवनतिरस्संस्कृतस्य नूतनजन्तुभिर्धर्म्मभावमर्य्यादासनातनस्वपरिपाकरहितैः क्रियते, तेषामभिमुख एव याथातथ्येन स्वकर्तव्यपथमवलम्ब्य पूर्वजानाञ्चादेशमुत्तमांगेन हृदये विधायात्युन्नतिः संस्कृतभाषायाः प्रदर्शनीया अस्माभिस्तदा संस्कृतस्याऽवनतिः कीदृशी, एतत्कथनं कस्याऽपि स्वापेऽपि सुदुर्लभा भविष्यतीति ।

## सनातनधर्मसभाया वार्षिकोत्सवः ।

विदितमस्तु तत्र भवतां भवतां यल्लक्ष्मीपुरीय सनातनधर्मसभाया अष्टचत्वारिंशत्तमो वार्षिकोत्सवः कार्तिकशुक्लप्रतिपदमारभ्य चतुर्थीं यावन्महता समारोहेण सुसम्पन्न इति । प्रथमदिवसे प्रातःकाले गणपत्यादिपूजनं हवनकर्म ब्राह्मणभोजनञ्चाभूत् , तदनन्तरं सायं षड्वादनानन्तरं दशवादनं यावद्भगवतो वेदस्य पुरतः संस्कृतान्तेवासिनो महिम्नस्तोत्रं पठन्तो गच्छन्तिस्म । मध्ये नगरकीर्तनं प्रज्ञापयोधेः पण्डितवर्य्यश्रीबच्चूलालसूरिमहोदयस्य, तथा पञ्चनदीय पं० मुनिराजशर्मणः सुमधुरं गायनञ्चाभवत्, साम्प्रतिकगायनानि निशम्य नागरिकजनता परमानन्दसन्दोहनिमग्ना सती निरतिशयमानन्दमनुभवन्त्यासीत् ।

द्वितीयदिवसादारभ्योत्सवपूर्तिं यावत्प्रत्यहं षड्वादनादारभ्य निशीथेऽर्धरात्रिपर्य्यन्तं शास्त्रार्थमहारथिनां श्रीमाधवाचार्य्यशास्त्रिमहोदयानां, रावलपिण्डी सनातनधर्मसभायाः सर्वस्वभूतानां महामहोपदेशक श्री यदुकुलभूषणशास्त्रिमहोदयानां तथा व्याख्यानकेसरिणां श्रीनन्दकिशोरशुक्ल "वाणीभूषण"

महोदयानाञ्च वर्तमानसंघर्षे सनातनधर्म्मणां कर्तव्यविषयकाणि सुबहूनि सुललितललितानि व्याख्यानानि समभवन् । द्वितीयदिवसे चतुर्वादनमारभ्य पञ्चवादनं यावत् स्थानीयोपन्योयाधीशमहोदयस्य साभापत्ये वार्षिकपरीक्षासु समुत्तीर्णेभ्यः संस्कृताङ्गलभाषोभयविधच्छात्रेभ्यः पारितोषिकवितरणमहोत्सवः समजनि । तदनन्तरं रायबहादुर श्रीसंकटाप्रसाद वाजपेयिमहोदयानां भाषणं समागतानां जनानां धन्यवादपूर्वकं जातम् । ततः सभाया मन्त्रिणा श्रीमुरलीधरमिश्रमहोदयेन सभा विसर्जितेतिशम् । प्रेषकः—शम्भूनाथ शास्त्री ।

## छात्र-हितकारिणी सभा ।

[ श्रीमहत्पालेश्वरीय-संस्कृतविद्यालय सहतवार वलिया यू० पी ]

भो भो विद्वज्जनप्रवराः ! साम्प्रतम् कियन्तस्संस्कृताध्येतारः विद्यार्थिनः सन्ति ये खलु द्वादशवर्षपर्यन्तम् विहायाखिलगृहकार्यं देववाणीमुपासन्त इति तु विदितमेव भवताम् । तत्र खलु याः त्रुटयः ता वक्तु' खिद्यते मनः। सुमहान् विषयोऽयम् यदस्माकम् ये पूर्वपुरुषा ऋषीश्वरा वा आसन् ते खलु ब्रह्मचर्यविद्याबलेनैव सर्ववर्णेषु श्रेष्ठतां लब्धाः प्रत्यभूवन्, तेषामेव सन्ततयः स्वपथच्युता भूत्वेदानीम् अधोगतिम्प्राप्नुवन्ति । अपरं च ये केचन पूर्वोक्ताः विद्यार्थिनः छात्रा वा सन्ति ते खलु संस्कृतभाषणकाले किञ्चिदपि सहर्षेण गदितुन्न शक्नुवन्ति । अतो महत्तरो विषादविषयोऽयम् । प्रमोदस्येयम् वाक् यत्त्रुटिमिमाम् अपाचिकीर्षूणाम् वलिया मण्डलान्तर्गत श्री महत्पालेश्वरीय संस्कृतविद्यालयान्तेवासिनाम् समक्षे तथा न्यायरत्नव्याकरणतीर्थाद्युपाधि-विभूषितस्य श्री पं० पारसनाथशास्त्रिणः सभापतित्वे च भाद्रपदशुक्लाष्टम्यां तिथौ (ता० २-९-३८ ई०) छात्रहितकारिणी सभा समजनि । अस्याः सभायाः उद्देशस्त्वेषः यद्येन केनापि प्रकारेण छात्राणां हितो भवेत् तथैव कार्यम् छात्रैरिति । तत्रोपस्थितच्छात्रैः स्वस्वशक्त्यनुसारं भाषणमदायि । अवसाने च उक्तसभापतिमहोदयैरपि छात्रधर्मं ब्रह्मचर्यपथञ्चावलम्ब्य सुबहुशः अभाणि देववाण्यामेव येनोपस्थितच्छात्रहृदि मार्तण्डमयूखा इव जागृतयः याताः । अथावसाने तद्दिने सभापतिमहोदयैः जगज्जननी-सरस्वतीजयकारम्बिधाय सभा विसर्जिता । इयं सभा प्रत्येकप्रतिपदायाम् अष्टम्याञ्च जायेत इति निश्चितः । अथ सा सभा अद्यावधि उन्नयति च येनानुमीयते चास्माभिर्यदियं सभा नातिकालगत एव समुन्नतिं विधास्यति । किम् बहुनेति कर्तव्यत्वे उक्तविद्यालयाधिपतिमहोदयेभ्यः सुबहुशो धन्यवादाः विधीयन्ते—अस्माभिरिति । लेखकः श्रीवैद्यनाथ पाण्डेयविद्यार्थी गायघाट रेवती वलिया ।

—:०:—

# पौराणिक-चरित्रसमालोचनम्।

निबन्धा—पण्डित दीनानाथशर्मा शास्त्री सारस्वतः
[ स॰ ध॰ कालेजोपाध्यक्षः, मुलतानः ]

( क्रमागतम् )

'सोमः प्रथमो विविदे' ऋग्वेदे १०।८५।४०—४१ एतेन मन्त्रेण विवाहात् पूर्वं कन्यायां सोमगन्धर्वोऽग्निदेवानां भोगो मन्यते। परन्तु विवाहात् पूर्व्वं केषाञ्चित् त्रयाणां मनुष्याणां कन्यया सह सम्बन्धोऽत्यन्तं दूषितो मतः; परं देवयोनये स सम्बन्धो दुष्टो न मतः। एवमेव पुराणप्रोक्तदेवयोनि-कतिपयचरित्राणां मनुष्य-दृष्ट्या पापत्वेऽपि देवयोनये न तत् पापमिति साधु सिद्धम्। अन्यदपि दृश्यताम्—येषां वेदमन्त्राणामुपास्या भिन्नभिन्नदेवाः; तैरेव वेदमन्त्रैर्भवन्तः कस्यचित् कन्यां पत्नीं निर्म्माय तया मिथुनीभवन्तोऽपि भवन्तो यदि पापभाजो न मन्यन्ते; तर्हि ये स्वयं देवाः, परमात्मा च; तेभ्योऽन्या स्त्री परकीयैव कथं भवेत्?। भवतां स्त्री परमात्मानं स्वस्वामिनं मनुते; परमात्मा तदीयगुप्ताङ्गेऽपि व्याप्तः, मैथुन-समयेऽपि विद्यमानः; तर्हि परमात्मा कथं भवितुमर्हेत् पापी? भवन्तः परमात्मानं स्वपितरं मन्वते; स एव परमात्मा भवन्मातर्य्यपि विद्यमानः। भवन्तो यदा वीर्य्य-द्वारा स्वमातरि निषिक्ता अभवन्; तदाऽपि स भवतां (सुधारकाणां) पित्रोर्गुप्ते-न्द्रियेऽविद्यत; तदा स परमात्मा पापी भवति नो वा? यदि न; तर्हि तदीयाऽवतारा अपि पुराणेषु न पापभाजो भवन्ति।

अवशिष्टास्सन्ति ऋषितपस्वियोगिनः; तदर्थमस्माभिः प्राङ् मनुस्मृतिश्लोकानु-लिख्य साधितं यत्—ते

> 'यद् दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम्।
> सर्व्वं तत् तपसा साध्यं तपो हि दुरतिक्रमम्' ११।२३८

इति मनुप्रोक्ततपश्शक्त्या सर्व्वविधपापेभ्यो मुच्यन्ते। विषयेऽत्र भगवद्गीताया निम्नश्लोका अपि मननीयाः—

'यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वाऽपि स इमाँल्लोकान् न हन्ति न निबध्यते' १८।१७ 'त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः। कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः' ४।२०। 'निराशीर्यतचित्तात्मा त्यक्त-सर्वपरिग्रहः। शारीरं केवलं कर्म्म कुर्वन् नाप्नोति किल्विषम्' ४।२१ 'ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाऽम्भसा' ५।१०। अतः पुराणस्य किमपि चरित्रं तत्तदलौकिकसामर्थ्यशीलानां कृते न दोषजनकम्।

अन्यदिदमपि अवश्यस्मर्त्तव्यं यत्—पुराणेषूल्लेखमात्रादेव सा वार्त्ताऽनुकर्त्तव्या न भवति। नाऽपि च पुराणेतिहासस्य विषयो लोकव्यवहारस्य व्यवस्थापनमेव। तदीयो विषयस्तु लोकचरित्रमात्रस्य प्रतिपादनमस्ति; न खलु लोकव्यवहारव्यवस्थापनम्। लोकव्यवहारव्यवस्था धर्म्मशास्त्राऽधीना भवति। दृश्यतां न्यायदर्शनम्—

"अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्म्मशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य (वेदस्य) लोकवृत्तम् इतिहासपुराणस्य। लोकव्यवहारव्यवस्थापनं धर्म्मशास्त्रस्य विषयः। तत्रैकेन न सर्वं व्यवस्थाप्यते—इति यथाविषयम् एतानि प्रमाणानीन्द्रियादिवदिति"।

अत्र कीदृक् स्पष्टमभिहितं यद्—लोकव्यवहारव्यवस्थाप्रतिपादनं तु धर्म्मशास्त्रस्य विषय इति। तदेव तु व्यासस्मृतौ—

'श्रुति-स्मृति-पुराणानां विरोधो यत्र दृश्यते।
तत्र श्रौतं प्रमाणन्तु, द्वयोर्द्वैधे स्मृतिर्वरा'॥ १।४

—इत्युक्तम्। अर्थात्—श्रुतिस्मृतिपुराणानां विरोधे श्रुतिरभ्यर्हिता। स्मृति-पुराणयोर्विरोधे स्मृतिरेवाऽभ्यर्हिता। एवमेव 'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद् धर्म्मस्य लक्षणम्' २।१२ एतन्मनुपद्ये सदाचारस्तृतीये पदे स्थापितः। सताम्—आचारः सदाचारः। तर्हि यदि सत्पुरुषाणामप्याचारो वेद-स्मृतिविरुद्धः; तर्हि नाऽऽचरणीयो भवति।

केचिदत्राचक्षते यद्—ननु तथाकर्त्तारः कथं साधवः स्युः?। तत्रेदमुत्तरम्—एकस्मिन् साधौ बहुषु उत्तमगुणेषु सत्सु एकद्व *दोषाणां सत्तायामपि स लोके साधुर्मन्यते। वादिनः स्वयं मन्यन्ते यद्—गान्धिमहोदयो 'महात्मा'। तदीयजीवनचरित्रे ते द्रक्ष्यन्ति यद्—यदा तत्पिता मुमूर्षुरासीत; तदा स स्वस्त्रिया केलिं कुर्वाणोऽवर्त्तत। अथ च तज्जीवने ते द्रक्ष्यन्ति यत्—शिखाऽमुना छेदिताऽऽसीत्। यज्ञोपवीतपरिधानं सोऽयोग्यं मन्यते, पठ्यतां तदीयाऽऽत्मकथा। मुमूर्षुर्गोवत्सश्च 'इन्जैक्शन' द्वारा घातितस्तेन। वैश्येनाऽपि सता तेन स्वपुत्रस्य विवाहो ब्राह्मणपुत्र्या कारितः। ब्राह्मणेभ्योऽपि चाण्डालानां पदं बर्द्धितम्। स्वयं स मलमुत्थापयति। एतावत्सु दोषेष्वपि भवन्तस्तं महात्मानं मन्वते॥ स्वा० दयानन्दो भङ्गापान—'हुक्का' सेवनादि-बहुविधदोषाणां व्यसन्यासीत्। कामवर्द्धकधातून् सिषेवे। एतदादिकदोषराशिष्वपि भवन्तस्तम् 'ऋषि' पदात् पृथङ् न कुर्व्वते; यद्यपि स मुनित्वपदार्हतामपि नाऽऽचकलत्। तदा खलु लोकोत्तरसामर्थ्यशालिनः पौराणिकर्षिमुनयो भवत्सङ्कुचितबुद्ध्यनुसारं दोषयुक्ता अपि कथम् ऋषिमुनियोगित्वेन न व्यपदिश्येरन्?।

* एकद्वेति अत्र समासान्तो डच्टेर्लोपः।

अथ च वादिनामस्मिन् विषये स्वसङ्कुचितबुद्धिस्तथा व्याकरणाऽज्ञानमपि चाऽत्र अपराध्यति। यस्यां कथायां रमणं-सङ्गः-वीर्य्याधानं-लिङ्गं-भगः-भोगः-रतिरित्यादयश्शब्दा आयान्ति; तत्र वादिनां कुत्सिताऽर्थस्य भानं भवति। परन्तु एषां कुत्सिताऽर्थकरणं स्वहृदयाऽपवित्रतापरिचायनमस्ति। वादिन एषां कुत्सिताऽर्थमेव पश्यन्ति न वास्तविकमर्थम्। तथा चेमे शब्दा मीमांस्यन्ताम्।

रमणम्—यद्यस्य मैथुनार्थः स्यात्; तर्हि पुनः स्वा० दयानन्दनिर्म्मिते 'आर्य्याभिविनये' ४९ पृष्ठे 'सोम! रारन्धि नो हृदि' ऋ० १।९१।१३ इति मन्त्रस्याऽर्थाऽवसरे परमात्मा प्रार्थितो यद्—'आप हमारे हृदय में यथावत रमण कीजिये'। एतत्प्रार्थका आर्य्यसामाजिकस्त्रीपुरुषाः स्युः। तर्हि किं तत्र भवन्तो रमणस्य मैथुनाऽर्थं गृह्णीयुः?। अयि मुग्धाः! ×रमुँ क्रीडायां भवति धातुर्नतु मैथुने।

सङ्गः—'तथैवाऽस्माभिरपि...विद्वत्सङ्ग विद्योन्नतिः...सदैव कार्य्या' यजुः १।२१ इति स्वा० दयानन्दभाष्ये। 'सदा तुम करते रहो सत्पुरुषोंका सङ्ग' किमेतदादौ सङ्गस्य मैथुनार्थं कुर्य्युर्भवन्तः?।

## समागमः—

[अत्र सत्यस्यापि चाप्रियस्य प्रकाशनं न शास्त्रसम्मतमिति मत्वा लेखकमहाशयेन लिखितः 'समागम' शब्दार्थप्रकाशको अल्पीयानंशो न प्रकाशितः, स० सम्पादकः]

लिङ्गम्—स्वा० दयानन्देन सत्यार्थप्रकाशस्य तृतीयसमुल्लासे वैशेषिकस्य सूत्राण्युद्धृत्य तेषामर्था इत्थं कृताः—'निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम्' २।१।२० जिसमें प्रवेश और निकलना होता है वह आकाशका लिङ्ग है। 'अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि' वै० २।२।६ जिसमें अपर पर एकवार विलम्ब शीघ्र इत्यादि प्रयोग होते हैं—उसको काल कहते हैं, किमत्रापि 'काललिङ्ग' शब्दं दृष्ट्वाऽश्लीलार्थं कुर्य्युर्वादिनः। 'गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च' १।३।१५ अत्राऽपि वेदान्तदर्शनसूत्रे किं तदेव लिङ्गं मन्येरन्?। 'परमात्मा की रचनाविशेष लिङ्ग देख के परमात्मा का प्रत्यक्ष होता है' सत्यार्थप्रकाश द्वादशसमुल्लासे २६६ पृष्ठे, अत्रापि परमात्मनस्तदेव लिङ्गं द्रक्ष्यन्ति यत्—शिवलिङ्गत्वेन हास्यास्पदं कुर्वन्ति वादिनः?।

वीर्य्याधानम्—'वीर्य्यमसि वीर्य्यं मयि धेहि' यजुः १९।९ तर्हि किमत्रापि परमात्मद्वारा तदेव 'वीर्याधानं' कारयिष्यन्ति स्वस्मिन् वादिनस्तत्स्त्रियश्च, यत् पुराणेषु शङ्कन्ते?।

---

× रमुँ। अत्र अचि अनुनासिकस्तस्य इत्संज्ञाप्रदर्शनार्थः, अधस्तनी रेखाऽनुदात्तस्य। तेनाऽयं धातुरनुदात्तेत्। अनुदात्तेद् धातुरात्मनेपदी भवति।

भगः—'प्रातर्जितं भगमुग्रं हवामहे' अथर्व० ३।१६।२ अत्रापि तस्यैव जयनक्रतुरुग्रभगस्य प्रातराह्वानं विधास्यन्ति वादिनो यं पुराणेषु मंस्यन्ते ?।

योनिः—'तस्य योनिं परिपश्यन्ति धीराः' यजुः ३१।१९। अत्रापि परमात्मनस्तामेव योनिं मंस्यन्ते वादिनो यां पुराणेषु मन्वते।

भोगः—संस्कारविधेः १७ पृष्ठे स्वा० दयानन्दः स्वानुयायिनो 'मोहनभोगम्' उपयोक्तुमादिशति; तर्हि किं ते 'मोहनभोगं' तमेव ग्रहीष्यन्ति, यं पुराणेषु गृह्णन्ति। 'दुःख विनाश करनेवाले छेरी आदि पशु से, वाणी के लिये मेढ़ा से, परम ऐश्वर्य के लिये बैल से भोग करें' यजुः २१।६० किमत्र दयानन्दकृतयजुर्भाष्ये अजया, मेषेण, अनडुहा सहाऽपि च तमेव भोगं कुर्युर्वादिनो यं पुराणेषु मन्यन्ते।

रतिः—'आत्मारामा विहितरतयो निर्विकल्पे समाधौ' इति वेणीसंहारश्लोके योगिज्ञेय श्रीकृष्णस्य वर्णनम्। तर्हि किमत्र 'रति' शब्दस्याऽर्थं तमेव ग्रहीष्यन्ति, यं पुराणेषु गृह्णन्ति वादिनः ?। यदि नैवम्; तर्हि मंस्यते यत्—पुराणानां भवन्तो द्वेषिणः। तदैव तत्राऽश्लीलार्थं गृह्णन्ति। स्वेनैव च स्वामिना लिखितेषु तेष्वेव शब्देष्वश्लीलार्थं न मन्यन्ते। इति भवतां सर्वथा अन्यायः, मूर्खजनतायाश्च स्वाऽसत्यप्रभावारोपणञ्च।

अतो हे वादिनः! भवतामुचितमेतद् यद्—भवन्त ऽ पुरोभागितारूपोपनेत्रमवतार्य्य पुराणानां स्वाध्यायं कुर्वन्तु। तदा भवन्तो यानि अधुना कुचरित्राणि मन्वते, तानि पुनर्लोकोत्तरशक्तिशालिपुरुषाणां कृते दोषरूपाणि न भासिष्यन्ते। यदा भवन्तः स्वमहापुरुषं गान्धिं तत्कृतगोवत्सहननेनापि दोषिणं न मन्यन्ते। यदा च स्वमहानेतारं दयानन्दं सनातनधर्म्मिण ऽ प्रति अपशब्दादिप्रदानेऽपि 'तमाखू प्रभृतिव्यसनैश्चापि कुत्सितं न मन्यन्ते, तदीयदोषांश्च जानन्तोऽपि तं परमहंसपरिव्राजकाचार्यं मन्वते। एवं यदा भवन्त एतेषां साधारणपुरुषाणामपि दोषवत्त्वं न मन्यन्ते; तदाऽलौकिकशक्तिशालिनामृषिमुनीनां चरित्रेष्वेव दोषारोपं कर्त्तुं कथं समर्था भवन्तः ?। उत्तिष्ठत यूयम्, स्वाऽभद्रनिद्रामुत्पाटयत, सावधाना भूत्वा पुराणानां स्वाध्यायं कुरुत। तर्हि भवन्तः स्वसर्वविधप्रश्नानामुत्तराणि स्वयं प्राप्नुयुः। भेदस्य भेदं कुरुत यूयम्। यान्येव पुराणानि भवन्त ऽ कलङ्कयन्ति; तैरेव स्वसिद्धान्तान् समये २ तदीय प्रकरणमुक्तपद्यानि निशमय्य मूर्खजनतायाः समक्षं स्वपक्षं साधयन्तो भवन्ति भवन्तः। तर्हि यदि पुराणानि दुष्टानि असत्यानि च; तर्हि भवत्सिद्धान्ता अपि मिथ्या तथा दुष्टा ऽ कथं न मन्येरन् ?।

यदि भवद्भिरियं स्वदोषैकदृक्ता न त्यज्येत; तर्ह्यवधीयताम्—तदेवोपनेत्रमारोपयद्भिर्भवद्भिर्जातु स्वदयानन्दकृतवेदभाष्यं तथा तज्जीवनचरित्रं तत्पुस्तकानि चाऽश्लीलानि असत्यानि कलङ्कितानि च द्रक्ष्येरन्। अधुनाऽप्यवधत्त यूयम्। स्वकीयस्यैव प्रत्नेतिहासस्य समूलोन्मूलनं मा कार्ष्ट। 'सर्वारम्भा हि दोषेण धूमेनाऽग्निरिवावृताः'

गी० १८।४८ 'दृष्टो धर्म्मव्यतिक्रमः साहसञ्च महताम्, नतु दृष्टोऽर्थो वरो दौर्बल्यात्' गौतमस्मृति० १।२ 'कृतानि यानि कर्म्माणि ऋषिभिश्च पुरातनैः। न चरेत् तानि धर्म्मात्मा श्रुत्वा वापि न कुत्सयेत्' (महाभारते)। एतदादिकं स्मरन्तः 'यानि अनवद्यानि कर्म्माणि तानि त्वयोपास्यानि नो इतराणि' ११।२ इति तैत्तिरीयोपनिषत्पाठं स्वदृष्टिकोणे स्थापयन्तु भवन्तः। तदैव पुराणार्णवे मथ्यमाने भवन्तः—चन्द्रमसं लक्ष्मीममृतं मुक्तादिकञ्च प्राप्नुयुः। अन्यथा भवन्त ऽ पुराणसागराद् हालाहलं विषं मद्यं शुक्तिप्रभृतिञ्च प्राप्नुयुः। पुनश्च स्वपूर्वजानामितिहासोऽपि भवद्भिर्न कुतश्चित् प्राप्येत। स्मर्त्तव्यं—महापुरुषस्खलनानां प्रकारान्तरेण समर्थनमेव श्रेष्ठं भवति। तेषां विविधाभिर्विधाभिरपमननं स्वकीयाऽपमननम्। अतोऽवधत्त यूयम्। इममेव सत्परामर्शं वयं भवद्भ्यो * ददतो विश्रान्तिमङ्गीकुर्म्महे पुनर्भवत्सेवायै। शम्।

## जिज्ञासासमीक्षाऽऽलोचनम्।

ले० 'तटस्थः'

अस्माभिः 'सूर्योदय'स्य दशमवर्षीये ११-१२ संयुक्ताङ्के 'जिज्ञासु' महाशयस्य 'केचित् प्रश्नाः' इति लेखो दृष्टः। ततस्तदीये १२ वर्षीये ४-५-६-७ अङ्के तदुत्तरस्वरूपे 'प्रश्नोत्तरणम्' इति श्रीकेदारनाथत्रिपाठिमहाशयस्याऽपि लेखो दृष्टः। ततः 'सूर्योदयस्य' १३ वर्षीये १-२-३-४-५ अङ्के श्रीजिज्ञासुमहाशयस्य पूर्वोक्तलेखकलेखसमालोचनापूर्वकः 'उत्तरे जिज्ञासा' इति लेखोऽपि दृष्टः। तदुत्तरं १३ वर्षीय ६-७-८-९ अङ्के व्याकरणशास्त्रिणः श्रीकेदारनाथत्रिपाठि महाशयस्य तदुत्तरे 'जिज्ञासासमीक्षा'ऽपि दृष्टा।

तत्र त्रिपाठिमहाशयलेखे—"साधारणेनाऽपि संस्कृतज्ञेन ज्ञातुं शक्यं यत्—प्रश्नोत्तरणे समयस्य दीर्घता न सम्पादिता। विदुषाऽपि तत्रभवता जिज्ञासुना लिखितं—त्रयोदशवर्षीय १-२-३-४-५ सं० कलेवरे—'श्रीकेदारनाथत्रिपाठिमहोदयेन दातुं द्वादशवर्षीय सूर्योदयस्येत्यादि' अहो बुद्धेर्विकासः, प्रज्ञाया विलासः। लेखस्य प्रकाशने दीर्घता समयस्य सम्पादिता।"—अत्र 'अहो बुद्धेर्विकासः, प्रज्ञाया विलासः' इति त्रिपाठिमहाशयस्य शब्दान् दृष्ट्वाऽहं व्यस्मेषि। त्रिपाठिमहोदयस्य इमे शब्दाः सन्तप्तहृदयस्योच्छ्वासाः प्रतीयन्ते। न ज्ञायते यद् जिज्ञासुकृतस्य कस्य प्रश्नस्योत्तरमिदम्। अथवा कदाचिदेतदुच्छ्वासस्येदमेव कारणं भवेद् यत्—सूर्यो-

* ददतः। अभ्यस्तत्वान्नुमोऽभावः।

दयस्य १२।४–५–६–७ अङ्के 'प्रश्नोत्तरणम्' इति स्वलेखे 'आवश्यकी' शब्दे 'कोपधादण्' इति स्वप्रवर्त्तितस्य समाधेः १३।१–२–३–४–५ संख्यायां 'जिज्ञासु' कर्तृकं खण्डनं 'त्रिपाठि' महोदयेन दृष्टं स्यात्, तेन च रोषावेश उदितः स्यात्। अस्तु। यत्किमपि भवतु, उत्तरे धैर्य्यधारणमावश्यकमेव भवति, न खलु भवति क्षोभस्यावश्यकता।

त्रिपाठिमहाशयेन किल १२।४–५–६–७ संख्यायां तु 'आवश्यकी' इत्यस्यैव साधुत्वं 'कोपधाद् अण्' इत्यनेन द्योतितम्। परं जिज्ञासुकृत तत्—समालोचने तत्पक्षं सर्वथा मुक्त्वा १३।६–७–८–९ संख्यायां प्रकारान्तरेण 'आवश्यकी' 'आवशियका' इत्युभयस्य साधुत्वं मतम्। एकवर्षे इयदन्तरं जातम्। अतः प्रथमे उत्तरे तदीयाऽधीरता सिध्यति। अस्तु। एतत्संख्यास्थं तदीयमुत्तरमस्मदीयचेतोऽपि तोषयति; यतोऽत्र तत्कृता केनचित्सह सम्मन्त्र्य इतस्ततस्त्या गवेषणा दृश्यते।

परं द्वितीयप्रश्ने जिज्ञासुमहाशयप्रवर्त्तितस्य आशयस्य निरसनसमये 'अध्यै अध्यैनांविधानस्य अदृष्टार्थता' इति 'गोलाभिजनत्रिपाठिमहाशयस्य तूत्तरं 'गोलमोलायित'मेव। अतः पुनर्जिज्ञासोराशयं विविच्य 'त्रिपाठि' महाशयेन सगाम्भीर्य्यमुत्तरणीयमिति निवेद्य विरमति 'तटस्थो'ऽयं जनः। इति।

---

## श्रीभास्कराष्टकम्।

रचयिता—पण्डित रामानन्दशर्मत्रिपाठि महोदयः काशी।

विमलमणिमिव यमियमजनि सुरसदनमधि[1]
सकलसुरजनन्यमलभासं,
हरति घनतिमिरमपनयति हिमनिकरमपि
हरितहयरथरुचिरचक्रकाशम्।
गगनतलनटकमथ निखिलजनघटकमपि
कनकमयकटककरमसुरनाशं,
दहरपथकुहरगतममरवरनमितमथ तरणि—
मण्डलमवतु श्रुतिविलासम्॥ १॥

---

१ अधेः—"अधिपरी अनर्थकौ"—वित्यनेन कर्मप्रवचनीयसंज्ञायां "कर्मप्रवचनीययुक्ते द्वितीये"-ति जलमधि इत्यत्र द्वितीया, जलमधि—इतिरूपश्च भवति। नाव्ययीभावोऽस्ति। एवमन्यत्रापि ज्ञेयमितिदिक्।

यमिह भृशमुषसि प्रणमति च पशुपतिरुरसि
दिवसपरिणति विधिषु नाकपाली,
ज्वलन-शशिमहसि खलु किमपि परिहरति भा
मखिलजनसुजनजनचित्तशाली।
मुकुरमिव जगति परिणमति वियदवधि ननु
भ्रमति किल वमति तप उष्णजाली,
उदयगिरिशिखरमधि सततमुदयति सपदि
हरतु मम दुरितमयमंशुमाली ॥ २ ॥

प्रथितगुणगहनमसदसुरकुलदहनमथ प्रचुर-
रुचिवहनमिह भुवननीडे,
अचरचरशरणमतितिमिरचयहरणपरमतनु-
रतरतयुवतिजनितव्रीडे।
भ्रमरसुखकरणमतिविरहविस्तरणमतिक्षुभित-
रथचरणयुगनिहतक्रीडे,
कमलवनसरणिमृदुमुकुल-कुलदरणिमथ
किरणभृतधरणिमिहतरणिमीडे ॥ ३ ॥

असुरखलमनुजदितिदनुजकुलतनुजपङ्क-
रजनिचरसभयजगदभयकर्त्री,
हृदयदलतिमिरभरदलनविधिललनगति-
रचरचरशरणघनभुवनभर्त्री।
परुषकलि-कलुषचयसरुषमतिशयपुरुष-
करणकुलभरणनिस्तरणपत्री,
अमलमृदुकमलदलमुकुलकुलविमलतर-
तरणिरुचिरवतु भवभीतिहर्त्री ॥ ४ ॥

सकलसुखवहनमतिगहनहिमदहनरुचि-
शिशिरगुणसहनमिह भुवनपालं,
तिमिरभरदलनमपि कमलरुचिकरणमथ
भुवनतलभरणकरसुप्रभालम्।

कलुषकुलदरणमपि सुकृतविस्तरणमिह
सभयभयहरणमिदमतिविशालं,
अचरचरशरणकलकलितरथचरणमिद-
मवतु रविनिगममय मंशुजालम् ॥ ५ ॥

कमलदलवदनशुभहसितशुभरदनवरसुभग-
करचरणयुगसुभगजानो !,
विधृतरथचरण इह सकलजनशरणगृह-
वसति तव हृदयमधि हरिरिहाणो ! ।
रुचिररुचिरुचिरकरमखिलमपि विकिर मयि
सुकृतमुरु वितर रिपुकुलकृशानो !,
कलय सुखमधिकमघहरण ! कुरु भविक
मथ दलय गदविपदमतिचण्डभानो ! ॥ ६ ॥

निगमविधिकलन जहि दनुजमरिदलनपटु-
ज्वलन इव ललनघनतमसि दृप्ते,
त्वमिव स तु चलति दिवि विहग इव चलति किल
निखिलमपि फलति तव तपसि तप्ते ।
किमिह नहि सुलभमथ किरणभरसुभग ! तव
वदनमधि निगमनिधिनाम्नि जपिते,
अरुणकरनिकर ! हर दुरितमयशिखरमथ-
सुकृतमपि वितर मम सप्तसप्ते ! ॥ ७ ॥

वाणद्वन्द्वमुनीन्दुभिः परिमिते श्रीवैक्रमे वत्सरे ( १७५५ )
भाद्रे भास्कररिणार्कनिर्मिततिथौ पक्षे वलक्षे शुभे ।
इत्यादित्यगुणाष्टकस्तववरो भक्त्युत्सवोल्लासितो
"रामानन्द" बुधैर्भवेत्स सततं श्रीभास्करप्रीतये ॥ ८ ॥

इति श्रीमत्त्रिपाठिरामानन्दशर्म-विनिर्मितं श्रीभास्कराष्टकमथवा
सप्तसप्तिसप्तकं समाप्तम् ।



# जनेषु निवेदनपत्रम्

इदानीं मदीये सुदेशे न किञ्चिन्न विद्या न वित्तं न चित्तञ्च धर्मे।
न वेदेषु बुद्धिर्न कार्येषु शक्ति र्मदीये सुदेशे तमश्चातिभूतम्॥ १॥
स्वदेशस्य चेमां दशां वीक्ष्य हीनां दयालुश्च योगीश्वरो विश्वनाथः।
जनानां च हृत्सु प्रकाशाय शीघ्रं चकार प्रसादेन वै पाठशालाम्॥ २॥
महाराजचित्ताद् दयायाः प्रवाहः सदा छात्रचित्तेषु दीप्तिं तनोति।
क्षुधार्ता वयं दीनबालाः पठामस्त्वयं दीनबन्धुर्हि चास्मान् बिभर्ति॥ ३॥
विधाता च माता पिता नश्च भूत्वा तथा चापि शान्तिर्न चित्ते करोति।
कथं मातृभूमौ सुपुत्रा भवन्तीति चिन्ता सुचित्तेऽस्य भूता च वह्नी॥ ४॥
न वित्तेषु चित्तं न भोगेषु काङ्क्षा पुरा या दशा तामयञ्चेद्दुग्धि।
स्ववित्तानि दत्त्वा सदा देववाण्यै स्वकीयं शरीरं च वृद्ध्यै युनक्ति॥ ५॥
यथा भारते मानवानाञ्च जाते कठोरान्धकारा गमिष्यन्ति नूनम्।
जना वित्तवन्तो भवन्तोऽपि चैवं स्ववाण्या हि वृद्ध्यै च शीघ्रं भवेयुः॥ ६॥

कमलाकरपाण्डेय विद्यार्थिनः
हथियाराम मठस्थस्य



# धर्म्मविलापः।

(लेखकः—महेन्द्रमणि त्रिपाठी व्याकरण शास्त्री गोरक्षपुर-
मण्डलान्तर्गत डुमरी ग्राम निवासी)

किं भोः, किं कथयसि कथमहमित्थं विमनायमानो भवामीति? ननु जानासि मे शोच्यां दशाम्? कियान् मे दौर्गत्यभारः समागतोऽस्मिन् शिरसि, मन्ये न त्वं भद्र कणशोऽपि वेत्सि—दग्धविधे! सर्गविधौ को नाम मदन्य इत्थमधन्यः येन निखिलः क्लेशः प्रसाद इव मह्यमेव वितीर्णः? अपक्रान्तं मम सुखेन, पलायितं च शान्त्या। अनुक्षणं यतस्ततः येन तेन यथा तथा समाकृष्यमाणस्य नास्ति मम दग्धभागधेयस्य लेशोऽपि विश्रामस्य। न जानामि कमिव महान्तमपराधमवलोक्य लोकपितामहेनाहं मूक इवोत्पादितः। सहस्रशस्ताड्यमानोऽप्यहं न किञ्चित् स्वयं प्रकाशयितुं शक्नोमि। स्वैरं खलु मानवाः प्रसारयन्त्यस्मिन् मयि तपस्विनि प्रभावमात्मीयम्। सर्वस्यैव नास्ति मे स्वल्पः खेदः। आत्मानं रक्षितुं नास्ति मे काऽपि शक्तिः। यद्यपि मूकत्वं विधात्रा विधीयत एव कोऽप्युपायः रक्षणस्य। मम तु तद्धातैव नास्ति। यद्यपि मूकत्वं कृतं मे विधात्रा, तथाऽपि बलमपि किञ्चिद्दातुमुचितमासीदिति, स खलु नाम्ना प्रकामं कथयति यत्प्रदत्तं ते बहुलं बलमिति। अहन्तु निपुणमपि मृगयमाणो न

किमप्यवलोकयामि। यदि बलमभविष्यत् किन्तर्हि स्वच्छन्दानुसारेण सर्वोऽपि जनो मां नर्त्तयितुं प्राभविष्यत्? यो यथैवेच्छति स खलु तथैव मां नर्त्तयति। अहमप्यवशः तथैव नृत्यामि। का गतिः? सर्वेषामेव चित्तं मयानुरञ्जनीयमिति सर्व एव मम प्रबुभूषन्ति। कः सेव्यः को वा त्याज्यः। तदित्थं सर्वानेव उदीक्षमाणोऽहं पराक्रिय इव श्रेयोभिरपि प्राणैः। एकैको विद्वानाविर्भवति कषति चात्मनो वैदुष्यकनक निकषपाषाणायमाने मय्येव। एको महापुरुषः उपेत्यानुनयति—भद्र! त्वमित्थं भव। किमहमशरणः कुर्याम्? कथयामि, अस्तु भो भद्रमुख! तथैवास्तु। पुनरपरः कश्चिद् रोषरूषितनयनो भ्रूभङ्गमाचरन्नुच्चैस्तर्जयति। अरे कस्त्वां मूढ इत्थं करोति, एवं खलैवं खल्वेधि, इति। भीतभीतोऽहं सुशीलः शिशुरिव तथैव भवामि—अहं हि तेषां पैतृकः क्रीतदास इव। न मे तेषां दास्याद्स्ति कदाचिन्मुक्तिः। अवश्यं मया तेषां छन्देनैव वर्त्तितव्यमिति।

किं मे करणीयम्। को नामात्र प्रतीकारः। इमे तावद् सुष्ठु खलु मां गृहीत्वा क्रीडन्ति। सुखमेषां प्रयाति दिवसः। यस्य पुनर्मरणं नासौ हतको भिन्नः कोऽपि मत्तः। हा कष्टं मर्तुमपि न लभ्यते, येनाग्रे किञ्चिद् सुखप्रत्याशा स्यात्। कालनिलयं गतमपि मामेतेऽसमर्था अपि पुनः पुनः समाकर्षन्ति।

नाधिकास्ते यैर्दृष्टं मे स्वरूपम्। नामी मे स्वरूपे विवदन्ते। प्राप्नोमीवाहमेषां समीपे काञ्चिच्छान्तिम्। परन्तु यैर्भूयोभिरेवाहं स्वप्नेऽपि भ्रमेऽपि वा नावलोकितः इम एवाति पण्डिता 'अहमेवं नैवामिति बहुधा कोलाहलेन न केवलं मामेव पीडयन्ति अपि तु लोकस्य परां क्षतिमुत्पादयन्ति। किमहं कुर्याम्? किं वा तेऽपि कुर्युः। नाहं घट इव पट इव वा मूर्त्यो येषां केषामपि लोचनगोचरतां गन्तुं शक्नोमि, यद्यप्येषा प्रतिदिनमनुभूयते दुर्विषहार यन्त्रणा। नैतावता युक्तस्तेषामत्याचारो मयि। ते प्रगल्भमाना ईश्वरपदमधिष्ठिताः सन्ति। एवमहं नैवमिति' कस्त्वमन्धः सम्यङ् निश्चेतुम्। अपि त्वमायुष्मानुपदिष्टक ईश्वरेण यदय खल्वहं धर्मो नाम, नायमिति ज्ञातुम सम्भवसि त्वं विज्ञो वा प्राज्ञो वा न तु सर्वज्ञः। विचित्रवासनापर्यावृत्तानां विविधशिक्षाभ्याससहकृतानां लोकानां तवैवोक्तिः श्रेयसी न त्वन्यस्य। एवं त्वमेव मां यथा निर्दिशेः तथैवाहं भवेयमिति, नत्वपरो यथा निर्दिशेदिति। किन्तु भो चतुरचूडामणे कोऽत्र विनिगमयेत्।

अथ सर्वान् वादिनः शक्नोषि विजेतुम्, शक्नोषि च स्वमतानुसारेण मां स्वव्यवस्थापयितुम्। अर्हसि प्रशंसामशेषाणाम्। मोचयसि च महतः कृच्छ्रात् एकरूप एवाहं चिरं जीवितुं प्रभवेयमिति। परन्तु कुतो ममेयद् भाग्यम् अप्रतिष्ठं तर्कं सुप्रतिष्ठं कर्तुं कुतस्ते शक्तिः, पश्यामि मम काऽपि व्यवस्था जायतां मैवं वा, यूयन्तु स्वाग्रहसाफल्येन कीर्त्यधिगमेन वा सुखं स्वपिथ च पल्यङ्के। यः पुनस्तस्य परमफलभागी चिरं मया तेन मरणदुःखमनुभवनीयमिति।

श्रीमतां महामहोपाध्यायमान्यवर पं० गोपीनाथकविराजमहोदयानां पूज्यपादारविन्दयोः

## *श्रद्धाञ्जलिः ।

ब्रह्मविद्यैकवदना शब्दन्यायकराञ्चिता ।
साहित्यसुहिता पायात् धर्मचित्ता सरस्वती ॥ १ ॥

श्रीमन्तः पूज्यपादा महामहोपाध्याय श्रीगोपीनाथ कविराज महोदयाः !

श्रीमत्काशिकराजकीयसुरगीर्विद्यालयाध्यक्षता
मुत्सृज्याद्य सरस्वतीभवनतो यातुं मनः कुर्वताम् ।
मान्यानां भवतां पदाम्बुजयुगे श्रद्धाञ्जलिं वाचिकं
सम्भूयार्पयितुं प्रणामसहितं वाञ्छाम आराद्वयम् ॥ २ ॥

मान्यवराः !

सरस्वतीभवनसम्बन्धेन भवतां चिरसम्बन्धिनो वयं भवद्भिः सस्नेहमुपलालिताः, सततं दार्शनिकरहस्यप्रकाशनैरुपदिष्टाः, साङ्ख्ययोगप्रयोगप्रसङ्गोपोद्घातैश्चमत्कृतिं गमिता भवतां सरस्वतीभवनपुस्तकालयाध्यक्षताकालिकान् सौवर्णदिवसान् स्मारं स्मारमद्य नितान्तं दूयामहे ।

अथ सौभाग्यात् प्रधानाध्यक्षपदाधिरूढानां भवतामेव प्रयत्नैरनुजीविनां समुत्तेजनैश्च सरस्वतीभवने पञ्चाशत्सहस्राधिकसंख्यकप्राचीनलिखितपुस्तकसंग्रहेण सरस्वतीभवनमद्यत्वे प्राथम्यमुपगच्छति पुस्तकालयेषु ।

काशिकराजकीयसंस्कृतपाठशालीयपरीक्षासु परीक्ष्यसंख्या प्रत्यब्दं तथा ववृधे, यथा तत्प्रबन्धसम्पादनाय पृथगेकस्य निपुणस्य परीक्षाध्यक्षस्य नियोजनमावश्यकं बभूव ।

पुराणेतिहासाध्यापकपदं द्वैतवेदान्ताध्यापकपदं च भवतामेव गुणगृह्यतां निष्पक्षपातितां च तारमुद्घोषयति ।

अमरभारतीत्यभिधाना संस्कृतमासिकपत्रिका च भवतां सञ्चालकत्वे सम्यक् चलन्ती संस्कृतपत्रिकागगने मध्यन्दिनदिनकरमूर्तिरिव विद्योतते ।

इत्थं युक्तप्रान्तीयशिक्षाविभागपरमोच्चैः पदमलङ्कुर्वद्भिरपि सहजस्निग्धमुग्धहृदयैर्भवद्भिरस्मासु यावान् वात्सल्यभूमा प्रदर्शितः, यच्च नैसर्गिकममानित्वमाविष्कृतम्, उत्तममध्यमावरेष्वनुगतेषु या समदृष्टिः प्रकटीकृता, अपराद्धेष्वपि या स्वाभाविकी दयालुता क्षमाशीलता च परिशीलिता, यच्च निष्पक्षपातित्वं पुरस्कृतम्, तैरेव भवतां लोकोत्तरैर्गुणैर्जगतीतलदुर्लभेन पाण्डित्यगरिम्णा च बाढमाकृष्टाः सरस्वतीभवनवासिनो

* अयं प्रकाशनार्हः इति मत्वा अधुनापि प्रकाश्यते, सम्प्रति 'अमरभारती' न प्रचलतीति सखेदं निवेद्यते (स० सम्पादकः ।)

भवतामनुगता अद्य भवद्वियोगावसरमाकलय्य खिन्नमानसा गद्गदस्वराः साश्रुनयना-स्तूष्णीमेव भवतां पूज्यपादारविन्दयोः सविनयं वयमात्मीयं श्रद्धाञ्जलिमर्पयामहे।

सम्प्रत्यस्वस्थशरीरैर्भवद्भिरारोग्यसम्पादनपूर्वकं यदर्थमीदृशोऽत्युत्तमो लौकिको-ऽभ्युदयाध्वा तृणमिव परित्यक्तः, तद्भवतां योगाभ्यासौपयिकं कर्म योगेश्वरस्य श्रीपरमात्मनः प्रसादात्सद्यः सिद्धिं समासादयतु।

आरोग्यसम्पादनपूर्वकं लब्धयोगैश्वर्याश्च नास्मान् विस्मरन्तु, शुभाशीर्भिश्चाऽभि-वर्द्धयन्तु भवन्त इति सविनयं प्रार्थयामहे।

सर्वदा सर्वथा भवतामत्यन्तं कृतज्ञा वयं सर्वे सपरिवाराणां भवतां सर्वाङ्गीणं भविकं भगवन्तं श्रीविश्वनाथमभ्यर्थयामहे।

यः श्रीमान् वसुधासुधाशनगुरुर्विद्योदधेः पारगः
सौजन्यप्रणयानुजीविकरुणाशान्तिक्षमालङ्कृतः।
सर्वेषां प्रियदर्शनो जितरिपुर्दान्तः सदा सस्मितो
गोपीनाथपदाङ्कितं मुनिवरं वन्दामहे तं वयम्॥ ३॥
एषणात्रयनिर्मुक्तः शान्तिभूमेव मूर्तिमान्।
कविराजो विजयते श्रीगोपीनाथपण्डितः॥ ४॥

काशिकराजकीयसंस्कृतपुस्तकालयः
सरस्वतीभवनम्
गवर्नमेंट संस्कृत कॉलेज, बनारस

श्रीमतां कृपाकाङ्क्षिणः
सरस्वतीभवनवासिनः।

## साहसस्योदाहरणान्तरम्।

[ लेखकः—'अन्तर्यामी' ]

पाठका जानन्त्येव यद्—अस्माभिः परापहृतनिबन्धानां समये समये रहस्यो-द्घाटनं क्रियते। प्रागियं सरणिः म० म० प० गिरिधरशर्म्मभिः प्रचालिता। तदीयलेखः 'सूर्योदये' १।२३ अङ्के प्रकाशितः। ततो भट्ट श्रीमथुरानाथशास्त्रिमहोदयेन 'संस्कृतरत्नाकर' १।८ ईदृशाऽपहारः सूचितः। ततोऽस्माभिः 'सूर्योदये' १०।९ अङ्के ईदृशी सूचना दत्ता। ततोऽध्ययोध्यं प्रकाश्यमाने 'संस्कृत' पत्रे ६।३९ 'साहसस्य पराकाष्ठा' निदर्शिता।

अधुना तदीयमुदाहरणान्तरं दर्श्यते। प्राक्तने साहसोदाहरणे 'सूर्योदय'स्थलेखा-ऽपहारो 'रत्नाकरे' जात एकलेखकद्वारा। ततो द्वितीये उदाहरणे 'सुप्रभात'स्थैक-लेखाऽपहारः 'सुप्रभाते' एव जातोऽन्यलेखकद्वारा। ततोऽधुना तृतीयोदाहरणे

'सूर्योदय'स्थैकलेखस्य 'सुप्रभाते' अन्यलेखकद्वाराऽपहारो जातः। तदीयदिग्दर्शनं कारयामि।—

'सूर्योदय'स्य नवमवर्षीयद्वितीयसंख्यायाः ६२ तमे पृष्ठे श्रावणस्य पूर्णिमायां सं० १९९० 'उपालम्भः' इति शीर्षकमादाय 'श्रीगङ्गाविष्णुपाण्डेयविद्याभूषणस्य' 'मध्येमार्गं कर्षति वस्त्रम्...अयि मातस्तव बालः' इत्यादिना ४ पद्यसङ्ख्याका गीतिर्दृश्यते।

अधुना सैव गीतिकविता 'यशोदां प्रति गोपीनां प्रेमोपालम्भनम्' इति शीर्षकेण श्रीरामस्वरूपरामस्नेहि'नाम्ना 'सुप्रभात'स्य द्वादशवर्षीयषष्ठसंख्यायां २० तमे पृष्ठे भाद्रपद १९९५ मासे मुद्रिता।

अत्र किमपि परिवर्त्तनं न दृश्यते। केवलं चतुर्थगीत्यास्तृतीये पादे पाण्डेय-महाशयलेखे 'कोऽपि इदन्नो' इति पाठः। अत्र च रामस्वरूपलेखे 'कोऽपीदं नो' इति सन्धिसुधारः कृतः।

प्राक्तनलेखकोऽध्यापकः। अयं च वर्त्तमानो लेखकस्तु विद्यार्थी; इति स्पष्टं विद्यार्थिकर्त्तृका स्तेनता। यत्र समानकर्तृकलेखेऽपि पुनः प्रकाशिते 'सुप्रभात'-सम्पादकसदृशानां कोपपात्राणि जायन्ते लेखकाः, तेभ्यश्च भविष्यल्लेखाऽप्रकाशन-धर्षणा दीयते; तर्ह्यन्यदीयलेखस्य अपहरणे तु तादृशानां सम्पादकानां कोपः कुतो न स्यात्? कुतश्च न स्यात् कोपः प्राक्तनलेखकानाम्। तेनेदृशदुष्प्रकृतिं मुञ्चन्तु लेखकाः। यदि तेषां तथात्वं विना निर्वाहो न भवेत्; तर्हि प्राक्तनलेखकनाम अवश्यं दातव्यं स्यात्। अथवा तत्र 'अनुवादक' इत्येव लेख्यं स्यात्। 'रचयिता' इति शब्दस्तरुन्तुदो जायते। अलं बहूक्त्या।

---

## हिन्दीपत्रसम्पादकेभ्यः प्रार्थना।

प्रार्थयिता—श्रीदीनानाथशर्मा शास्त्री सारस्वतः।
[ स. ध. कालेजोपाध्यायः, मुलतान सिटी ]

हिन्दीपत्रपत्रिकाणां सम्पादकमहोदया निवेद्यन्ते। महोदयाः! श्रीमद्भिर्मयि सम्मानारोपार्थं यदा कदाचित् स्वनिबन्धप्रेषणार्थमहमनुरुद्धो भवामि। परं समया-ऽभावादहं श्रीमदादेशं पालयितुं न प्रभवामि। यतो हि मया प्रायः संस्कृतभाषायाः सेवार्थं सङ्कल्पः कृतः। यद्यपि जनाः कथयन्ति यत्—संस्कृतभाषायां निबन्ध-प्रकाशनं पुस्तकप्रकाशनं वाऽरण्येऽरण्यरोदनम्; तथापि तत्र स्वकीयाऽऽस्थावशात्

तां न जिहासामि । यद्यपि हिन्दीभाषायां निबन्धप्रकाशनमद्यत्वे प्रसिद्धिद्वारम्, संस्कृतभाषायाश्च प्रकारान्तरेण सेवा; तथापि हिन्दीपत्राणां बाहुल्यवशात् संस्कृतवरिवस्याव्यापृतिव्यापारितात् समयादल्पमपि रिक्तं कालं तेषां सेवायै प्राप्तुमसमर्थोऽस्मि ।

प्राग् एकं 'हिन्दु' पत्रं मया तत्सम्पादक श्रीप० कालूरामशास्त्रिमहोदयाऽनुरोधेन स्वनिबन्धप्रकाशनार्थं स्वीकृतमासीत् । अधुना तत्स्थगने 'अनुभूतयोगमाला' सनातनधर्म्ममण्डकतद्विरुद्धमतखण्डकस्वहिन्दीनिबन्धप्रकाशनार्थं मया स्वीकृता । अनवकाशवशादन्यत्र हिन्दीनिबन्धप्रेषणेऽशक्तत्वाद् 'गीताधर्म काशी' 'तेजप्रताप अलवर' 'मारवाड़ी ब्राह्मण कलकत्ता' प्रभृतिहिन्दीपत्रसम्पादकानां सकाशात् तदादेशव्यतिक्रमोपलक्ष्ये क्षमां याचे ।

---

## शोकोच्छ्वासः ।

[ पहरा ( गया ) निवासिनां शुकदेवशर्मणां महाप्रस्थाने ]

प्रणवं प्रजपन् पुरःस्थितं वत बालं मनसा विशन् हरिम् ।
शुकदेवबुधोऽत्यजद् वपुः पहराग्राम-जनिर्बहुश्रुतः ॥ १ ॥

हत ! भारत हा ! पुनर्हतं वत हारस्तु विहारखण्डितः ।
प्रहरेऽपहतास्तवासवो वत ! लक्ष्मीरहितोऽद्य लक्ष्मण ॥ २ ॥

प्रतिभे प्रसभं प्ररुद्यताम् अयि विधे ! वद कस्तवाश्रयः ।
भण भारति ! भास्तवाधुना ननु क्वासे व्रज माचिरं लयम् ॥ ३ ॥

कथयाशु कथं वदिष्यति ननु कस्तादृगनल्पकल्पनः ।
ननु सुश्रुत ! तादृशं क्वचिच्छ्रुतवान् लोकितवांश्चिकित्सकम् ॥ ४ ॥

अपि कर्म विकर्म संगतं तत्र काण्डे क पुनस्तु तादृशः ।
निगमागम ! गच्छ सागरं तव वेत्ता न पुनर्भविष्यति ॥ ५ ॥

इति वृद्धतरं वहुश्रुतं गणनातीतगुणं गुरुं गिराम् ।
हृतवान् यदि काल ! दुर्मते ! त्वमभिज्ञो न विकर्मकर्मणाम् ॥ ६ ॥

अधुना खलु ना स दुर्लभः स पुनः स्वर्गगतोऽपि भूतले ।
म्रियते यदि तस्य तादृशः सुतवर्यः वुधलक्ष्मणाभिधः ॥ ७ ॥

रामकृपालुपाण्डेयस्य सहायकाध्यापकस्य
संस्कृतविद्यालय दाउद नगरस्थस्य ( गया )



## "अहो भाष्यम्"

[ ले० चिरञ्जीवशास्त्री सारस्वतः ]

अयि शब्दशास्त्रेऽतुलं प्रेमाणमुद्वहन्तः व्याकरणशास्त्रपारावारपारदृश्वानः प्रेक्षावन्तोऽन्तेवसन्तश्च । जानन्त्येव श्रीमन्तो यन्मुनिपुङ्गवेन पाणिनिना भगवतः शङ्कराच्चतुर्दशसूत्राण्यधिगम्य सकलं स्वकीयं व्याकरणं प्रणीतम् । लोकवेदसाधारणतया सर्वेभ्यः पूर्ववर्त्तिभ्यो व्याकरणेभ्यः परमोत्कर्षमावहति पाणिनिव्याकरणम् । इदमेव निदानं यदिदमनेकसहस्रवर्षेभ्यः सुरभारत्याः शासनं करोति । पाणिनेरेव समकालिकः किञ्चिदुत्तरकालिको वा कात्यायनमुनिरवर्तत यस्य द्वितीयं नाम वररुचिरस्ति । कात्यायनसमये संस्कृतभाषायां पाणिनिव्याकरणे च यद्वैषम्यमायातन्तत्तेन महर्षिणा स्वविरचितवार्त्तिकैरपनीतम् । वार्त्तिकानि च सूत्राणां परिशिष्टानि वृत्तिस्वरूपाणि वा । उक्तं च पराशरोपपुराणे—

> उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते ।
> तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥

एतस्य पश्चाद्विक्रमसंवत्सरस्योपक्रमे वर्त्तमानस्य पुष्पमित्रस्य समकालिकेन महर्षिपतञ्जलिना सूत्राणां वार्त्तिकानाञ्च यथेष्टप्रचारमदृष्ट्वा सूत्रवार्त्तिकव्याख्यानभूतं स्वकीयं महाभाष्यं विरचितम् । महाभाष्यं पाणिनिसूत्राणां कात्यायनवार्त्तिकानाञ्चाति विशदा विस्तृता च व्याख्याऽस्ति । ईदृशी गद्य-रचना संसारस्य कस्यामपि भाषायां नोपलभ्यते । इदमेव कारणं यन्महाभाष्यं संस्कृतसाहित्ये विपुलप्रतिष्ठाधिष्ठानम् । भाष्यकारवार्त्तिककारयोरिदमेव लक्ष्यमासीद्यत्पाणिनिव्याकरणं प्रचलित-संस्कृत-भाषानुरूपं कथं स्यात् । एतदर्थं क्वचित्क्वचिदपूर्ववचनानि कृतानि तैः महानुभावैः । सूत्रवार्त्तिकज्ञानवत् महाभाष्यज्ञानमपि परमापेक्ष्यमस्ति ।

पुरा किल महाभाष्यतत्त्वज्ञातारो बहवो विद्वांसः "कैय्यटहरदत्तनागेश" प्रभृतयो बभूवुः । येषां व्याकरणसिद्धान्ततलस्पर्शिनीं प्रज्ञां स्मारं स्मारं वयमाश्चर्य्यचकिता भवामः । परं न सर्वदा समयः समानरस एव सञ्चरति । कियत्कालाद् गतानुगतिकाः सर्वे विद्वांसोऽवच्छेदकतावच्छिन्नप्रवाहे निमग्नाः । साम्प्रतमामूलचूलं परिष्कारस्याधिराज्यमिति नास्ति केषाञ्चन प्रेक्षावतां चक्षुष्मताञ्च तिरोहितम् । न कोऽपि महाभाष्यस्य जातुचित्स्वाध्यायमपि करोति । स्वाध्यायस्य कथा दूरापेता, यदि नाहं प्रमाद्यामि तर्ह्येतदपि कथयितुं पारयामि यदस्मासु बहुभिस्तु तस्य सम्पूर्णमहाभाष्यस्य दर्शनमपि न कृतं स्यात् । कैश्चिच्च औपरिष्टं पुस्तकबन्धनसौन्दर्य्यमात्रं दृष्ट्वा तत्पृष्ठपरिवर्त्तन-

कष्टमपि न स्वीकृतं स्यात्। कैश्चन कृतेऽपि पृष्ठपरिवर्त्तने तत्र मस्तिष्क-प्रवर्त्तनं तत्रापि व्याकरणसिद्धान्तगवेषणाप्रयासश्च न कृतः स्यात्। हा! किमस्माकमयमेव शब्द-शास्त्रपाण्डित्याडम्बरः? कैश्चन विवेकिभिस्तु महाभाष्यं भिन्नसाम्प्रदायिकानां सम्पत्ति-रिति कथं वयं तत्र मस्तिष्कं प्रवर्त्तयेम इति विचार्य्य तदुपेक्षितम्। हन्त भारतवर्ष! त्वदीयानां पुत्राणामेषा दशा।

"अहह"—यत्र—

"पातञ्जलमहाभाष्ये कृतभूरिपरिश्रमः"

इति डिण्डिमो जोघुष्यते स्म यदन्तरेण महाभाष्यज्ञानं न कोऽपि व्याकरणोपरि अङ्कितुं पारयति तत्रास्माभिः—

"कौमुदीकण्ठलग्ना चेद्वृथा भाष्ये परिश्रमः"

इत्यादयोऽनर्गलप्रलापाः क्रियन्ते। वयं महाभाष्यस्योपासका अतएव प्रशंसाम इति न मन्तव्यम्। ये खलु गुणैकपक्षपातिनो विद्वांसः सन्ति तेऽप्यस्य विलक्षणगुण-वैशिष्ट्यं दर्शं दर्शमाश्चर्य्यचकिता भवन्ति महाभाष्यमेव वैयाकरणानां परमं प्रमाणम्। महाभाष्यज्ञानमृते न कोऽपि संस्कृतभाषातत्त्वविमर्शको भवितुमर्हति। यथा—

(१) कुम्भीकरोति मृदमित्यत्राच्व भवत्येवं काशकटीकारमित्यत्र स्यान्न वा?

(२) सुप्रलम्भमिति भवत्येवं प्रसुलम्भमिति स्यान्न वा?

(३) तितउ, सिकता, सम्बन्धमिति कथं भवन्ति।

(४) द्विमोदकिकामित्यत्र यथा वुन्नेवं द्वौ द्वौ माषौ ददातीत्यत्र कस्मान्न भवति?

(५) उपसर्गादनोत्पर इति सूत्रमाहोस्विद् "उपसर्गाद्बहुलमिति?

(६) नञ्पर्य्यायवाची नशब्दः किमस्ति?

महाभाष्ये पारावारीणा एवास्य तत्त्वमवगाहितुं प्रभवन्ति। एवं बहुत्र स्थलेषु द्रष्टव्यमस्माभिस्तु दिङ्मात्रमिह प्रदर्शितम्। "न पदान्तद्विर्वचन" इत्यस्योदाहरण-प्रत्युदाहरणानि कौमुद्या आख्यातुं कः पारयति। "उदः पूर्ववत्त्वे स्कन्देश्छन्दस्युप-संख्यानं" "रोगे" चेत्यादीनि वार्त्तिकानि कौमुद्यां नोपलभ्यन्ते। "इवेन समासो विभक्त्यलोपश्च" इत्यत्र पूर्वपदप्रकृतिस्वरत्वं चेति कथं नोपात्तम्। तस्य महानुभावस्य मते स्वरः केन स्यात्। किम्बहुना यदि कौमुद्यां सर्वं भृतं स्यात्तर्हि—

"विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे"

इत्युक्तिरपार्था स्यात्।

महाभाष्याध्ययनाध्यापनोन्मूलनेनैव एवंविधा बहवो विद्वांसोऽस्माकं दृष्टिपथेऽवतीर्णा ये व्याकरणाचार्य्या भवन्तोऽपि मूलकौमुदीं नाध्यापयितुं प्रभवन्ति। का कथा शेखरमनोरमयोः। किम्बहुना न च तेषु संस्कृतभाषणस्य लेखनस्य वा योग्यताधिगम्यते। विद्वद्भिरिह दृष्टिपातो विधेयः "छिन्ने मूले नैव शाखा न पत्रम्"। साम्प्रतमस्माकं सौभाग्याद् राजकीयपरीक्षायामपि सम्पूर्णं भाष्यं निहितं वर्त्तते।

यथाकथमपि संस्कृतज्ञाः छात्रा वराका अत्रोन्मुखा अपि भवन्ति। परन्तेषामध्यापकाः स्वस्वाभाविकालस्यादिदोषतस्तान्निरुन्धन्ति। ते यथाकथमपि राजकीयपरीक्षापाठ्य-परिष्कारग्रन्थानामध्ययनन्तत उत्तरणमेव स्वर्गसोपानोत्तरणं मन्यन्ते। ये नवीन-व्याकरणाचार्य्यादयः शास्त्रिणो वा ते परीक्षोत्तीर्णतामात्रेणैव यावत्कर्त्तव्यस्य समाप्तिं मत्वाऽग्रे किमपि स्वकर्त्तव्यमनाकलयन्तोऽध्यापनस्थानानां गवेषणे निरता भवन्ति। वयमत्रापि न द्विष्मो यत्तेऽध्यापनस्थानानि कथं गवेषयन्ति, अवश्यं गवेषयन्तु। परं किमन्तिमपरीक्षोत्तरणमात्रेणैव कर्त्तव्यस्येति श्रीर्जायते? न जायत इति चेत्तदा परीक्षातिरिक्तस्य प्राचीनसाहित्यस्य स्वाध्यायोऽवश्यमेव कार्य्यः। ये परीक्षाग्रन्थमात्र-विलोकनप्रवणास्ते कदाऽपि न विचारयन्ति यदस्माकमन्तिमप्रतिष्ठास्पदं महाभाष्यमपि वर्त्तते। वयं तत्र प्रवृत्तिं कथं न विदध्म इति। यदि ते महाभाष्यस्याध्ययनमध्यापनं च कुर्य्युस्तर्हि स्यात्सुवर्णे सुगन्धसमवायावसरः। राजर्षिणा भर्तृहरिणाऽपि चारु भणितम् महाभाष्यस्य प्रशंसायाम्—

"अहो भाष्यमहो भाष्यमहो वयमहो वयम्"।

---

## स्वास्थ्यसाधनम्।

[ लेखक—उपाध्यायोपनामक राजनारायण शर्मा ]
श्रीदयानन्दोपदेशक महाविद्यालय महामण्डल काशी।

मानवजातिः संसारे श्रेष्ठतरा गण्यते। तस्याः जीवनसंग्रामे स्वास्थ्यमत्याव-श्यकम्। यत उत्तमस्वास्थ्याभावे वयं जीवनामूल्यसुखं भोक्तुमसमर्था भवामः। अतः स्वास्थ्योपरि विचारो विधेयः। यथा यस्मिन्कस्मिन्नपि देशे भवत्येकोऽधिपतिः। अपि च तस्याधिपत्ये बहवः सेवका भवन्ति। तथैवास्माकं शरीरेऽपि बुद्धिरेवाधि-पतिर्वर्तते, अपि च तस्य आधिपत्ये बहूनीन्द्रियाणि वर्तन्ते। यथा राज्ये कुत्रापि काचिदपि च क्षतिः स्यात् तर्हि राज्येऽनिष्टं जायते, तथैव शरीरेऽपि कुत्रापि कश्चिदपि च विकारश्चेत्तर्हि शरीरेऽपि विकृतिरायाति। स्वास्थ्यरक्षणे मानवाः सम्यक् प्रवृत्य-भावेन स्वदेहं रोगाधीनं कृत्वा स्वधनान्यपि विनाशयन्ति। यतः "स्वास्थ्यात्परतरन्नहि किञ्चिदस्ति" आंगलभाषायामपि दृश्यते यत् "Health is wealth"

प्रायो दृश्यते यत् परीक्षावसरे बहवो विद्यार्थिनः अतिपरिश्रमेण भवन्ति रुग्णाः। इत्यत्र तेषां स्वास्थ्याभावः प्रत्यक्षतया दृश्यते। "यतः स्वस्थमानवानान्त्वतिपरिश्रमे-णापि स्वास्थ्ये नहि कश्चिद्दोषो जायते। आंगलभाषायामपि दृश्यते यत्—

Sound mind in a sound body—यन्त्रालये—यन्त्रस्वच्छताऽनिवार्या। तथैव स्वास्थ्येऽपि निम्नाङ्कितविषयेषु विचारोविधेयः। १—"स्व-शरीरवस्त्रादीनां च स्वच्छताया विशेषध्यानं कर्तव्यमिति" शरीरे बहूनि क्षुद्रच्छिद्राणि वर्तन्ते तैः शरीराभ्यन्तरविकारा बहिरागच्छन्ति तेषां दूरीकरणार्थं मानवजातीनां स्नानमत्यावश्यकीयम्। भोजनान्ते स्नानकरणेन पाचनशक्त्यां त्रुटिर्जायते। 'स्नानानन्तरं व्यायामोऽपि विधेयः। वस्त्रविषयेऽपि एतादृशी व्यवस्था विधेया यत् वस्त्राणि कञ्चुकानि च समयानुकूलानि परिधेयानि। तानि वस्त्राणि शरीराद्दीर्घतराणि भवेयुः। वस्त्रविषयेऽपि स्वच्छताऽनिवार्या। शुद्ध-वायुसेवनं कर्तव्यमिति।

मानवजातीनां प्राणत्राणार्थं स्वच्छवायुसेवनमत्याश्यकम्। एवं तु बहवो वायवः सन्ति। परंतु तेषु "आक्सीजन" एतन्नामकवायुसेवनं कर्तव्यम्, यत्र सूर्यप्रतिबिम्बस्य उपर्युक्तवायोरागमनं च स्यात्। रात्रावपि शयनावस्थायां मुखस्योपरि वस्त्राच्छादनन्न कर्तव्यम् अपि च शयनागारस्य कपाटमनावृतं कर्तव्यमिति। स्वास्थ्याय भोजनविषयेऽपि ध्यानं देयम्। भोजनाभावेऽपि प्राणरक्षा न स्यात् यतः "कलावन्नगताः प्राणाः" भोजने दुग्ध-पानमत्यावश्यकमस्ति। समयानुकूलं भोजनं विधेयम् छात्रैः दिवसे द्वादशवादनकाले रात्रौ च सप्तवादनाभ्यन्तरे एव भोजनं विधेयम्। अतिभोजनं नैव कार्यम् यतः "अजीर्णे भोजनं विषम्"। न्यूनतरभोजनकर्ताऽपि दीर्घजीवी न भवति। अतः सामान्यतया भोजनम्विधेयम्। एवं च तथैव जलेऽपि शुद्धताऽनिवार्या। विशेषतः कूपजलं पेयम्।

स्वास्थ्याय शयनमपि कर्तव्यम् रात्रौ शयनकरणे दिवस–कृतपरिश्रमेणीन्द्रियाणि विश्रामं कुर्वन्ति। परन्तु तत्राप्यतिशयो न विधेयः। यतः अतिशयनेन इन्द्रियाण्यालस्यतां यान्ति। छात्रैरात्रौ सप्ताष्टघटिकापर्यन्तमवश्यमेव शयितव्यम्।

केचित्तु तम्वाकू, गांजा, बीड़ी, सिग्रेट, भंगेत्यादि वस्तूनां सेवनं कुर्वन्ति। एतेषां हानिप्रदढुःखप्रदविषवस्तूनां च सेवनं स्वास्थ्याय न वरमस्ति,

ये स्वस्वास्थ्यहितं कर्तुं, परीक्षायामुत्तमश्रेण्यामुत्तीर्णतां लब्धुं, स्व-बल-बुद्धि वर्द्धयितुं, स्वदेशे नररत्नेषु गणनां कर्तुञ्चेच्छन्ति—ते मत्प्रार्थनया उपर्युक्तनियमानालोच्य स्वास्थ्यसम्पादनार्थं सावधाना भवेयुः।



## महामहाध्यापकानां त्यागमूर्तिपण्डितप्रवर श्रीपञ्चानन-तर्करत्नशर्म्मणाम्

वक्तव्यम्

अतीता वर्षाणां पञ्चाशत्। पराधीनतायाः क्रमशः प्रसारमुपलभ्य यथाऽस्या अत्ययः स्यात्तदर्थमस्माभिः प्रयत्न आरब्धः। वत्सराणां सहस्रं पराधीनतापाशपतितस्यापि भारतस्य कथं पञ्चाशद्वर्षेभ्यः पूर्वं पराधीनता-प्रसारो लक्षित इति पृच्छ्यते चेत् तत्र प्रतिवचनम्, या हि वास्तवी पराधीनता तस्याः प्रवृत्तिः वत्सरशतात्पूर्वं नासीत्। सर्वैरेव स्वाधीनता-सुखं धर्मे मनोभावे कर्मणि सामाजिकस्थितौ चान्वभावि।

आङ्ग्लीयशिक्षासु विशेषेण प्रसृमरासु तस्य स्वाधीनतासुखस्य क्रमेण लोपः प्रवृत्तः। लोपस्य प्रबलतोपक्रमस्तुः वर्षाणां पञ्चाशतः पूर्वत एव समजनि। तस्यैव भयावहपरिणामं विचार्य तत्प्रतिरोधायास्माभि लौकिकः प्रयत्न आरब्धः, किन्त्वस्माकमबलिम्ना कालस्य च बलीयस्तया तस्य यत्नस्य फलन्नेदानीमप्युपलब्धं प्रत्युत सर्वथा वैफल्यमेवानुभूयते। इदानीं चतुर्विधा भारतशुभानुध्यायिनो भवन्ति। एको राजपक्षः, अपरः कांग्रेसाख्यः राजसम्मतपक्षः, तृतीयश्च धर्मान्तरदृढानुरक्तपक्षः, चतुर्थश्च संख्याऽधिकानां वराकाणां वर्णाश्रमिणां पक्षः, इदानीमाद्यद्वितीयौ सम्पृक्तौ। तृतीय स्त्वाद्येन, ननु द्वितीयेन। द्विपत्नीकः पतिरिव वर्त्तते तावदाद्यपक्षः। विशेषतोऽस्मद्वास्तविकस्वाधीनताया व्याहतौ चिरमभिल-षितायां द्वितीयपक्षेण साधमानायां मे शङ्कः एवाद्यः पक्षः, अतो द्वितीयपक्ष एवः प्रसन्नतरः। नतायां प्रथते द्वितीयपक्षनीत्या स्वराज्यलाभो-ऽस्माकं जात इति। हा! धिक्! कीदृग् व्यामोह एषः!!!

एवं स्वराज्यलाभात पूर्वं पञ्चाशत्यतीतायांद्वर्षाणां यत्सभयमाशङ्कितं तदेव पराधीनतादुःखं स्वाधीनतायाः सम्यग्विलोपसाधनं सम्प्रति सम्पद्यते। हतबला निरुत्साहाः सुसदृशचिन्तनरतैरुद्योगादिकुशलैः बन्धु-भिर्विहीना लौकिकप्रयत्ने प्रायेण नैराश्यमापन्ना अपि श्रीविश्वनाथशरण-मुपगताः—'मूकं करोति वाचालम्'इति न्यायेन तत्कृपामात्रावलम्बनाःस-ज्जनानपि तत्कृपालाभार्थं प्रयतमानान्कर्त्तुं काश्यां वर्णाश्रमस्वराज्यसंघस्य महाधिवेशनं विधेयमिति मन्यामहे।

येषां हृदि, इदानीं धर्मरक्षायै वास्तवस्वाधीनतारक्षणापरनामधेयायै स्पृहा वर्तते, तान् सोरस्ताडं बोधयामः, अधिकतर प्रयत्नोत् साहाभ्यां भगवच्चरणमेव शरणमुपगच्छत । आगच्छत च तदर्थं तद्विषयसम्भाषिभिः श्रीविश्वेश्वरनगरीम् । लौकिकप्रयत्ने निराशप्रायैरप्यस्माभिः 'धर्मो रक्षति' इति वचने श्रद्धालुभि धर्मरक्षायै सततमुद्योगिभिर्भवितव्यम् । तदुद्योगस्यनिष्ठा श्रीभगवच्चरणारविन्दे स्वात्मसमर्पणम्—इति ।

---

## वीतरागाणां महात्मनां सन्देशः ।

( अधिभारतवर्षं सर्वत्र भगवदुपासना विधेया )

आगामिन्यां मार्गशीर्षपूर्णमास्याम् उपासनादिवसो माननीयः ।

ऐषमोऽखिलभारतीयवर्णाश्रमस्वराज्यसंघस्य एकादशमहाधिवेशनं काश्यां दिसम्बरमासस्य [ २७–२८–२९ इति तारिकासु ] भविष्यति । नूनमस्याधिवेशनस्य प्रभावः समग्रभारते देश-धर्म-समाजप्रभृतिषु सर्वत्रैव भविष्यति । धार्मिके जगति एतन्नवयुगकार्यात्पूर्वं सामूहिकरूपेणोपासनां विधाय दैवबलप्राप्त्यर्थं प्रयत्नकरणं नितरामावश्यकम् ।

'मासानां मार्गशीर्षोऽस्मि' इति गीतायां भगवद्वाक्यानुसारेण मार्गशीर्षमासो नूनं महीयान् । अतोऽस्यैव मासस्य पूर्णमास्यां तिथौ [ दिसम्बर मासस्य सप्तमतारिकायां ] समग्रभारते भगवदुपासना-दिवसो मान्यः ।

तस्य कार्यक्रमश्चेत्थं—

( १ ) सर्वं एवाऽऽस्तिकहिन्दवः स्वकीयोपासनापद्धत्या पार्श्वस्थमन्दिरादिषु भगवत्स्थानेषु देवानां शृङ्गार-पूजनादि कर्म कुर्वन्तु ।

( २ ) सामूहिकरूपेण स्तोत्रं विधेयम् । तत्र च स्तोत्रे, इदमवश्यं ध्येयम् यत् भारतेऽधर्मवृद्ध्या प्रतिरोधः स्यात्, धर्मस्याभिवृद्धिः स्यात्; अपि धर्मस्नेहिनां बलं निरन्तरं समुन्नतिमेतु ।

( ३–४ ) स्वकीये नगरे ग्रामे वा भगवन्नामकीर्तनं कुर्वन्तो धार्मिकशोभायात्रां प्रचालयन्तु । तत्रैव च सार्वजनिकसभां विधाय देवोपासानाया महत्त्वं प्रतिपादयन्तु जनतायाम् ।

---

* अस्मिन्नेव समये जनतायां वर्णाश्रमस्वराज्यसंघोद्देश्यानां प्रचारो विधेयः । काश्यां भावि महाधिवेशनस्य सूचनाऽपि देया, तत्र सम्मिलितीभूय धर्मप्रचारे सहयोगप्रदानार्थमपि कथनीयम्, तद्दिनसमाचारोऽपि 'समाचारपत्रेषु' प्रकाशनार्थं प्रेषणीयः ।

† संकीर्तन संघाः, भजनमण्डल्यश्च अस्मिन्दिने संकीर्तनं, भजनं, सामूहिकरूपेण कुर्वन्तु ।

[ प्रेषकः कश्चन महात्मनां सेवकः ]

# गोपाष्टमी सन्देशः।

[ ले०—श्री० अशोक-कुमार ]

अद्यत्वेऽधिभारतं गोवंशस्य ह्रासं समवलोक्य कस्य सचेतसश्चेतो न दुःखी-भवति। एतत्कथनं नात्युक्तिकोटिमाटीकते यत् नः समस्तमेवास्मदीया धेनु-जनन्यो वध्या भवन्ति। न च वयं किमपि कुर्म्मः। धार्मिकदृष्ट्या गोवंशरक्षणं त्वस्माकं हिन्दूनां कर्तव्यमेव किन्त्वार्थिक्या राजनैतिक्या, सामाजिक्या, किंवाऽऽयुर्वेदसम्ब-न्धिन्याऽपि दृष्ट्या यदि विचारं कुर्म्मः तया गोवंशरक्षणं न केवलं हिन्दूनां कृते प्रत्युत सर्वेषामेव सहजं कर्म भवति। अतो यद्यस्माभिर्मन्यते यन्नवीनशासनविधाना-नुसारेणास्माभिः स्वराज्यस्य कियानप्यंशो लब्धः, तर्हि तस्य सर्वप्रथमं सर्वोत्तमत्वेन चेयमेवोपयोगिता भवेद् यद् गोवंशस्य पूर्णतया संरक्षणं स्यात् एतदेव साफल्यं स्वराज्यप्राप्तेः।

एतदुपर्युक्तमतं दृष्टिपथे समानीय हिन्दुमात्रस्य सविधेऽस्माकं निवेदनमेतत्— यत्ते भविष्यकाले व्यवस्थापकसभायां तेषामेव सदस्यानां निर्वाचनं कुर्वन्तु ये गोवधस्य मूलोच्छेदार्थं बद्धपरिकराः स्युः, तत्कृते प्रमाणपत्रं च लिखेयुः। पूर्णतयाऽऽशास्यते-ऽस्माभिः यत्परस्परं शतधामतभेदेऽपि गोवधनिवारणे कस्यापि सम्प्रदायस्य न वैमत्यमापतिष्यति।

हर्षस्य वृत्तमेतत्—सम्प्रत्येव भाविनि दिसम्बरमासे [ २७-२८-२९ ] तारिकाचये अ० भा० वर्णाश्रमस्वराज्यसंघस्य महाधिवेशनं काश्यां भविता। आशास्यतेऽस्माभिः यत्तस्यापि प्राथम्येन मुख्यत्वेन चैतत्कार्यमापतति। तत्कार्यकर्तॄणां च मनोवृत्त्या इदमेव फलितं भवति यदस्मिन् महाधिवेशने कार्यमेतदवश्यं भविष्यति। यदि वर्णाश्रमस्वराज्यसंघः कार्यमिदं हस्ते ग्रहीष्यति तदा तस्य ध्रुवं साफल्यं, हिन्दु जातेः हितञ्च विशिष्टरूपेण भविष्यतीति।

[ गतगोपाष्टम्युपलक्ष्ये लेखकेन स्वहार्दिकभावाः शब्दैः समुपस्थापिताः ]



# "अहो !!! दुरन्ता व्यसनिता"

ले०—'शास्त्री' प्राणजीवनः जोशी ( कच्छी ) 'काव्यतीर्थः,' 'सा० भूषण' "साहित्याचार्य"-श्रेणिस्थः, "रिसर्चस्कॉलर"–गवर्न्मेण्ट संस्कृत कॉलेज सरस्वती भवन काशी

अतिविचित्रपरम्परावाहिन्यां परमात्मसृष्टौ विचित्रं व्यसनिताक्षेत्रं प्रत्यक्षीकुर्वतां प्रेक्षावतामपरोक्षमिदं यत्–"स्वभावो दुरतिक्रम"–इति । भिन्न-भिन्नव्यसनस्वभावा दृश्यन्ते जनाः । येषां यो यादृशो व्यसनस्वभावः स सौकर्येण सपद्यपनेतुं न शक्यः। व्यसनितापाशनिगडिता मानवास्तया निर्मिता इव, निगीर्णा इवाऽस्वतन्त्रा भवन्ति। सेव्यमानं व्यसनं तु प्रत्यहमुपचीयत एवेति सत्यं सूक्तमिदं यथा—"न जातु कामः कामानामुपभोगेन शाम्यती"ति। तथाहि—विषमिव विषमोदर्कं मादकमद्यादिवस्तुकं सेवमानानां ( व्यसनिनां ) भूताविष्टानामिव तेषां न ततो परित्राणं सम्भवति । मद्याद्यभक्ष्यं वस्तुकं विषमिति बाला अपि जानन्ति; तथापि वराकास्ते ततो नात्मानमुद्धर्तुमीशाः । यच्च समग्रं जगन्न्यक्करोति तदेव ते जीवनमिति मन्यमानास्तदर्थं धनं, प्रतिष्ठां, स्वास्थ्यं, किंवान्यत् सर्वस्वमप्यपहाय न विरमन्तीति कस्य वा दुःखमाश्चर्यं च नोद्भवेत् ? । प्रज्ञास्तु हिताहितं, पथ्यापथ्यं, कर्तव्याकर्तव्यं च विवेकेन गृह्णन्तो यावदपायोदर्कस्वभावं नोपाददत इत्येव न हि किन्तु तच्छायामपि नो स्पृशन्ति । इति।

जागतिकाः समे जीवात्मानः सर्वथाऽऽत्मीयं सुखमेवेच्छन्ति । न कस्यचनापि दुःखेऽभिलाषः स्यात् । अपि च मनुजा आत्मनः प्रतीपानपायान् दूरीकर्तुं सर्वात्मना ( पृष्ठेलग्नाः ) प्रयस्यन्ति । यद्यदनुतिष्ठन्ति, यं यं चानुभवमश्नुवते मनुजास्तस्य सर्वस्यावलम्ब इन्द्रियाण्येव । तानि च न स्वतन्त्राणि परकीयनियोगानुवर्तित्वात्। यतो मनस्तेषां शासकमिति तदादिष्टान्येव प्रवर्त्तन्ते । एतावता पूर्वाचार्यैस्तत्क्रियानुसारेणान्तःकरणं, मनोबुद्धिश्चित्तमहंकारश्चेति पञ्चधा विभक्तं तत्स्वरूपमन्तःकरणपञ्चकमित्युदीर्यते ।

यदा मनुष्यः समाधिस्थोऽथवा निर्विकल्पस्थितौ वर्त्तमानः स्यात्तदवस्थानाच्च काञ्चित्कल्पनां जनयितुं जागृयात् तदाऽन्तःकरणमित्युच्यते । अर्थादमुकसङ्कल्पोद्बोधात्प्राक् तदीयस्फुरणं यद्भवति तदन्तःकरणमिति । यदा च तस्मिन् सङ्कल्पः समुद्भवति तदवस्थायां मन इति जोघुष्यते । किञ्च, मनसि सङ्कल्पविकल्पसंकलना भवत्यपितु न तन्निश्चयः प्रतिपद्येत; तदनन्तरं च तान् सङ्कल्पान्नियम्यामुकं कार्यं दृढीकृत्य चैतदेव कर्त्तव्यमित्थंभूतो यो निश्चय इत्यवस्था बुद्धेः । अनया च बुद्ध्या निश्चित्य पुन ( २ ) स्तत्त्वतो विचिन्त्य तत्कर्तव्यसाधननिर्धारणमिति चित्तस्यावस्था । इत्थंभूतनिर्द्धारितकर्तव्यानुष्ठाने इन्द्रियाणां प्रवृत्तिरित्येषोऽहंकारः ।

एवंदृष्ट्या देहिनां समप्रकार्याणि बुद्धिमुपजीव्य प्रचलन्ति। बुद्धेस्तत्त्वं प्रत्येक-मनुतनुजन्मसु भिन्न-भिन्नशक्तिमदिति विभाव्य "विशेषज्ञा" उत्तम-मध्यम-मन्दभेदेन तां त्रिधा व्यवस्थापयन्ति। सा हि यथा यथा परिष्क्रियते, विनीयते, संस्क्रियते वा तथा तथाऽऽत्मनो मूलभूतं जातीयं चाकचिक्यं प्रकाशयति। एतस्य परिष्करणस्या-होस्विच्छित्त्वणस्यापरमभिधानं संस्कार इति। बुद्धेः [1]संस्कृति[2]विकृत्योश्च प्रत्येकं साधन-द्वयं रसः संस्कारश्चेति। रसाज्जायमानां शुद्धिं विकारं च; रसजन्यां संस्कृतिं, रसजन्यां विकृतिं च निगदन्ति तद्विदः। एवमेव संस्काराज्जायमानां शुद्धिं विकारञ्च; संस्कार-जन्यां संस्कृतिं संस्कारजन्यां विकृतिं चेति व्याहरन्ति। उन्मत्ता जना औषधोपचारेण स्वस्था जायन्ते तदेव रसजन्यसंस्कृतेरुदाहरणम्। अपि च, मनसः स्वच्छतायां मादकादिद्रव्येण या विकारोत्पत्तिः सा रसजन्या विकृतिः। तथाचोपदेशादभ्यासादेश्च बुद्धेः शुद्धौ सम्पन्नायां सत्यां संस्कारजन्या संस्कृतिः; तथाविधाच्च योगाद्बुद्धेर्विकारे जाते संस्कारजन्या विकृतिरिति निदर्श्यते। इत्युक्तरूपसंस्काराणां प्रभावेण मनुष्याणां मनोदशा विपरिवर्त्तते। ततश्च तेषां तदनुरूपः स्वभावो व्यसनं वा सर्वत्रोज्जृम्भते। तदभिमुखेव च भवति प्रवृत्तिरिति "हंत दुरन्ता व्यसनिता"॥ इत्यलम्॥



## संगृहीत समाचाराः

### धर्मसभासु अधार्मिकप्रस्तावनां विरोधः।

सम्प्रति वहुषु स्थलेषु निम्नाङ्कितानामधार्मिकप्रस्तानानां विरोधे सभाः क्रियन्ते। प्रस्तावपत्रे प्रकाश्यते मुम्बई असेम्बल्यां स्वीकृत "हरिजनमन्दिर पूजाविल" यू० पो० कौंसिले उपस्थापितो "धर्मादायविल" मद्रास कौंसिले अस्पृश्यतानिवारणविल। पंजावकौंसिले "मन्दिरसुधारविल" बड़ौदा स्टेट कौंसिले "अस्पृश्यतानिवारणविल" तथा इन्दौर स्टेट मन्दिर प्रवेशघोषणा चेति।

### ग्वालियरराज्ये श्राद्धसम्बन्धिनी राजाज्ञा।

ग्वालियरराज्ये समाजसुधारायैष नियमो निर्मितो यत्सामाजिकरीतिकार्येषु निरर्थके व्यये कृते दण्डो दास्यते! विशेषतो मरणानन्तरं क्रियमाणे भ्रातृभोजे व्यर्थ-व्ययनिवारणार्थमेष नियमो वर्तते। एषा प्रथा मालवाराज्यस्य ग्वालियर-राज्यस्य च उत्तरस्यां दिशि बाहुल्येनाऽवलोक्यते। अतो कोऽपि जनः श्राद्धे ५१

१— संस्कृतिः = शुद्धिः। २—विकृतिः = विकारः।

संख्यातोऽधिकान् जनान् न भोजयेत्। एतस्य यदि कश्चिदुल्लङ्घनं करिष्यति तदा १०००) रूप्यकाणां दण्डो भविष्यति मासमेकं कारागृहे वासो वा।

× × × ×

युक्तप्रान्तीयशासकेन काशीस्थगवर्नमेण्टसंस्कृतकालेजस्य पुनस्सङ्घटनाय सुचारुप्रबन्धाय चैका समितिः स्थापिता। यस्या अध्यक्षाः श्रीयज्ञनारायण उपाध्यायाः, मन्त्रिणश्च श्री डा० मङ्गलदेवशास्त्रिमहोदयाः सन्ति। समितिरेषा कालेज सम्बन्धिनीं सर्वविधां दुरवस्थां दूरीकृत्य सुव्यवस्थां विधास्यति। यथा—संस्कृताध्यापनाय निर्मितं विशालं भवनं विशेषेण आङ्गलभाषाऽध्यापनार्थम्, संस्कृतछात्राणां निवासार्थं निर्मितश्छात्रावासश्च आङ्गलछात्राणां निवासार्थं बाहुल्येनोपयुज्यते। एतेन संस्कृतविभागीयकार्ये शनैः शनैः सङ्कोचः सम्भाव्यते, एवमादीनां विषयाणां विचारं प्रबन्धं च समितिरेषा करिष्यतीति।

× × × ×

काश्या गवर्नमेण्ट संस्कृतकालेजस्य प्रिन्सिपलपदे डा० श्रीमङ्गलदेवशास्त्रिणः एम० ए० डी० फिल० (आक्सन) महोदया नियुक्ता जाताः। पूर्वमिमे केवलं रजिष्ट्रारपदे स्थिता आसन्। इदानीं पदद्वयस्याप्यधिकारित्वं भजन्ते।

× × × ×

राजकीय-विज्ञप्तिद्वारा विदितं यत्प्रयागीय-प्रधानन्यायालयस्य (हाईकोर्ट) अधीशं (जस्टिस) पटना-प्रधानन्यायालयस्य प्रधानाधीश-(चीफ जस्टिस) पदे नियोक्तुं सम्राजा स्वीकृतिर्दत्ता। अस्य महोदयस्य नाम "आर्थर ट्रेवर हेरिस" इति वर्तते।

× × × ×

## जनगणना।

श्रूयते यत् भारतीय शिक्षाविभागस्य स्वास्थ्यविभागस्य भूमिविभागस्य च डिप्टी सेक्रेटरी श्री एम० डब्ल्यू० मीट्स आई० सी० एस० महोदयः। ४१ तमे ईशवीयाब्दे भविष्यमाणाया जनगणनायाः सम्बन्धे "जन गणनाकमिश्नर" पदे नियोक्ष्यते इति सम्भावना वर्तते।

श्रीपीट्स महोदयः १९२० तमे ईशवीयाब्दे सरकारीभृत्यकार्ये नियोजितः। ततः १९३१ तमेऽब्दे जनगणनायाः कृते मद्रासे सुपरिन्टेण्डेन्ट पदे समासीन आसीत्।

१९३१ तमाब्दे जनगणनायाः कृते श्री जे० एच० हटनः कमिश्नरपदे आसीत्। स च सम्प्रति केम्ब्रिजविश्वविद्यालयेऽध्यापनकार्यं करोति।

चतुर्दशे वर्षे ] मार्गशीर्षपौषपूर्णिमा १९९५ [ ६-७ संख्ये

अखिल भारत वर्षीय

संस्कृत विश्व विद्यालयः

तस्य मुखपत्रम्

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces and Bombay Presidency for use in Schools and Colleges.

सम्पादकः—
त्यक्त महामहोपाध्यायपदवीको
महामहाध्यापकः श्रीपञ्चानन तर्करत्न भट्टाचार्यः ।

सहकारि सम्पादकः—
अवधेशप्रसादशर्मा द्विवेदः

उद्गम–स्थानम्—
श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम् ।
छात्रेभ्यः पुस्तकालयेभ्यश्च १)
संरक्षकेभ्यः ५) । वहिर्भारतम् ६)

# विषयसूची





---

# सूर्योदयः।

चतुर्दशे वर्षे } मार्गशीर्ष-पौष-पूर्णिमयोः १९९५ { ६-७संख्ये

## सम्पादकीया अभिप्रायाः।

### आयुर्वेदशास्त्रस्य महत्त्व-रक्षणोपायाः।

भारतीय-शास्त्रेषु सर्वाभ्यर्हितं वेदानां स्थानं विद्यते। तेषाम् ऋग्यजुःसामाथर्वाण इति चत्वारो भेदाः सन्ति। प्रतिवेदमेकैक उपवेदोऽप्यस्ति। तथाहि ऋग्वेदस्यायुर्वेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदोऽथर्वणश्च स्थापत्यवेदः (शिल्पशास्त्रम्) इति। तत्र यथा वेदेषु ऋग्वेदस्य तथैवोपवेदेषु आयुर्वेदस्य प्राधान्यम्। किं बहुना आयुर्वेदो हि भारते परमोपयोगितां बिभर्ति। वेदानां प्रामाण्यपरीक्षायामायुर्वेदः परीक्षातुलामधिरोहति। तत्प्रामाण्यसिद्धौ वेदानामपि प्रामाण्यं परतः प्रमाणवादे सुरक्षितं भवति। उक्तं हि न्यायसूत्रकृता गौतमेन—

"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्याद्"

तस्य वेदस्य प्रामाण्यं मन्त्रायुर्वेदवत् ज्ञेयम् आप्तस्य प्रामाण्यात्। यो हि आप्त ईश्वरो वेदस्य स्रष्टा स एव मन्त्रायुर्वेदभागमपि सृजति तर्हि यथा वेदस्य मन्त्रभाग आयुर्वेदभागश्च तेनैव आप्तेन(ईश्वरेण) प्रोक्तौ सर्वेषां प्रत्यक्षमेव प्रामाण्यमावहतः, तथैव वेदोऽपि तेनैव आप्तेन ईश्वरेण उक्तत्वात् कथन्न प्रामाण्यमावहेत्। अन्येनापि केनचिदेवमेवोक्तम् तथाहि—

अन्यानि शास्त्राणि विनोदमात्रम् न तेषु किञ्चिद् वचनीयमस्ति।
चिकित्सितज्यौतिषमन्त्रवादाः पदे पदे प्रत्ययमावहन्ति।

इति सर्वथा प्रत्ययाधायकं चिकित्सितवादापरनामधेयमायुर्वेदशास्त्रमेव निगदितम् प्राक्तनै विद्वद्वरैः। तस्यायुर्वेदशास्त्रस्य योगशास्त्रप्रवर्तकैरपि उदाहरणतयाश्रयो गृह्यते। तथा च—

यथा चिकित्साशास्त्रं चतुर्व्यूहं रोगो रोगहेतुः आरोग्यं भैषज्यञ्चेति तथेदमपि शास्त्रं चतुर्व्यूहमेव तद्यथा संसारः, संसारहेतुः, मोक्षः, मोक्षोपाय इति। आयुर्वेदशास्त्रीयाणामष्टानामङ्गानां शल्य-शालाक्यकायचिकित्सा-भूतविद्या-कौमारतन्त्रागदतन्त्र- वाजीकरणतन्त्राणाम यथारोग्योपयोगित्वं तथा

योगसूत्रोक्तानां यमनियमासन-प्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाणामष्टानां योगाङ्गानां मोक्षोपयोगित्वम् । अतएव भगवता पतञ्जलिना योगशास्त्रमिव वैद्यशास्त्रमप्युपदिष्टम् ।

इत्थं सर्वतः सर्वथोपयोगिन आयुर्वेदस्य ब्रह्मोपज्ञस्य माहात्म्यं को हि सर्वथा वक्तुमर्हति । आयुर्वेद इति नामैवैतस्य जीवसमाजे सार्थक्यं समर्थयते । उक्तञ्च भावमिश्रेण विदुषा—

"अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च ।
तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः ॥"

तस्यास्यायुर्वेदस्येह भारते बृटिशशासनकाले कीदृशी उपेक्षा समजनि इति नास्त्यविदितं मर्मज्ञानाम् । न क्वापि तस्य पठनपाठनव्यवस्था बिहारराजाश्रिता विद्यते नापि तस्य प्रचारकृते राज्यशासनतः प्रबन्धो भवति । येन सर्वत्रैव भारते प्रतिनगरम् प्रतिग्रामम् पाश्चात्यचिकित्सावेदिनामेव वैद्यानां डाक्टरपदवाच्यानां समादरणम्, पाश्चात्यदेशोद्भवानामेवौषधानां सर्वथाविहतः प्रचारश्च समजनिषाताम्, एवंनाम भारतीयार्थशोषणन्तु यैः पाश्चात्यैः वणिज्यया क्रियते तैर्भारतीयानांरक्तमपि वैदेशिकमौषधं पाययित्वा विदूषितम् । देशवायुविरुद्धानां सप्तसमुद्रद्वीपपारगाणामौषधानां पानेन भारतीयाः क्षीणबला दुर्बलकाया नानारोगाभिक्रान्ताश्च सन्तः स्वीयधर्मसंस्कारमर्य्यादाविरहिताश्चापि जाता इति महत् खेदास्पदम् !

अस्तु सम्प्रति राष्ट्रियमहासभा-(कांग्रेस) प्रभावतः कतिपयेषु प्रान्तेषु भारतीयानां हस्ते शासनसूत्रमागतं विद्यते । राष्ट्रसभानीत्यैव च शासनसूत्रं सञ्चाल्यमानञ्च दृश्यते । ततश्च कियती आयुर्वेदाभ्युदयाशालता अङ्कुरिता, अस्माकं मनश्यंशतो भारतीयजनतालाभानुमित्या आनन्दारुणोदयं जनयति । दृश्यते च संयुक्तप्रान्ते कियतामायुर्वेदज्ञानाम् आयुर्वेदपद्धत्या चिकित्सां विदधतां सौलभ्यार्थं कियानपि प्रबन्धो जात इति । अग्रेऽपि यदि आयुर्वेदज्ञा विद्वांसः सम्मिलय परस्परं साहाय्यं कुर्वन्तः संघशक्तिं समेधयिष्यन्ति, आयुर्वेदीयचिकित्सापद्धतेः प्राचीनशास्त्रमर्य्यादा अनतिक्रम्य परिष्कारम् विधाय जनताचित्ताकर्षणं यदि करिष्यन्ति, तर्हि अवश्यमेव साम्प्रतिका राज्यशासनकर्त्तारो भारतीया आयुर्वेदाभ्युन्नत्यै विशेषतो दत्तावधाना भविष्यन्त्येव । ईश्वरेणापि भगवता श्रीकृष्णेन पुरुषार्थकर्तुरेव कृते स्वसाहाय्यप्रदानम् प्रतिज्ञातम् तथाहि—

अस्ति चेदीश्वरः कश्चित् फलरूप्यन्यकर्मणाम्
कर्तारं भजते सोऽपि नह्यकर्तुः प्रभुर्हि सः (भा० १० स्क०)

अतश्च सम्प्रति आयुर्वेदविद्भिः सर्वथा आयुर्वेदचिकित्साप्रणालीपरिष्का-राय तत्प्रचाराय च सर्वथा सर्वत्र सर्वतः सन्नद्धैर्भाव्यम्। भारतीयानां निःस्वानां सर्वसाहाय्यविरहितानां कृते आयुर्वेदचिकित्सापद्धतिरेव साधीयसी कल्याण-कर्त्री सुलभा अल्पायासमूल्यलभ्या देशकालोपयुक्ता सात्म्या बहुलाभकरी गुणदा च विद्यते। किमत्र वयं वदामः, के न जानन्ति यत् समानदेशप्रकृतिजं हि भेषजं रोगमपाकरोतीति। सम्प्रति पाश्चात्यचिकित्सका अपि अचिकित्स्य-रोगिणं तदीयजन्मभूमावेव प्रहिण्वन्ति, यत्तत्र गत्वा समानप्रकृतिज-जलवायु-प्रयोगतो रोगापगतिरवश्यं भाविनीति। ततश्च यदि प्राकृतिकजलवाय्वोरेवं गुणातिरेको विद्यते तर्हि तज्जलवायुप्रवृद्धेषु स्वदेशीयौषधेषु कथन्न गुणातिरेकः स्यादिति। अद्यत्वे देशीयशासकवर्गेषु सत्सु आयुर्वेदचिकित्साभ्युदये आयुर्वेद-ज्ञानामुत्साहप्रदाने प्रचारे सर्वप्रियत्वे प्रतिबन्धो न भविष्यतीति इत्यस्माकं विश्वासः। अतश्च सर्वे आयुर्वेदज्ञा सम्मिलत्य यतन्ताम् आयुर्वेदस्यास्य सर्वगुण-सम्पन्नस्य महत्त्वरक्षणाय राजाश्रयप्राप्त्यै सर्वथाऽभ्युदयाय चैवं हि धर्म्म-शास्त्रमर्य्यादानतिक्रमोऽपि राष्ट्रिय संसदा विधेयः येन कायस्येव मनसोऽपि स्वास्थ्यं भविष्यतीति विरमामो विस्तरात्।

---

## अहोमहाविभूतिमत्त्वम्।

इह जगति ईश्वरस्यायं प्राकृतिको नियम एव निबद्धो दृश्यते यत् कदाचित् रजसो बाहुल्ये जगतः सृष्टिसंख्या समेधते। सत्त्वविवृद्धौ जनसुख-समृद्धिरुज्जृम्भते। तमसश्च प्राबल्ये मोहसन्ततिरातन्यते, यदनन्तरं क्रमशःद्वया-वस्थायाः प्रारम्भक्रमेण पूर्णः प्रलय एव जायते। तदनन्तरं पूर्व क्रमेण यथापूर्वं सृष्टिस्थितिभङ्गा भवन्ति ।। यस्य कृते श्रुतिरपि भगवती शब्दभेदेनोच्चैर्गजति—

"यतो वा इमानि भूतानि जायन्ते येनजातानि जीवन्ति यत्प्रयन्त्यभिसंवि-शन्ति, तद्विजिज्ञासस्व तद्ब्रह्म"। स्मृत्यादिवादा अपि विषये बहुधा विद्यन्ते—

जन्माद्यस्य यतः" २।१।१। (ब्र०सू०)

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।

अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः।।"

इति नियमानुसारमेवेह संसारे सर्वस्मिन्नपि विभागे सर्वोऽपि लौकिकोऽ-लौकिको वा व्यवहारः सर्वदा सर्वथा समुज्जृम्भते। सम्प्रतीह भारते कला-

वपि युगेऽस्मिन् 'अहान्तर्दशान्तर्दशावत् चतुर्णामपि युगानां समुद्रेको दृश्यते । भगवता मनुनापि अयमेव भावःस्फुटमुदीरितोऽवलोक्यते । तथाहि—

"कलिःशयानो भवति सञ्जिहानस्तु द्वापरः ।
चेष्टमानस्त्रेता भवति कृतं सम्पद्यते चरन्॥"

एवं यदि युगपरिभाषा स्यात्, स्यादपि कलावेव चतुर्णां युगानामन्तर्भावः। अर्थनीतौ, राजनीतौ, यथा सर्वतोऽभ्युदयविवृद्धय आन्दोलनं भवति; तथाऽस्माकं धर्म्मनीतावपि वैगुण्यन्नापतेदिति परमेश्वरेणेह भारते बहवः सत्पुरुषाः समुद्भाविताः । यदा पाश्चात्यानीश्वरवादबहुलसभ्यतासम्पर्केणेह देशे जनानां विवेकशक्तिर्विगुणितप्राया समजनि, परमात्मनि भारतीयसंस्कृतौ धर्मशास्त्रीयविधाने च श्रद्धाराहित्यं विजृम्भमाणं दरीदृश्यते स्म, तदैव योग्या ईश्वरभक्ता धर्मोपदेशकाश्च प्रादुर्भूताः । यदा च पाश्चात्यविज्ञानान्धीकृतचक्षुष्का विचक्षणा भारतीययुवकाः स्वधर्मतः पराङ्मुखवृत्तिमाशिश्रयिषव इवासन्, तदैव श्री भारतधर्म्ममहामण्डलरत्नभूताः श्रद्धेयश्रीस्वामिदयानन्दमहाराजाः सनातनधर्मप्रचारे प्रवृत्ताः । अशेषविद्याविजृम्भितवैदुष्या महामहोपाध्यायाः श्रीलक्ष्मणशास्त्रिद्राविड़महोदयाश्च तदानीमेव सर्वतोऽवहेलयमाने संस्कृतविद्वत्समाजे सनातनधर्मप्रचारार्थं समस्तभारते महदान्दोलनं कृतवन्तः । एभिर्महानुभावैः सनातनधर्मस्य संस्कृतविद्यायाश्च यथाशक्ति साधु समभ्युदयं संरक्षणञ्च कृत्वा सनातनधर्मे जनानां श्रद्धा दृढ़तरा आसञ्जिता । तत्र स्वामिदयानन्दमहोदया वैज्ञानिकपद्धत्या श्रीसनातनधर्मस्योपयोगितामावश्यकतवञ्च व्याख्यातवन्तः । तेषां धार्मिकं व्याख्यानमधिकं प्रभावशालि श्रोतृचित्ताकर्षकं विज्ञानसमर्थितञ्च भवति स्म । तेषां व्याख्यानं श्रुत्वा आधुनिकविकृतबुद्धयो धर्मश्रद्धाविरहिताः परित्यक्तभारतीयार्य्यमर्य्यादा अपि मानवाः सनातनधर्मानुरागिणो भूत्वा आर्यमर्यादाधर्मसेवापरायणा भवन्ति स्म । तैर्लिखिता बहवो धर्मग्रन्था व्याख्यानोपयोगिनो धर्मश्रद्धोत्पादका विद्यन्ते । तेषु 'धर्मविज्ञान' नामकं पुस्तकन्तु सर्वोपयोगि सर्वदा सनातनधर्मिभिः स्वपार्श्वे स्थापनीयं सर्वथा परिशीलनीयञ्च विद्यते । स्वर्गीया धर्मप्राणाः म० म० पं० लक्ष्मणशास्त्रिद्राविड़महोदयाश्च सर्वतन्त्रस्वतन्त्रा अद्भुतमहिमानः लोकसंग्रहदक्षाः संस्कृतविद्यायां बृहस्पतिकल्पा बभासन् । तेऽपि अद्वैतसिद्धि-खण्डनखाद्यप्रभृतिवेदान्तग्रन्थानां गौतमसूत्र-वात्स्यायनभाष्यप्रभृतिन्यायग्रन्थानाञ्च सपरिष्कारं संशोधनं टिप्पणादिविभूषितत्वञ्च विधाय प्रकाशनं कृतवन्तः । यद्यपि संस्कृताध्ययनाध्यापनप्रियास्ते कलिकाता-( कलकत्ता ) नगरीयराजकीयप्रधानविद्यालये

संस्कृताध्यापका एवासन्, परन्तु सनातनधर्मह्रासं दृष्ट्वा व्यथितान्तरा स्थानोऽध्यापकतां विहाय राजकीयसम्मानं महामहोपाध्यायपदं च परित्यज्य सर्वत्रैव भारते वर्णाश्रमधर्मप्रचारप्रसङ्गतो भ्रमणं विधाय 'वर्णाश्रमस्वराज्य' नाम्ना धार्मिकमान्दोलनं चालितवन्तः । तेषां जीवनदशायामेव सर्वत्रैव भारते प्रतिप्रान्तं प्रतिमण्डलं 'वर्णाश्रमस्वराज्यसंघ' द्रुमस्य शाखाः प्रशाखाः प्रतिष्ठिताः समजनिषत । यस्यैषम एकादशमहाधिवेशनमिह काश्यां महता समारोहेण समपद्यत ।

एतेषां स्वामि-शास्त्रिमहोदयानाम् स्मृतिः साम्प्रति महाधिवेशनावसरे बलादाकुलयति चेतोऽस्माकम् । इमे स्वनामधन्या महात्मानो जलग्रामीयवर्णाश्रमस्वराज्यसंघमहाधिवेशने वर्णाश्रमधर्मप्रचारपरायणा रात्रिन्दिवमविगणितकायक्लेशम् अत्यधिकं शारीरं परिश्रमं कृतवन्तः । यतश्च व्याधिग्रस्ता धार्मिकप्रचारमनसः शाश्वतिकमेवात्मतिरोधानं कृतवन्तः, इत्यहो ! सनातनधर्मस्य ग्लानिकालः सनातनधर्मिणाश्च विषादस्थानम् । तदद्य कलेः शुभदशाभागो वाऽशुभभागो वेति नाद्यापि निर्णेतुं शक्यते, आशास्यते च शुभदशैव भविष्यतीति ।

यतस्तेषां महात्मनां नामाश्रयेणाद्यापि धर्ममहामण्डल महोपदेशकमहाविद्यालयप्रभृतिसनातनधर्मप्रचारमार्गो वर्णाश्रमस्वराज्यसंघश्च दैनन्दिनं समेधमानमहिमानावेव दृश्येते । अग्रेऽपि सर्वथा तेषां महापुरुषाणां सङ्कल्पितं कृत्यजातं तदनुगाश्चालयिष्यन्त्येवेति निश्चिता धीरस्माकं विद्यते । जलगांवाधिवेशनसमये धर्मप्राणशास्त्रिचरणैर्लिखितस्य पत्रस्य प्रतिलिपिचित्रं तथा स्वामिदयानन्दमहाराजस्य चित्रमपि अस्मिन्नेवाङ्के प्रकाश्यते । अधुना स्वल्पीयांस्येव वचांस्यभिधाय तयोश्चरणाब्जयोः श्रद्धाञ्जलिं विनिवेद्य विरमामो विस्तरात् । ( स० सम्पादकः )

—:o:—

## "कल्पवृक्षः"

सम्पादकः पं० दुर्गाशंकरनागरः ।

उज्जयिनीनगरीतः (उज्जैन) कल्पवृक्षपत्रं प्रतिमासमाध्यात्मिकलेखविशिष्टं सुन्दरं रायलाख्याकारविशिष्टं हिन्दीभाषामयं निःसरति । पत्रस्यास्य सप्तदशवार्षिकस्य द्वितीया संख्या मत्पुरतो विद्यते । पत्रेऽस्मिन् आध्यात्मलेखेषु सर्वेऽपि 'अन्तःकरणकी उच्चस्थिति' 'आन्तरजीवन' प्रभृतयो लेखा वैदुष्यपूर्णा दृश्यन्ते । पत्रमिदम् इयतो वर्षादविच्छिन्नं निःसरति, एतदेवास्योपयोगितां सूचयति ।

सर्वथा आध्यात्मिकत्वप्रधानेऽस्मिन् भारते एवंविधानामपि पत्राणां सर्वदा विद्यते प्रयोजनम्। मुद्रणप्रकाशनादिकमपि शोभनं विद्यते। उद्गमस्थानम् कल्पवृक्षकार्य्यालय उज्जैन सी० आई० इत्यस्ति। कार्य्यालयादस्मात् आरोग्यानन्दसुखशान्तिप्रदायका ग्रन्था अपि प्रकाशिता भवन्ति। जगति प्राकृतिकचिकित्साध्यात्मिकज्ञानवृद्धये एतत्पत्रसम्पादकमण्डलेनैकमाध्यात्मिकमण्डलमपि प्रतिष्ठापितं विद्यते, तत्सदस्येभ्यो विना मूल्यं कल्पवृक्षपत्रमन्यानि चोपयोगीनि पुस्तकानि वितीर्य्यन्ते। सदस्यताशुल्कम् किमस्तीति पत्रादस्मान्न ज्ञायते। कल्पवृक्षपत्रस्य वार्षिकं मूल्यम् २॥) सार्द्धरुप्यकद्वयं विद्यते।



## विहार-संस्कृत-समितेः साभापत्यम्।

मिथिला हि संस्कृतविद्यायाः प्रधानं विद्यापीठं वेदकालत एव प्रसिद्धा विद्यते। यत्र हि विदेहराजस्य जनकस्य राजधान्यां कुरुपाञ्चालानां ब्राह्मणा विद्वांसः समवेता भवन्ति स्म। यत्र ब्रह्मविद्याविचारे विदुषां वैदुष्यं ब्रह्मवादित्वं सर्वमपि स्फुटतामुपैति स्मेति वृहदारण्यकोपनिषदि निवद्धाज्जनकयाज्ञवल्क्याख्यानकात् प्रतीयते। यत्र हि श्रुत्यामुपनिवद्धया आख्यायिकया संस्कृतविद्याया लोकोत्तरमाहात्म्यमुद्घोष्यते। तत्रैव विहारप्रान्ते सम्प्रति पाटलिपुत्रे संस्कृतसमितेः केन्द्रं विद्यते। यद्यपि तत्र संस्कृतशिक्षायाः कोऽपि महाविद्यालयो वर्तमानशासकैर्न प्रतिष्ठापित इति विदुषां मनस्तापं जनयत्येव, तथापि मिथिलायाः प्राचीनं गौरवं स्मारं स्मारं महाराजाधिराजस्य द्वारवङ्गनरेशस्य श्रीभारतधर्ममहामण्डलादिधार्मिकसंस्थानादिभिस्तदीयं धर्मप्रचारसाहाय्यमवलोकमवलोकं चेतः प्रसादमायात्येव। अद्यत्वे विरलसंस्कृतप्रचारेऽपि भारते मिथिलायां प्राचीना संस्कृतप्रचार-परम्परा अनुच्छिन्नैव दृश्यते। वर्तमानमहाराजाधिराजस्य मिथिलाधिपतिमहोदयस्य पूर्वपुरुषैः संस्कृतप्रचारे बहु प्रयतितं विद्यते। सम्प्रत्यपि प्रतिवर्षं तत्र राजधान्यां संस्कृतविदुषां दानमानादिभिः सत्कारो भवति। अधुना पटनानगरस्थविहारसंस्कृतकन्भोकेशनसदस्याः स्वसमित्याः सभापतिपदे सर्वसम्मत्या हिजहाईनेस महाराजाधिराज सर श्रीकामेश्वरसिंहशर्म्माणं मिथिलाधिपतिं पञ्चवर्षावधिकालस्य कृते निर्वाचितवन्त इति परमहर्षास्पदम्। तेन तेषां सद्विवेकस्य परिचयेन सह भारत्याः संस्कृतगिरोऽभ्युदयस्य च प्रत्याशा प्रदीप्ता जाता। यतो हि तत्र पदे महाराजाधिराजस्य द्वारवङ्गेशस्याधिष्ठानेन पुनरपि मिथिलायां प्राचीनेन संस्कृतगौरवकालागमेन सह पुष्पपुर्य्यां वर्तमानशासकानां राजधान्यां संस्कृतविश्वविद्याल

योऽवश्यं प्रतिष्ठापितः स्यादिति । अस्तु, सम्प्रति वयं विहार-संस्कृतसमिति-सद्स्येभ्यो योग्यस्थाने योग्यतरस्यैव निर्वाचनस्य कृते भूरिशो धन्यवादान् वितरन्तो द्वारवङ्गेशमहाराजञ्चाभ्यर्थयामहे यत् विहारसंस्कृतसमितिसभापतिपदमधिष्ठाय स्वाधिकारानुरूपं स्वप्रतिष्ठानुकूलञ्च संस्कृतभारतीसमुन्नतिं विदधत् गीर्वाणवाणीसेवकानां सर्वेषामेव विदुषां ब्राह्मणानामाशीर्वादभाजनं भवत्विति शिवं भूयात् ।—( कश्चन विहारप्रान्तीयः )

---

## आर्यमहिलापत्रिकायाः सत्यङ्कः ।

परमपवित्रे प्राचीनविद्यापीठेऽस्मिन् वाराणसीक्षेत्रे भारतीयसंस्कृतिसंरक्षिकाणामार्य्यमहिलानां सर्वथा हिताधायिका आर्य्यमहिलामहापरिषन्नामिका एका जागरूका संस्था प्रतिष्ठापिता विद्यते । या च भारतीयानामार्य्यमहिलानां विविधं हितकरमभ्युदयकरं शिक्षासमेधकं रक्षाविधायकं दीनानाथानां विधवानामार्य्यनारीणाञ्चान्नवस्त्रादिना पोषणादिकं प्रशंसनीयमत्यावश्यकं कृत्यजातं कुर्वती सर्वमान्या सकलशिक्षितजनस्तुत्या एकाऽद्वितीया संस्था विद्यते ।

तस्याः सत्स्वपि विविधविभागेषु एको मुख्य आर्य्यमहिलामहाविद्यालयो नाम (हाईस्कूल) शिक्षाविभाग आर्य्यमहिलासु धार्मिकशिक्षाविस्तारं विदधत् साहित्यसमाजशिल्पसंगीतादिकलानामपि शिक्षां तासु विस्तारयति । तस्यैव मुखपत्ररूपेण "आर्य्यमहिला"नाम्नी विविधचित्रचमत्कृता धार्मिकसाहित्यिकसामाजिकादिविषयकलेखविभूषिता सर्वथा चित्ताकर्षकरी मासिकी हिन्दीपत्रिका प्रतिमासं स्वनामधन्यानां महतां विदुषां विदुषीनाञ्च लेखराजिभी राजिता पाठिकानाञ्च पाठकानाञ्च मनोविनोदं शिक्षाविस्तारं च विदधाति । मसृणमञ्जुलमनोहर-कर्गजपृष्ठेषु सुन्दरस्वच्छसरलहिन्दीभाषामयी निःसृत्य सर्वप्रान्तेषु भारते समुपसर्पति । यस्या वार्षिकं मूल्यं ५) रूप्यकपञ्चकमेवास्ति । तस्या एव पत्रिकायाः सतीनामकोऽयमङ्कः सर्वथा प्रशंसनीयो भारतीयानामार्य्यमहिलानां दिव्यादर्शानुकरणीयचरितप्रकाशकैर्विविधैर्लेखैः समन्वितो विद्यते। अङ्केऽस्मिन् 'अपनी बात' सतीचरित्रसंस्मरण' प्रभृतयः सम्पादकीया विचारा अन्येषां च मैथिलीशरण-हरिऔध पं० श्री ईशदत्तद्विजेन्द्रश्री सरयूप्रसादशास्त्रिप्रभृ तिविदुषां कविताः 'आदित्य' 'प्र ाद' 'सुदर्शन' 'विशारद', 'विजय' 'सहृदय' प्रभृतीनाञ्च लेखा भाषमायाः ओजःप्रसादमाधुर्यादिगुणगुम्फिताः शिक्षाप्रदाः पठनीयाः सन्ति । आर्य्यनारीणां कृते

सत्यङ्कोऽयम् संग्रहणीयो विद्यते । अत्र सत्याः सावित्र्याश्चरितमेवेदृशं विद्यते, यस्य पठनेनार्य्यमहिलानां शुद्धं पवित्रं हृदयं पवित्रतरं भवद्दाम्पत्य-प्रेमास्पदीभूतं सद् आर्य्यनारीधर्म्ममाहात्म्यमूल्यवेदि स्वजीवनं सार्थकं विधातुं समर्थं स्यात् । किमुतान्येषामुन्नतोन्नततरभावविभूषितानां लेखानां पठनेनेति सर्वानेव भावुकान् ब्रूमः-स्वभगिनीदुहितृप्रभृतिभ्योऽङ्कमिमं पठितुं समर्पयन्तु इति । सर्वगुणसम्पन्नस्य सप्तत्युत्तरशतद्वयपृष्ठात्मकस्य सुपरायला-कारविशिष्टस्य चित्रपूर्णस्याप्यस्याङ्कस्य मूल्यं रुप्यकद्वयं विद्यते । सम्पादकौ

पं० रमेशदत्तपाण्डेयः बी० ए०, ठाकुर आत्माप्रसादसिंहश्च । प्राप्तिस्थानम् आर्य्यमहिला आफिस श्रीभारतधर्ममहामण्डल जगतगञ्ज बनारस ।

( समालोचकः)

---

## सनातनधर्मप्रचारः ।

श्री भारतधर्ममहामण्डलस्य प्रचारविभागतः धर्मप्रचारार्थं महामहोपदेशकपण्डितगङ्गाविष्णुशास्त्री साहित्यनिधिः, वेदरत्नम् तथा पण्डित बलदेवदत्तठाकरमहाशयश्च नवम्बरमासे अलीगढ़नगरे पञ्चदशदिनानि यावत् वर्णव्यवस्था मूर्तिपूजा श्राद्धपुराणादि महत्त्वप्रतिपादकं महत् प्रभावशालि भाषणं दत्तवान् । उक्तवेदरत्नमहोदयस्य वैदुष्यपूर्णं वैज्ञानिकं युक्तिपूर्णं भाषणं श्रुत्वा तत्रत्या जनता अतीव मुग्धा संजाता । श्रीमतः पण्डित-श्रीधरलालभार्गव-( बारएट ला ) महोदयस्य समुत्साहेन तत्र महामण्डलस्य शाखासभायाः स्थापनं संजातम् । एवमेव गाजीपुरमण्डले महोपदेशकः पण्डित चेतरामत्रिपाठी, महामहोपदेशकः पण्डितगंगाविष्णुःशास्त्रिमहोदयश्च सप्तदिनं यावत् स्वमधुरेण भाषणेन तत्रस्थसनातनधर्मावलम्बिजनतान्तःकरणेषु समुत्साहमुत्पादितवान् । एवं विद्वांसः धर्मप्रचारकाः प्रचारं कुर्वन्तीति ।

---

## प्रलयस्वरूपम् ।

( कस्मिंश्चिद्व्याकरण-टीकाग्रन्थे )

प्रलये नियतकालपरिपाकाणां सर्वप्राणिकर्म्मणामुपभोगेन प्रलयालीन-सर्वजगत्का माया चेतने ईश्वरे लीयते । लयश्चाऽयं पुनः प्रादुर्भावफलको नाऽत्यन्तिको नाशः, उत्तरसर्गानुपपत्तेः । नाऽपि सर्वथाऽभानं प्रातिभासिकमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः । किन्तु सुप्तेव तिष्ठति कार्य्यप्रवृत्त्यभावात् । स्वप्रतिष्ठेश्वरस्याऽत्यन्तनिर्विकल्पकतया तद्बलाद् भासमानाऽप्यभासप्रायैव । —( कश्चन भिक्षुः )

---

# "कामना"

लेखकः—पाण्डेयः श्रीकुसुमाकर शर्मा साहित्याचार्य्यः । ( पटना )

( १ )

अमल-कमल-वासा
चारु-चन्द्र-प्रकाशा,
विधुरिव निज-भासा—
रिक्थ¹-पुष्प-प्रकाशा ।

विधि-नर-शिव-दासा
विश्वपाः कुन्दहासा,
निधि-हृदय-निवासा
पातु गामिन्दिरा सा ॥

( २ )

नृप-कलह-विलासाऽ-
दृश्य-मञ्जु-प्रहासा,
विहित-नव-नृपाशा
कीर्त्यते, चंचलासा² ।

युग-युग-नव-वेषा
पालनार्थ-प्रयासा,
'कुसुम'-जित-सदेशा³
पातु "पत्रं⁴" वरा सा ॥



नोट—१ रिक्थम् = धनम् । २ चंचलासा = चंचल आस आसनं स्थितिर्यस्याः सा । ३ सदेशा = सदेशः समीपस्थानं यस्याः सा । ४ पत्रं = सूर्य्योदयमिति भावः ।

—लेखकः ।

# ब्राह्मणानां श्रेष्ठत्वं जन्मना वर्णव्यवस्थाच

[ निबन्धक—पं० दीनानाथशर्मा शास्त्री सारस्वतः मुलतान ]

कीदृशी दुर्दशा ब्राह्मणहिंसकानां निर्दिष्टा वेदभगवता। अत एव महाभारते—'ब्राह्मणो नाऽवमन्तव्यः सदसद्वा समाचरन्' आदि पर्व० १९०।१३॥ 'तद् वै राष्ट्रमास्रवति नाव भिन्नामिवोदकम्। ब्रह्माणं (ब्राह्मणं) यत्र हिंसन्ति तद्राष्ट्रं हन्ति दुच्छुना' अथर्व० ५।१९।८ हिंसायोग्यतायामेव ब्राह्मणहिंसा निषिद्धा—इति जन्मना ब्राह्मणादिवर्णव्यवस्था सिद्धा। गुणकर्म्मणा तु मतायां, हिंसायोग्यत्वे ब्राह्मणत्वमेव कुतो वादिमते। नहि ब्राह्मणगुणकर्म्म हिंसायोग्यम्। हिंसा-योग्यतायामपि तन्निषेधाज्जन्मना वर्णव्यवस्था सिद्धा वेदनये। अत एव वेदे—'न ब्राह्मणो हिंसितव्यो' अथर्व० ५।१८।६ एतदनुवादो मनुस्मृतौ—'न जातु ब्राह्मणं हन्यात् सर्व्वपापेष्वपि स्थितम्। राष्ट्रादेनं बहिष्कुर्य्यात्' मनु० ३८०। अनेनाऽपि वेदानुवादकमनुवचनेन जन्मना वर्णव्यवस्था सिध्यति, न गुण-कर्म्मणा। गुणकर्म्मणा वर्णे मते तु सर्व्वपापेषु स्थितस्य ब्राह्मणत्वमेव कुतः?। यदि च न ब्राह्मणत्वम्; तर्हि वधदण्डमपहाय कथं तस्य देशनिर्व्वासः। तेन मनोरपि वेदानुकूलं 'नरेषु ब्राह्मणाः स्मृताः' १।९६ इति, 'अविद्वाँश्चैव विद्वाँश्च ब्राह्मणो दैवतं महत्' ९।३१७ 'नाऽध्यापनाद् याजनाद्वा गर्हिताद् वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनाऽम्बुसमा हि ते' मनु० १०।१०३ इति स्वोक्त्या च जन्मना ब्राह्मणे पक्षपातः सूच्यते। अत एव 'सम्भवतोऽर्थस्य' न्याय० १।२।१३ इति सूत्रस्य भाष्ये व्रात्योऽपि ब्राह्मणो निर्दिष्टः।

'न ब्राह्मणवधाद् भूयानधर्म्मो विद्यते भुवि। तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्' मनु० ८।३८१। अनेन ३८० श्लोकानुसारं पापयुक्तस्याऽपि ब्राह्मणस्य मनसाऽपि वधाऽभावचिन्तनेन जन्मना वर्णः सिद्धो नतु गुणकर्म्मणा। नहि ब्राह्मणगुणकर्म्म सर्व्वविध-पापस्य (?)। 'ब्राह्मणा हि सदा रक्ष्याः सापराधापि नित्यदा' महाभारते आदिपर्वणि १।९२।३६॥ 'स्तेनो हिरण्यस्य सुरां पिबँश्च गुरोस्तल्पमावसन् ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति' ५।१०।९ इति छान्दोग्योपनिषदि, निरुक्ते ६।२७।२ 'सप्तमर्य्यादाः' इति मन्त्रव्याख्यानाऽवसरे ब्रह्महत्या महापातकेषु गणिता। 'नहि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा' महाभारते आदिपर्व्व० २९।२ इति गरुडवचनं निषादाचारब्राह्मणं निगीर्णवतः॥ 'प्रतिलोमं वै तद् यद् ब्राह्मणः क्षत्रियमुपेयाद्, ब्रह्म मे वक्ष्यति' बृहदारण्यक० ४।१।१५ शतपथचतुर्द्दशकाण्डे।

'य एनं ( ब्राह्मणं ) हन्ति मृदुं मन्यमानो देवपीयुर्धनकामो न चित्तात्। स तस्येन्द्रो हृदयेऽग्निमिन्धे उभे एनं द्विष्टो नभसी चरन्तम्' अथर्व० ५।१८।५ इति ब्राह्मणहननेन हृदयेऽग्निदाहो नभसोरपि च द्वेष्टृत्वमुक्तम्॥ 'माकीं ब्रह्मद्विषो वनः' अथर्व० २०।२२।२, ऋ० ८।४५।२३ हे इन्द्र! त्वं ब्राह्मणद्वेष्टॄन् मा भज। ब्राह्मणस्य सामर्थ्यं श्रोतव्यम्—'जिह्वा ज्या भवति, कुल्मलं वाङ्, नाडीका दन्तास्तपसाऽभिदिग्धाः। तेभिर्ब्रह्मा ( ब्राह्मणो ) विध्यति देवपीयून् हृद्बलैर्धनुर्भिर्देवजूतैः' अथर्व० ५।१८।८ निगदव्याख्यातोऽयं मन्त्रः।

'ब्रह्मद्विषो जहि' सामवेद० ऐन्द्रपर्व० २।९।१ ऋ० ८।६४।१ अथर्व० २०।९३।१। 'ब्रह्मद्विषे शरवे हन्तवा उ' ऋ० १०।४२५।६ अत्र सर्व्वत्र ब्रह्मशब्देन ब्राह्मणो गृह्यते। तथा च शतपथे—५।१।१।११ 'ब्रह्म हि ब्राह्मणः, क्षत्र ँ राजन्यः' शत० ५।१।५।२–३, ४–५, ११–१२। "समानार्थावेतौ ब्रह्मन्शब्दो ब्राह्मणशब्दश्च। अतश्च समानार्थौ। एवं ह्याह—कुतो नु चरसि ब्रह्मन्! कुतो नु चरसि ब्राह्मण! इति तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः" महाभाष्ये ५।१।७ सूत्रे प्रथमाह्निके। अत एव निरुक्ते ६।११।१ 'ब्रह्मद्विषे' इत्यस्याऽर्थो 'ब्राह्मणद्वेष्ट्रे' इति कृतः। 'ब्रह्मा विप्रः प्रजापतिः' अमरकोषे तृतीयकाण्डे नानार्थवर्गे ११४। 'ब्रह्मद्विषे' अ० ८।४।२ ब्राह्मणसे द्वेष करनेवाले—इत्यार्यसामाजिकः प० राजारामशास्त्री। एवं 'क्षत्रस्याऽतिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः। ब्रह्मैव सन्नियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम्' मनु० ९।३२० 'ब्रह्मराजन्याभ्या ँ शूद्राय चार्याय च' यजुः २८।२ 'अस्मै ब्रह्मणेऽस्मै क्षत्राय' यजुः १८।४४ अत्राऽपि 'ब्रह्म' इत्यनेन ब्राह्मणो गृहीतः। 'ब्रह्मशब्दो ब्राह्मणशब्दपर्य्यायोऽस्ति' कुतो नु चरसि ब्रह्मन्। तस्मै मा ब्रूया निधिपाय ब्रह्मन्! इत्यादिप्रयोगादिति सायणः ऋ० १०।८५।३ भाष्ये। 'ब्रह्मेति ब्राह्मणानां नामाऽस्ति' इति स्वा० दयानन्द ऋग्वेदादिभाष्यभूमिकायां ८७ पृष्ठे। 'तद् ब्रह्म' यजुः ३२।१ अत्र परमात्मा ब्राह्मणरूपो मतः, अत एव पुराणादिके ब्राह्मणानां विष्णुत्वेन वर्ण्णनम्। 'विष्णूयति द्विजम्' इत्युदाहरणं प्रसिद्धमेव।

'ब्रह्मद्विषं द्यौरभिसन्तपाति' अथर्व० २।१२।६ स्पष्टम्। 'वृश्च-प्रवृश्च-संवृश्च, दह-प्रदह-सन्दह। ब्रह्मज्यं देवि! अघ्न्ये! आमूलादनु सन्दह। यथायाद् यमसादनात् पापलोकान् परावतः' अथर्व० १२।११।१–२–३ [ १२।५ (७)। ६२–६३–६४ ] 'छिन्धि आछिन्धि प्रच्छिन्ध्यापि क्षापय क्षापय। आददानमाङ्गिरसि ब्रह्मज्यमुपदासय' अथर्व० १२।५।५१–५२ कीदृशं दन्तघर्षणं कृतं वेदेन ब्रह्मज्याय ( ब्राह्मणतिरस्कर्त्रे )॥ 'तानि सर्वाणि अपक्रामन्ति ब्रह्मगवीमाददानस्य जिनतो ब्राह्मणं क्षत्रियस्य' अ० १२।५ (२)। ११ अत्र ब्राह्मणतिरस्कर्त्तुः क्षत्रियस्य तेजोवाग्-धी-धर्म्म-राष्ट्र-यशो-द्रविणाऽऽयुः-प्रजा-पशूनां नाशः प्रदर्शित एतन्मन्त्रसध्रीचीनेषु

७-८-९-१० मन्त्रेषु ॥ 'एवा त्वं देवि! अघ्न्ये! ब्रह्मज्यस्य कृतागसो देवपीयोरराधसः। वज्रेण शतपर्वणा, तीक्ष्णेन क्षुरभृष्टिना, प्र स्कन्धान् प्र शिरो जहि' अथर्व० १२।५ (७)। ६५-६६-६७ भगवान् वेदो ब्रह्मज्यस्य शिरश्छेदनं ब्रूते। कीदृशो वेदस्याऽपि ब्राह्मणे पक्षपातः। पश्यतु ब्राह्मणद्रोग्ध्री * वैदिकमानिनी 'बाबूपार्टी' प्रमाणानीमानि। एतदनुकूलमेव भागवतपुराणे भगवान् कथयति—'तस्माद् ब्रह्मऋषीनेतान् ब्रह्मन्! मच्छ्रद्धयाऽर्चय। एवं चेदर्चितोऽस्म्यद्धा, नाऽन्यथा भूरिभूतिभिः' भाग० १०।८६।५७ एवं पुराणान्तरेषु महाभारते च शतशोऽध्याया ब्राह्मणस्तुतिभिराचिताः (व्याप्ताः)।

'विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः' याज्ञवल्क्यो व्यवहाराध्याये ३०४ श्लो०। एतेन प्रतीयते—याज्ञवल्क्यस्मृतावपि जन्मना वर्णो मतः। अन्यथा ब्राह्मणकर्म्म कुर्वाणं स कथं दण्डयेत्?। गुणकर्म्मकृतव्यवस्थया यदा वादिनो वर्णनिश्चयं पञ्चविंशतिवर्षेऽन्यस्मिन् वा काले कुर्व्वते; तर्हि ते प्रष्टव्याः—किं तस्मात् पूर्व्वं तस्मिन् पुरुषे कोऽपि वर्ण्णो भवति नो वा?। यदि न भवति; तर्हि त्वद्—यज्ञोपवीतावस्थाभेदः कथमभूत् प्राक्?। यदि कथ्येत—तस्य वर्णः प्राग् भवतीति। तर्हि वाच्यम्, जन्मना वा?। यदि जन्मना; तर्ह्यस्मत्पक्षः सिद्धः। कर्म्म तु तदा तस्य न भवति, अत एव 'कर्म्मणा' इत्युत्तरन्तु अनन्वितम्। यदि कथ्येत, स जन्मवर्णः परिवर्त्तते इति। तर्हि यज्ञोपवीताद्यवस्थाऽपि किं पुनः परिवर्त्तते?। किं पञ्चविंशतिवर्षोत्तरं सा गर्भाष्टमाद्यवस्था प्राप्तुं शक्या?। यदि न, तर्हि जन्मना वर्णः सिद्धः। अन्यथा उपनयनादिकेन वर्णविनिश्चयोत्तरमेव भवितव्यम्।

पुनराचष्टेऽग्रे वेदः—'लोमानि अस्य (ब्राह्मणतिरस्कर्त्तुः) संछिन्धि, त्वचमस्य विवेष्टय। मांसान्यस्य शातय; स्नावान्यस्य संवह, अस्थीन्यस्य पीडय; मज्जानमस्य निर्जहि, सर्व्वाण्यस्य अङ्गा पर्वाणि विश्रथय' अथर्व० १२।५ (७)। ६८-६९-७०-७१। कीदृशं दन्तघर्षणं कृतं वेदेन ब्राह्मणतिरस्कर्त्तुः कृते। तर्हि यदि पुराणैर्ब्राह्मणानामत्यन्तस्तुतिः कृता भवेत्; तद् वेदानुयायिषु तेषु किमाश्चर्य्यम्?। परं दुरात्मान आक्षेपकाः कथयन्ति, यत्—तानि ब्राह्मणैः प्रणीतानि, अत एव तेषु तैः स्वतोऽभूया प्रक्षिप्ता। परमधुना ते वेदानपि ब्राह्मणैः प्रणीतान् मन्यन्ताम्; परमात्मानं वा ब्राह्मणपक्षपातिनं मन्यन्ताम्। 'स एतेन वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयांसं कुरुते। यो वै राजा ब्राह्मणाद् अबलीयान्, अमित्रेभ्यो वै स बलीयान् भवति' शतपथ० ५।४।४।१५।

पुनरपि वेद आचष्टे—'अनुगच्छन्ती प्राणानुपदासयति ब्रह्मगवी ब्रह्मज्यस्य' अ० १२।५।२७ ब्राह्मणको सताने वालेके प्राणोंको क्षीण कर देती है—जब

* ब्राह्मणद्रोग्ध्री। ब्राह्मणेभ्यो द्रुह्यतीत्यर्थः। तृचि ङीप्।

ब्रह्मगवी उसके पीछे चलरही है—इत्यार्य-सामाजिको राजाराम शास्त्री। 'अवास्तु-मेनमस्तमप्रजसं करोत्यपरापरणो भवति क्षीयते, य एवं विदुषो ब्राह्मणस्य क्षत्रियो गामादत्ते' अ० १२।५।४५-४६ बिन घर, बिन मिलकीयत, बिन सन्तान के वह उसको बना देती है। वह अगले पिछलेके विना हो जाता है और क्षय हो जाता है—जो क्षत्रिय ऐसा जाननेवाले ब्राह्मण की गौ को लेता है' इति पं० राजारामः।

'तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति' अथर्व० १३।३।१ इति विद्वद्—ब्राह्मणपीडनेन परमात्माऽपराधः। 'विद्वांसम्' इति ब्राह्मणस्य विशेषणं साधयति यद्—वेदोऽविद्वांसमपि ब्राह्मणं, ब्राह्मणं मन्यते। विद्वत्तामात्रेणैव ब्राह्मणत्वे वेदमते, मते सति तत्र 'विद्वांसम्' इति विशेषणं व्यर्थं पुनरुक्तं वाऽभविष्यत्। यतो हि विशेषणं व्यभिचारे सार्थकं भवति। असम्भवे अव्यभिचारे च हि न भवति विशेषणम्। यथा हि कौमुद्याम्—'अनुदात्तोपदेशवनतितनोत्यादीनाम्' इत्यादिसूत्रे 'अनुनासिकान्ते' ति विशेषणं वनतीतरेषामेव मतम्, न वनतेः, तस्य नित्यानुनासिकान्तत्वात्। एवं 'स्यसिच्सीयुट् तासिषु' इति सूत्रेऽनुवृत्तमार्धधातुकपदं सीयुटो विशेषणम्। यतः सीयुट्येव आर्द्धधातुकत्वस्य व्यभिचारो भवति विधिलिङि, नेतरेषां तद्विशेषणम्। तेषामार्द्धधातुकत्वाऽनपायात्। एवं महाभारतयुद्धे युधिष्ठिरेण प्रोक्तम्—'अश्वत्थामा हतो नरः' अत्र 'नरः' इति विशेषणमश्वत्थामहस्तिव्यभिचारे एव सार्थकमभवद्; येन द्रोणाचार्य्येण स्वपुत्रस्य मृत्युर्ज्ञातः परं 'मनुष्येण युधिष्ठिरेणाऽनृतमुदितम्' इति महाभारते युधिष्ठिरस्य 'मनुष्य' इति विशेषणं न दृश्यते। यतस्तत्र न कश्चिद् युधिष्ठिरोऽमनुष्यो (गजादिः) ववृते; येन तद्व्यभिचारप्रसङ्गः स्यात्; यदुद्धरणार्थं 'मनुष्यो युधिष्टिरः' इति विशेषणं देयं स्यात्। एवमादिदिशा 'विद्वासं ब्राह्मणम्' इति वेदविशेषणं तदा सार्थकम्; यदा वेदमते अविद्वानपि ब्राह्मणो ब्राह्मणो मन्येत। यदि वेदेनाऽविद्वानपि ब्राह्मणो मतस्तर्हि वेदमते जन्मना वर्णव्यवस्था सिद्धा। तर्हि जन्मसिद्धवर्णव्यवस्थारूपवैदिकसिद्धान्तं वैदिकमानिनः कथं विरुन्धते?। यदि विरुन्धते; तर्हि न ते वैदिकधर्म्माणः किन्तु स्वेच्छाधर्म्माण इति सिद्धम्।

'ब्रह्मद्विषे शोचय क्षामपश्च' अथर्व० २०।३६।८ ब्रह्मद्विषे—ब्राह्मणद्विषं दग्धुमित्यर्थः ('क्रियार्थोपपदस्ये'ति चतुर्थी) क्षां—पृथिवीम् अपश्च—अन्तरिक्षञ्च शोचय—दीपयेति सायणः। 'निररत्नौ मघवा तं दधाति, ब्रह्मद्विषो हन्ति' अथर्व० २०।९६।४। 'ब्रह्मद्विषो विष्वगेनो भरेरत' ऋ० १०।३६।९ ब्राह्मणानां द्वेष्टारोऽस्मदीयं धारयन्तु' इति सायणः। 'तपतु रक्षसो ये ब्रह्मद्विषः' ऋ० १०।१८२।३ ये ब्राह्मणद्वेष्टारो राक्षसास्तान् बृहस्पतिर्दहत्वित्यर्थः। एतेन प्रबन्धेन ब्राह्मणानां श्रेष्ठता जन्मना वर्णव्यवस्था च साधिता। अग्रे च कर्म्मणा वर्णव्यवस्थायां हानिं निरूप्य पुनरपि जन्मना वर्णव्यवस्था साध्येत। (क्रमशः)

# छात्रजीवनम्।

ले॰ केदारनाथत्रिपाठी छात्रः

अप्यशेषाशापरिवारिताः स्वदेशाभ्युन्नतौ मूलभूताश्छात्राः सावधानं विचारयन्तु, विश्वम्भरायामस्यां परमात्मना बहुविधानि वस्तूनि सृष्टानि वर्तन्ते। तत्रेयं मानुषी सृष्टिः सर्वापेक्षया गरीयसीति नाविदितम्, यतो हि बहुमूल्या मनोहराश्च पदार्था मनुष्याणामुपभोगसाधनत्वमेवाश्रयन्ते, अगाधज्ञानागारभूताश्चत्वारो वेदा मनुष्याणामेव कृते परमात्मना प्रतिपादिताः। मनुष्येष्वपि विद्यावतां का प्रतिष्ठेत्यपि नास्त्यविज्ञातम् अतएव केनाप्युक्तम् 'स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते, इति। तत्रापि यदि मूलभूतं छात्रजीवनं तर्हि संसारे छात्र-जीवनं सर्वापेक्षयापि प्रियतरमिति कथने नेषदप्यनौचित्यम्। छात्रजीवनं हि प्रवासयात्रायां मार्गशुल्क इव जलधिमुक्तितीर्षूणां कृते पोत इव पादपादिसंवृद्ध्यै तोयसिञ्चनादिरिव संसारयात्रायां महोपकारि वर्त्तते। अतश्छात्रजीवनं सविचारं निर्वाह्यं छात्रैः। छात्रजीवनमिदम् ब्रह्मचर्याश्रमस्यापरमभिधेयमिति कथनस्यापि नास्त्यत्युक्तीय्यादिदोषाधायकत्वम्। एतावता ब्रह्मचर्य्याश्रमच्छात्रजीवनयोस्तादात्म्यसम्बन्ध एव प्रतीयते, तथा चैतदवश्यमुररीकर्तव्यम्। छात्रजीवने ब्रह्मचर्य्यपालनस्य वरीवर्त्ति महदावश्यकत्वमिति अत्र नाविश्वासलेशोऽपि समुत्पादनीयः। प्रातः स्मरणीयानां शङ्कराचार्यप्रभृतीनां जीवनचरित्रज्ञानताञ्जनानां नाल्पमप्यस्ति तिरोहितं ब्रह्मचर्य्यमहत्त्वम्। ब्रह्मचर्यप्रभावेणैव तैर्वेदविरुद्धसिद्धान्तमनुसरन्तो जना वेदोक्ताद्वैतसिद्धान्तधारायां निमग्नीकृताः। महाराणाप्रतापगुरुगोविन्दप्रभृतयोऽपि भारतीयप्रसिद्धयोद्धारः श्रुतपूर्वाभिधेयाः कैर्न परिचिता इतिहासादिना, येषां वीर्य्यरक्षाप्रभावेणैवास्माकं हिन्दुधर्मो विद्यमानोऽद्यापि वर्तते। इदानीं वर्तमानो राममूर्तिरपि प्रकटयति ब्रह्मचर्य्यमहत्त्वम् यैश्चैकवारमेव मृत्तरद्वयमपि तत्रत्यवाहकयन्त्रद्वारा पुरो गन्तुमुद्यतीकृतमपि निरुणद्धि। येन नार्हति ततः पदमपि चलितुम्। वयमपि ब्रह्मचर्य्यं पालयन्तो पूर्णां समुन्नतिं सम्पादयितुं शक्ष्यामः। ब्रह्मचर्येण देवा मृत्युमुपाघ्नत, इति भगवती श्रुतिः। एकतश्चतुरो वेदान् ब्रह्मचर्य्यन्तथैकत इत्यादि वाक्यञ्च विशदयति ब्रह्मचर्य्यमहत्त्वम्। अतश्छात्राणां विद्याध्ययनसहकारिभूतं ब्रह्मचर्य्यरक्षणं मुख्यं कर्त्तव्यम्। वीर्य्यरक्षायै कथं किं वा विधेयमित्येतदर्थं सावधानमध्येतव्यम् 'ब्रह्मचर्य्य ही जीवन है, इत्यादि पुस्तकम् विद्यार्थिभिः। इदानीन्तनेषु छात्रेषु न केवलो ब्रह्मचर्य्यनियम एव भग्नोऽपि त्वपरेऽपि व्यवहारा देशमधोनिमज्जयित्रीं पाश्चात्यधारामाटीकमानाः समुपलभ्यन्ते। संस्कृत-

च्छात्रेष्वेतदल्पमात्रयोपलभ्यते परमाङ्गलच्छात्रेषु बाहुल्येन दृश्यते यत्ते स्वगुरुम् किञ्चिदप्यगणयन्तो भृत्यवन्मन्यन्ते । किमेतत् फलदं परमात्मनिभेषु जीवनपावनेषु गुरुवर्य्येषु अनार्य्यमाचरितम् ? विद्यायाः साधनीभूतेषु गुरुसेवाया अपि प्राधान्यमाख्यातं शास्त्रेषु । बहवस्तु एतादृशा अपि च्छात्रा दृष्टिगोचरता-मायान्ति ये गुरुभिराज्ञप्ता ज्वरिता इव जायन्ते । किमनेनाचरितेन स्वयं ते समुन्नताः भविष्यन्ति ? देशं वोद्धरिष्यन्ति ? कदापि नहि । विद्या-ध्ययनञ्चैका तपश्चर्य्या न हि सा क्रीडया लभ्यते, न वा केवलेनापि शारीरिकेण परिश्रमेण, तत्र मानसिकपरिश्रमस्यैव प्राधान्यमपेक्षितम् । न हि समनोविकारा विद्यार्थिनो मनसा परिश्रम्य स्वल्पामपि विद्यामधिगन्तुं शक्नुवन्ति । अतो विद्या-र्थिभिर्गुरुषु परस्परञ्च प्रेमभावमादधानैरखिलमपि मनोविकारमपनुदद्भिर्ब्रह्मचर्य्य-पूर्वकं सपरिश्रमम् विद्यारत्नमिदमासादनीयम् संसारे किमपि कर्त्तुमभिलाषि-भिरिति शम् ।



## कृतज्ञता

ले०—पि० एस० श्रीनिवास अय्यर A. V. M. I.
वेङ्कटरमणायुर्वेद वैद्यकलाशाला मैलापूर मदरास

भूषणानि खल्विमानि सर्वमानवानां—सत्यवादः, धर्माचारः, मातृपितृदेवभक्तिः, गुरुशुश्रूषा, देशभक्तिः, आस्तिकत्वं, इत्यादीनि सद्भिर्विहितानि सत्कर्माणि । एषु कृतज्ञतापि सद्गुणत्वेनैवोपदिष्टा नीतिमद्भिर्विद्भिः । सर्वेषामपि पुण्यकर्मणां प्रवर्तकहेतुः कृतज्ञता । पापकर्मणाञ्च कृतघ्नता । प्रायशः सर्वेऽपि मानवाः कृतघ्नतासहिता एव दृश्यन्ते, पापकर्माणि च कुर्वन्ते । यदाहुः—

"सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥" इति ॥

सर्वेषामपि पापकर्मणां करणे प्रायश्चित्तं विहितम् । कृतप्रायश्चित्तैः पापिभिः सह सङ्गमः कार्य एव । पूर्वकृतपापत्वेन तान् नैव निन्देत् । कृतघ्नं तु कृतप्रायश्चित्तमपि संसर्गितया न परिवसेत् इत्युक्तं शास्त्रविद्भिः—यथा—

"एनस्विभिरनिर्णिक्तैः नार्थं किञ्चित्समाचरेत् ।
कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित् ॥

इति सर्वेषां पापिनां प्रायश्चित्तकरणे सङ्गमः कार्य एव। इति सामान्यविधिमुक्त्वा अस्यापवादमाह—

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्॥

(म० स्मृ० अ० ११ श्लो० १९०)

इति कृतप्रायश्चित्तेनापि कृतघ्नेन संगमः नैव कार्य इत्युक्तम्। अतः कृतघ्नता महापातकत्वेन गणिता। नैवमन्येऽशुभफलदायका यथा कृतघ्नता। ये तु विवेकिनः कृतज्ञतया सहिता वर्तन्ते ते मातृपितृशुश्रूषाम् आचार्यभक्तिं स्वस्वधर्माचारं अन्यान्यपि पुण्यकर्माणि चिन्वाना भवेयुरित्यत्र न कोऽपि संशयः।

मातृपितृभ्यां वयं जनिता अस्माकं पोषण-पालने च तदायत्ते एव, दशमासान् यावत् मातुरेव गर्भे स्थिता चाभूम इति कृतज्ञता येषां मनसि उदेति त एव मातृपितृशुश्रूषां सम्यक् कुर्वन्ति, तयोर्मृतेरनन्तरमपि श्राद्धतर्पणादिकञ्च कुर्वन्ति।

अस्मात् गुरोरेव मया वेदादयोऽधीताः। मम सद्गतिहेतुरयमेव इति यस्य मनस्युदेति स एव शिष्य आचार्यशुश्रूषापरो भवति। अस्माकं जननमारभ्य यावन्मरणं सुखदुःखयोर्विधाता भगवानीश्वर एव। तेन दत्तेन चक्षुषा वयं पश्यामः, श्रोत्रेण शृणुमः, पद्भ्यां यामः, चतुर्विधानामपि पुरुषार्थानां साधकहेतुः शरीरम् ईश्वरेणैवोत्पादितं इति यो दैवकृतमुपकारं सम्यग्विवेचयति स एव दैवे निरन्तरं भक्तिमान् भवति।

अस्यामेव भारतभूम्यां वयं जनिताः, भारतभूमिस्थैरेव द्रव्यैः वयम् आहारादिकं कल्पयामः, जन्मप्रभृति आमरणं अस्माकं निवासोऽत्रैव, इति येषां मनसि धीरुदेति ते न कदापि देशभक्त्या वियुज्यन्ते। एवं एकैकस्मिन्नपि पुण्यकर्मणि कृतज्ञतैव प्रवर्तिका, पापकर्मणाञ्च कृतघ्नता। पूर्वकालीना जनाः प्रायशो कृतज्ञतासहिता आसन्। आधुनिकास्तु परकृतोपकारान् विस्मरन्तः प्रायशः कृतघ्नतान्विता एव वर्तन्ते। सहस्रेषु कश्चिदपि कृतज्ञः पुरुषो दुर्लभ एव। मातृपितृदैवभक्तिरहिताः, आचार्यनिन्दापराः, देवदेशद्रोहिणः, स्वोदरमात्रपूरणव्यग्रा दृश्यन्ते। आचार्यः धनं गृहीत्वा अध्यापयति, अस्माभिश्च धनं दीयते, एवं स्थिते आचार्यापेक्षया वयं श्रेष्ठा इत्याचार्यं भृत्यवत्परिगणयन्ति आधुनिका विद्यार्थिनः, विशेषतश्च आङ्गलाध्यायिनो बालकाः। पठनसमये धूमपत्रादिकमुपयुज्यमाना आचार्यं परिहसन्त एव पठन्ति। तान् दृष्ट्वा संस्कृतभाषाध्येतारो विद्यार्थिनोऽपि तद्वदेव कुर्वन्ति। प्रतिदिनं पाठारम्भसमये मङ्गलश्लोकमपि न पठन्ति। रीतिश्चेयं शास्त्रविदां यत्पाठारम्भसमये मङ्गलश्लोकपठनम्। एवं मङ्गलश्लोकपठनेन अर्थद्वयं संपाद्यते पुण्यं कृतज्ञता इति। मङ्गलश्लोकप्रतिपादित ईश्वरो नमस्कारादिना पुण्यं, तत्तद्ग्रन्थकर्तृभ्यः प्रयच्छति स्मरणेन कृतज्ञताचेति। यथा—

"येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥ इति।

अत्र व्याकरणशास्त्रप्रवर्तकस्य पाणिनिमुनेः स्मरणेन, कृतज्ञता संपाद्यते। व्याकरणशास्त्रेण अस्माकं किञ्चित्प्रयोजनं भवत्येव। अतः व्याकरणशास्त्रं अवश्यं पठनीयम्। तस्य च प्रवर्तकः पाणिनिमुनिः। अतश्च तस्य स्मरणं कृतज्ञतायै भवति। एवं तत्तद्ग्रन्थैश्च अस्माकं कश्चन कश्चनोपकारः भवत्येव। अतस्ते ते ग्रन्थाः पठनीयाः। यतः अस्मदुपकारार्थं तत्तद्ग्रन्थान् कृतवतां महापुरुषाणां स्मरणम् अवश्यकर्तव्यमेवेति कृतज्ञता संपाद्यते।

एवञ्च पाठारम्भसमयेषु अनुदिवसं मङ्गलश्लोकाः पठनीया एव। तच्च आधुनिका विद्यार्थिनः न पठन्ति। अध्यापकाश्च प्रायशो न पाठयन्ति। इति विद्यार्थिनः कृतघ्नाः सन्तः किञ्चिदप्यजानन्तोपि पण्डितंमन्या दृश्यन्ते प्रायश आधुनिककाले। न केवलं विद्यार्थिन एवं भवन्ति। अध्यापकाश्च प्रायशः एवमेव। सम्यग्वर्तमानं शुश्रूषापरञ्चापि शिष्यं बहुधिक्षिपन्ति। पूर्वकाले गुरुशिष्ययोः धर्मः एवमासीत्। यदाहुः सुश्रुताध्याये:—

"ततोऽग्निं त्रिः परिक्रम्य अग्निसाक्षिकं शिष्यं ब्रूयात्। मदनुमतस्थानगमनशयनासनभोजनाध्ययनतत्परेण भूत्वा मत्प्रियहितेषु वर्तितव्यं। अतोऽन्यथा ते वर्तमानस्य अधर्मो भवति अफला च विद्या नच प्राकाश्यं प्राप्नोति॥ अहं वा त्वयि सम्यग्वर्तमाने यद्यन्यथादर्शी स्यां एनोभाग्भवेयं अफलविद्यश्च"। इत्यादि॥ आधुनिकास्तु अध्यापकाः "अहं वा त्वयि सम्यग्वर्तमाने" इत्यादि वाक्यं अननुसरन्तः प्रायशः शिष्यनिन्दापरा वर्तन्ते। तैः कृतं शुश्रूषादिकं च न स्मरन्ति। एवं अध्यापका अपि केचित् दृश्यन्ते। यथा मया ज्ञातं तथैव यदि विद्या शिष्याय दीयते तदा मत्तोप्यधिकतरः शिष्यो भवेत् इति मात्सर्यं जायते केषाञ्चिदध्यापकानाम्। क्लृप्तकालात्ययावेदिनं घण्टारावमाकर्णयन्त एव अध्यापनाद्विरमन्ति अपूर्णेऽप्यध्यापने। इत्यलं अध्यापकानां वृथा क्रोधसञ्जनकैः वाक्यैः।

एवं आधुनिककाले स्वामिसेवकयोः पुरोहितयजमानयोरपि परस्परं कृतज्ञता नास्ति। अस्माभिरेव धनं दीयत इति धनोष्मणा पच्यमानाः केचिन्नराः भृत्यान् बलात् नयन्त्यात्मकार्येषु। भृत्यात् यदि किञ्चित् कार्य्यमपेक्ष्यते तदा तम् संभावयन्ति। आह च महाकविः कालिदासः प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु॥ इति॥ तेषां पोषणादिकञ्च न कुर्वन्ति परिश्रमानुरूपम्।

एवं भृत्या अपि केचित् स्वामिभ्यो धनं गृहीत्वा तान् वञ्चयन्ति। एवमाधुनिककाले गुरुशिष्ययोः, पुरोहितयजमानयोः, पितापुत्रयोः, स्त्रीपुरुषयोः, इत्येवं परस्परं कृतज्ञतालेशोपि नास्ति।

"कृतस्य प्रतिकर्तव्यं एष धर्मः सनातनः।"

इति वाक्यं किञ्चिदपि न स्मरन्ति। यद्येकः ज्ञात्वा अज्ञात्वा वा कश्चिदपकारं करोति तदा तस्य शतगुणाधिकतया प्रत्यपकारं कर्तुमभिलषन्ति सर्वे जनाः। "कृतस्य प्रतिकर्तव्यं इत्येव वाक्यं तेऽपि वदन्ति"।

"उपकारप्रधानः स्यादपकारपरेऽप्यरौ।"

इति वाक्यं तेषां बुद्धौ नागच्छति। एवं आधुनिककाले परार्थघटनावन्ध्याः स्वोदरमात्रपूरणव्यग्राः, नास्तिकाश्च वर्तन्ते तत्र भगवतः कलिपुरुषस्य विलसितमेव कारणमिति सुदृढं निश्चीयते। अतः सर्वेऽपि सकलपापकर्मणां योनिमिव वर्तमानां कृतघ्नतां परित्यज्य, आस्तिकतया युक्ताः स्वस्वधर्माचरणे व्यग्राः, स्वदेशेषु, स्वस्वशास्त्रेषु, स्वस्वमतेषु, स्ववैद्येषु, निरताः, लोकोपकारपराश्च भवन्त्विति भगवन्तं नारायणं भगवतीलोकजननीञ्च प्रार्थयमानोऽहं एतावता प्रसङ्गेनैव विरमामीति शम्॥



श्रीमतां पुण्यमूर्तीनाम् अशेषशास्त्रतत्त्वज्ञानां व्याकरणशास्त्रावताराणां पूज्यपादानां गुरुवराणाम् श्री ६ देवनारायणत्रिवेदश्रीचरणानां

## समर्हणम्।

### अवसरग्रहणनिमित्तम्

त्रिवेदविद्विप्रकुलावतंसास्तपःप्रकर्षोपमितर्षिवर्य्याः।
जयन्ति काश्यां गुरवोऽस्मदीयाः श्रीदेवनारायणपूज्यपादाः॥ १॥
श्रीमान्मुनिः पाणिनिरेव येषां प्राणः फणीशो भणितौ प्रविष्टः।
कात्यायनस्तिष्ठति कान्तरूपे देहस्तु नागेशकृताधिवासः॥ २॥
अहर्निशं पाठनमेव येषां सदा व्रतं छात्रजनातिथिभ्यः।
अतीत्य राजत्यधिकाशि नैकं सदा व्रतौघं धनिभिः प्रणीतम्॥ ३॥

श्रीमन्तः पूज्यपादाः गुरुवराः!

श्रीमद्भिरद्यावधि पुत्रकल्पं दृष्टानुशिष्टास्सुपथं प्रदिष्टाः।
छात्रा वयं श्रीमदसीमदाव्य-दयामृतार्द्राः सुखिनो वसामः॥ ४॥
आसेतुशीताचलमत्र सन्ति पारेसहस्रं भवदीयशिष्याः।
यैरेव जागर्ति परिष्कृतस्य सच्छन्दशास्त्रस्य सुसम्प्रदायः॥ ५॥

लब्धावकाशा अपि राजकार्यान्नाध्यापनात्स्युर्विरता भवन्तः।
अतो वयं श्रीमदुपाश्रयेण भूयोऽपि भव्ये पथि संचरामः॥ ६॥
आरोग्यपूर्वं शतवर्षमायुर्विश्वेश्वरो यच्छतु वः प्रकल्पम्।
चिराय नागेशयशःपताका, स्फुरत्वजस्रं भुवि भारतेऽस्मिन्॥ ७॥

श्रीमच्चरणाश्रिताः—

विनयावनताः काशीस्थराजकीय-संस्कृतमहाविद्यालयच्छात्राः।



## छात्रेतिकर्तव्यता।

(क्रमागता)

शरीरमाद्यं खलु धर्मसाधनम्॥ इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते॥ इति शरीरस्यैव महिमा वर्णितः भगवता। अस्तु ब्रह्मचर्ये सूर्यसहस्रसंख्याकप्रणतिभिः शरीरदार्ढ्यं परन्तु नैतावताऽलम्, किन्तु तेन सह मनोदार्ढ्यमपि अत्यावश्यकमपेक्ष्यते। अन्यथा शरीरस्य बलीयस्त्वे लब्धेऽपि यदि मनसो दृढता न स्यात् तदा विफलमेव शरीरबलं भवेत्—केवलं भ्रान्तिनत्वे तस्य हेतुत्वात्, नहि पुरुषार्थे साधनं तत् भवेत्; यथा महिषस्य बलं भारवाहकं दृश्यते तद्वत्। अत एवं वेदशास्त्रादिविद्याध्ययनेन चित्तमपि सुसंस्कृतं कर्तव्यम्। अतः गुरुसांनिध्यं विद्यार्थिनामवश्यमपेक्ष्यते। सद्गुरोः नैकट्येन जायमाना या नियतं सत्संगतिः तयैव सच्छास्त्रश्रवणं भवेत् सच्छास्त्रा-ध्ययनार्थमेव सद्गुरुसामीप्यं नियमेन कर्तव्यमिति स्मृतिकारैः निर्दिष्टम्। वेदशास्त्र-शिक्षया च मनः सद्विचारशालि जायते इति तु प्रायः अनुभवसिद्धम्।

विद्याशिक्षितं चेतः—"विपदि धैर्यमथाऽभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः इत्यादि" गुणजातं प्रगृह्णाति, अयमेव सरस्वत्याः महिमा निगद्यते। अतः वेदशास्त्राध्ययने छात्रैः प्रवृत्तिः कार्या। परं आधुनिकांग्लविद्याध्येतृभिः प्राचीन-शास्त्रा-ध्ययने चोदासितमेव दृश्यते। तेन नैजामार्यसंस्कृतिं विस्मृत्य विचारवेषभूषादि च आर्याणां विस्मृतमिव दृश्यते, अहो दौर्भाग्यं भारतीयानां हन्त! अपरं चैतत् अस-मञ्जसं समापतति। विना वेदशास्त्राध्ययनात् ऋष्यृणागाधसागरे निमज्जन्ति साम्प्रतिकाः प्राचीनवेदशास्त्राध्ययनविमुखा नराः। वेदशास्त्राध्ययनेन ऋष्यृणापाकरणं स्यात् अत एव धर्मशास्त्रे 'स्वाध्यायोऽध्येतव्यः' इत्यादि विधिवाक्यं यै र्महनीयैः स्मृतिकारैः उक्तविधिवाक्यं स्वस्वस्मृतिवचनैः विस्तरतो विवृतं स्वस्मृतिग्रन्थेषु।

एतावता केवलांग्ल-विद्याशिक्षया नहि पारदृष्टयो महर्षयः स्मृतिकाराः श्रुतिमाता

च तुष्यन्ति, इति ज्ञन्तव्यम् स्वाध्यायाध्ययनकृत् स्वसंस्कृतिं चापरिहाय विश्वभाषात्वात् आंग्लविद्याशिक्षणे प्रवृत्तश्चेत् न कमपि दोषं संपश्यामः सच्छास्त्राध्ययनेन संस्कृते मनस्यार्जवहिंसास्तेयापरिग्रहादिधर्मा आस्पदं विन्दन्ते । तथा शौचसंतोषतपःस्वाध्यायाद्यधिष्ठिते मनसि सत्वगुणोत्कर्षो जायते ।

ततश्चेश्वरप्रणिधानरूप-सावित्र्युपासनया उपास्ये एकीभूतं चेतः उपास्यप्रसादेनानेकलौकिकीश्चालौकिकीश्च सिद्धीः लभते । अतः ऐहिकधर्मार्थकामादि प्राप्तयर्थं तत्फलीभूतं स्वर्गादिलाभार्थं शारीरं मानसं च उक्तोपायलभ्यं बलमपेक्ष्यते एव प्राचीनैः तदेकं विना अन्यतरत् विफलीभवत् छिन्नाभ्रमिव नश्यति इति मन्ये । विना शरीरबलात् सुसंस्कृतेन अत एव दृढमनसा पुरुषार्थचतुष्टयं लभेतैव इति चेत् ? तन्न समंजसम् । मनःसंस्कारसंपादनायैव अध्ययनोपासनादीनामावश्यकत्वं विद्यते । तच्च शारीरबलाधीनम् । तस्मात् शरीरं मनश्च ब्रह्मचर्यादिना सुविद्याध्ययनेन च दृढतरं कार्यं विचारक्षमं च संपादनीयम् । अयि भो वाचकाः उपरि कथितविचारेण शरीरं मनश्चोभयसाधनं द्विविधं श्रेयः प्रेयश्च दातुं शक्नोति शास्त्रमर्यादया व्यापारितं चेत् इति सिद्धम् । अत्र केचनांग्लविद्यामण्डिताः पण्डिताः शङ्केरन् कथं तावत् केवलं वेदशास्त्रशिक्षया मनः सुशिक्षितं भवेत् ?

आंग्लभाषाध्ययनपूर्वकं चाधिभौतिकशास्त्राध्ययनेन वैमानिकविद्या नौयानज्ञानं वितंत्रिवृत्तविज्ञानं बाष्पयानादिसाधनज्ञानं भवति । चैतादृशानि विविधानि भौतिकविद्याविज्ञानानि आंग्लभाषामयशास्त्रेषु वर्तन्ते, इति भौतिकविज्ञानेनैव विश्वविषयाः स्वायत्तीकृताः यूरोपीयैः । तेन अर्थकामयोः परोत्कर्षं सेवन्ते विधर्माणः अपि ख्रीस्तीयाः । परं चात्र ब्रूमः—अयि भो मदीयदेशबान्धवाः विचारयन्तु चेतसा सुस्थिरबुद्ध्या येन कारणेन पूर्वाचार्यैः भौतिकयांत्रिकशास्त्रस्य विस्तरतो विवेको नाकारि, तच्च कारणमस्माभिः इदमेव निश्चीयते, आधिभौतिकविज्ञानापेक्षया, आधिदैविकसामर्थ्यं विशिष्यते । तदपेक्षया आध्यात्मिकसामर्थ्यं अतिरिच्यते ।

एतावता तत्तद्भूतानां भौतिकपदार्थानां वा अधिष्ठातृदेवताप्रसादेन स्वायत्तीकरणं भवति, इति वृत्तं तु इतिहासपुराणादिषु स्पष्टमुपलभ्यते ।

तच्च यथा तत्र भवतः वसिष्ठस्याश्रमं समागतस्य ससैन्यस्य राज्ञः विश्वामित्रस्यात्यल्पावकाशेऽपि षड्रसभोजनसंभारः सुसज्जः सञ्जज्ञे । तेनैवान्नेन सन्तृप्तः राजा सपरिवारः परां संतुष्टिं जगाम । चित्रलेखया दास्या अनिरुद्धस्य शोणितपुरं प्रति एकेनैव यामिनीयामेन आनयनम्, महोदधेश्चुलकीकरणमगस्त्येन इत्यादि—बहूनि विविधाधिदैविकसामर्थ्यदर्शकानि उदाहरणानि पुराणेतिहासेषु प्रत्यपादि पूर्वाचार्यैः । अधिदैविकशक्त्या स्वकीयं परकीयं वा लोकोपकारकं कार्यं सम्पादयामासुः पूर्वाचार्याः ।

तेन भौतिकोत्कर्षं अधरीकृत्य आधिदैविकं आध्यात्मिकं चोत्कर्षं भजन्तिस्म प्राचीनाः। न हि ते सर्वेऽपि आंग्लविद्याविशारदा आसन् राष्ट्रोद्धारार्थं आपेक्ष्यते एव आंग्लविद्याशिक्षणम् इति स्यात् केषां चित् मतिः। तदपि न तथ्यं—अनैकान्तिकत्वात् तस्य। श्रीशिवाजी महाशयः, प्रतापसिंहमहोदयः, आंग्लविद्यागंधमपि न जानातिस्म। तथापि तौ स्वराज्यं सम्पादयामासतुः स्वबुद्धिबलवैभवेन शरीरबलेन च इति सर्वप्रसिद्धम्। माहंमदीयानेकनृपान् जयन्तिस्म पूर्वे राजानः, तत्किं तदानीं नासीत् बुद्धिनैपुण्यं शरीरपाटवं इति तर्क्यते भवद्भिः? तर्हि आंग्लविद्याशिक्षाधीनैव राष्ट्रोन्नतिः इति सव्यभिचारहेतुत्वं गम्यते, भ्रम एव स इति मन्ये। तथापि वयं तस्याः विश्वभाषात्वात् सार्वत्रिकव्यवहारार्थं आंग्लभाषा नाध्येतव्या इति न मन्यामहे। किन्तु तदध्ययनं सहकारिसाधनत्वेन सर्वत्र उपयोक्ष्यत एव। परन्तु प्रथमं ब्रह्मचर्येण सूर्योपासनया शरीरदार्ढ्यं वेदवेदांगसूत्रभाष्यधर्मशास्त्राणामध्ययनेन मनः सुशिक्षितं कृत्वा उपासनया तत्तद्देवताप्रसादेन विद्यार्थिनोऽपि यत्नतो जागतिकेष्टवितरणेन उपकरिष्यन्ति इति नास्ति सन्देहः। भो भोः छात्राः कुर्वन्तु गुरुशुश्रूषां परिशीलयन्तु शास्त्राणि उपास्यन्तां देवताः तेन च ऐहिकामुष्मिकं श्रेयः प्राप्स्यन्ति भवन्त इति सुनिश्चितं ब्रूमः।



## श्रीमद्वाराणसेय राजकीय महाविद्यालयीयच्छात्रपरिषद्।

नाविदितं भविष्यति यदियम्पाश्चात्यसभ्यतारागरूषितदूषितहृदयैः पण्डितम्मन्यैः सभ्रुकुटिभङ्गं सावहेलं समुत्सार्यमाणापि सुरसरस्वती पुराऽतिसरससरलनिरवद्यगद्यपद्यनिचयरचनाचातुर्यविरिञ्चिवल्लभानुगृहीतसकलमुनिमनुजवृन्दारकवृन्दसमुपदद्यदधरीकृतपीयूषमाधुरीकसूक्तिविजृम्भणैरमन्दविमलानन्दसन्दोहसंस्थापिका केषां सचेतसाञ्चेतांसि नारञ्जयदिति। परम् सम्प्रति कस्यात्यन्तं सुखमुपनतन्दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण" इति। सकलकविकुलललामायमान कालिदासकवेरुक्त्यनुसारमतिनिर्दयहृदयकलिहतककालप्रभावेणावमानिता सुरसरस्वती परमोन्नतपदे नियुक्तापि कदर्यहतकैरहङ्कारविषमविषमुग्धहृदयैराङ्गलशिक्षाप्रभावानलसन्दह्यमानदूषितान्तःकरणपटलैः 'मृतभाषा मृतभाषेति' सावहेलं साम्रेडं सप्रत्यादेशं चरणाघातैर्निराक्रियमाणा तपस्विनी भावुकहृदयैः पारमार्थिकसभ्यतासंपन्नहृदयैः प्रबुद्धसंस्कृतज्ञैः प्रबुद्धानुरागिभिर्वा सकष्टं साश्रुपातं सक्षोभं सखेदं च कथमपि निरीक्ष्यते।

सकलधरणीतलस्वर्गायमाणार्यावर्ततपस्विनि-प्रजाया भावुकजनकमलकोमलहृदयविदारणक्षमार्तनादं श्रावं श्रावम्—एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं

एवं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः' इति भगवता मनुना प्रदर्शितवैभवस्य प्रतिकूलतां दर्शं दर्शं न जाने पाषाणाक्रान्तकाठिन्यं कतरत्तद् हृदयं भविष्यति यन्न द्रवितं स्यादिति।

अतिचिन्तनीयां तपनीयां घृणितामस्या देव्या "भाषणलेखनप्रसार एवोन्नतेः परमः पन्थाः" इति वृद्धानामुपदेशं श्रावं श्रावमस्माभी राजकीयमहाविद्यालयीय विशेषतस्तदीय च्छात्रालयवासिभिः छात्रैरेकस्याः परिषदः स्थापनाध्यवसायोऽकारीति। तस्या अभिधेयन्तु "श्रीमद्वाराणसेय-राजकीयमहाविद्यालयीयच्छात्रपरिषद्" इत्येवं वरीवर्ति। मन्ये करुणानिधि भगवान् केशवोऽस्मिञ्शुभकर्मणि नः साहाय्यं करिष्यतीति।

सभाया अस्याः सुगृहीतनामानः पण्डितप्रवराः श्रीमन्तो रामचन्द्र पाण्डेयाः B. A. L. T. महाभागा सभापतयो भवन्ति। महाशयानिमान्सभापतीनासाद्य परिषदियं धन्यभूतमात्मानं सम्भावयते। मन्त्रिपदञ्च स्वनामधन्या अस्मदीयानन्यमित्राणि शास्त्रार्थकलाकलकलालापपेशलच्छात्रमण्डललब्धकीर्तयः श्रीमन्तो राजनारायणशुक्लाः शास्त्रिणो महाभागा अलं कुर्वन्ति।

मन्ये प्रोत्साहमूर्तीनिमानासाद्य परिषदियं पुष्पवती फलवती च भवेदिति। परिषदोऽधिवेशनावसाने मया हस्तलिखितपत्रिकायाः कृते प्रस्ताव एकः प्रस्तुतः। तत्र च छात्राणां न केवलं भाषणशक्तिरपि तु लेखनशक्तिरपि प्रस्फुरेदिति मनसि कृत्वा मित्रवरैः श्रीराजनारायणशास्त्रिभिस्तस्य हृदयतोऽनुमोदनमकारि।

ततः सर्व-सम्मत्याऽसौ प्रस्ताव उत्तीर्णो जातः। सा च पत्रिका "माधवी" इति नाम्नाऽऽहूयते छात्रैः। तस्याः संपादनकार्यभारश्च भ्रातृवरैः साहित्यधुरन्धरैः सकलकविकुलललामभूतैर्निर्गुणोपाह्वश्रीद्विजेन्द्रनाथशर्मभिरास्माकीनां प्रार्थनां प्रतिपद्य स्वात्मनि नियोजितः। यस्याः परिषदः प्रतिनिधिभूतेन मया तेभ्यः सहस्रशो धन्यवादा दीयन्ते।

फलस्वरूपतस्तस्या एकोऽङ्कः सुसज्जितः सुमनसां करेषु नरीनृत्यति। अस्याः परिषदोऽधिवेशनं प्रातिपदिकं भविष्यतीति ध्रुवम्। अस्याञ्च सङ्कोचस्य नास्त्यवसरः। अवच्छेदकावच्छेदेन संस्कृतच्छात्रमात्रं प्रवेष्टुमर्हतीत्यत्र।

इयानस्याः स्तोकः परिचयः। नियमोद्देश्यास्तु विस्तरभयान्न प्रतिपाद्यन्ते। संक्षिप्तमस्या उद्देश्यमधिगम्यानुमानतो नियमा अपि अभ्युपगन्तव्याः। इत्यास्तां विस्तरः।

निवेदकः—केवलानन्दशर्मा 'अज्ञेयः'।



# "मन्दताम्"

[ श्रीनरसिंहपाण्डेय 'पथिकः' विशारदः ]

( १ )

निर्गत्याद्रिपतेः सुरम्यशिखराद्रुत्पाटयन्ती शिलान्।
पापानाञ्च विनाशकैः कलरवैरापूरयन्ती दिशः॥
स्वे मार्गे समुपस्थितान् क्षितिरुहानुन्मूलयन्ती जवैः।
काशीमेत्य गतावगुण्ठनधिया मन्दाकिनी मन्दताम्॥

( २ )

सेवायाञ्च सदागुरोश्चरणयोः स्वं जीवनं नीयताम्।
पितृणाञ्च निदेशरक्षणविधौ वित्तं सदा दीयताम्॥
स्वातन्त्र्ये च परोपकारकरणे मा धीरता हीयताम्।
देवानां समुपासने 'पथिक'! भो! मास्मागमो मन्दताम्॥



# भारतीया संस्कृतिः।

( ले० त्रिलोकीनाथमिश्रः शास्त्री हिन्दीरत्नम्, जिगिना गोरखपुर )

अघटितघटनापटीयस्याः प्रकृतेर्विशालसाम्राज्ये प्रायेण सर्वाणि वस्तूनि नश्वराणि एवं विद्युत्प्रकाशमिवास्थिराणि सन्ति—परिवर्तनचक्रनियमानुसारेण उत्पत्तिलयो अत्यवनत्युदयास्त-सुख-दुःखादिविरोधिभावानां परस्परं सङ्घर्षो भवत्येव न कोऽपि सर्वदा समानताम्प्राप्नोति यः चन्द्रः वर्द्धते—स एव क्षीणोऽपि भवति। यः भुवनभास्करः प्रातःकाले स्वर्णप्रभया शोभते मध्याह्ने प्रचण्डसहस्त्रकरेण संसारं तापयति, सोपि सायंकाले पक्षहीनविहग इव सागरे निमज्जति। योऽद्य अनाथोऽस्ति-स एव श्वः नरनाथोऽपि भविष्यति। एवमेव भारतस्यापि परिवर्तनवृत्तमस्ति—

यदा अन्यदेशवासिनो जना ज्ञानरहिता अशिक्षिताश्चासन्—तथा दिगम्बराः वने निवसन्तः सङ्केतादिना पशुवत् स्वकार्यं साधयन्तः भोजनादिकमपि पशुवदेव चक्रुः। तदानीमप्ययं भारतः उन्नतः ( सभ्यः ) पूर्णसुख्यप्यासीत्। ईश्वरं मार्गं च विवेचयन्तो मुनय आध्यात्मिकं ज्ञानं वर्द्धयन्तिस्म। वेदसदृशधर्म-ग्रन्थस्य तथा वृहत्साहित्यस्यापि रचनात्रैवाभूत्। न कुत्रापि वेदात्प्राचीनं साहित्य-मुपलभ्यते। यत्र विज्ञानकलानाञ्च बाहुल्यं दृश्येत। ऋग्वेदे एवं भूतस्य रथस्य वर्णनं विद्यते। योऽश्वं विनापि जलस्थलनभःसु गन्तुं शक्नोति। तथा अन्यासां कलानामपि वर्णनमस्ति। रामस्य पुष्पकविमानमारुह्य लङ्कातः अयोध्यायामागमनमेव द्योतयति यत्

तदानीं कलानां कीदृश्युन्नतिरासीत्। प्राचीनकालमर्य्यादायाः संस्कृतेश्च रक्षणे सर्वेषां ध्यानमासीत्। चत्वारो वर्णाः स्वे स्वे कर्मणि निरताः प्रेम्णा अन्योन्यं साहाय्यमकुर्वन्। ब्राह्मणाः ज्ञानार्जनपूर्वकमन्येषाम्बन्धूनामाधिदैविकाधिभौतिकदुःखान् नाशयित्वा अमृततुल्योपदेशेन सहायतां चक्रुः। क्षत्रियाः स्वपराक्रमेण राज्यशक्तिं सञ्चालयन्तः सर्वान् ररक्षुः। वैश्याः कृषिवाणिज्येन च अन्नाद्यावश्यकतां सम्पादयन्तिस्म, शूद्राः सर्वेषां सेवां कुर्वन्तः समयं यापयन्तिस्म। वर्णविभागः वेदेऽपि लिखितः ( यजुर्वेद ) ब्राह्मणोऽस्य मुखमासीत्। बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत।

कृष्णभगवताप्युक्तम्—चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः इति। चतुर्णां वर्णानां कर्म विषये मनोरादेशः यथा—

शमोदमस्तपः शौचं शान्तिरार्जवमेव च
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥ १॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्—
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥ २॥
कृषि गोरक्ष्यवाणिज्यं वैश्य कर्म स्वभावजम्।
परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥ ३॥

पुरा यत्र एषां नियमानामुल्लङ्घनं जातम् तत्र तदानीमेव विप्लवोऽप्यभूत्। कृतयुगे हिरण्याक्ष-हिरण्यकशिपुनामकौ; असुरभावापन्नौ जातौ। त्रेतायुगेऽपि रावण-कुम्भकर्णौ भ्रातरौ द्वौ उत्पन्नौ। ब्राह्मणकुलोत्पन्ना अपि एते स्वं स्वं धर्मं परित्यज्य संस्कृतेरुन्मूलनं कृतवन्तस्तदा एषां विनाशोऽभूत्। शम्बूकः शूद्रजातावुत्पन्नः सेवाकर्म त्यक्त्वा तपसि संलग्नोऽभूत् मर्य्यादापुरुषोत्तमश्रीरामेण हतः। शिशुपालादयो यथाऽधर्माचरणे पदं धत्तवन्तस्तदा कृष्णेन हताः—संस्कृतिरपि रक्षिता। एवमेव धर्मनियमपालनेनैव अस्य देशस्य उन्नतिरासीत्। अन्यदेशीया स्वर्णविहग ( सोने की चिड़िया ) इति संज्ञया सम्बोधयन्तिस्म। श्रीचन्द्रगुप्त-राज्यकाले एकः चीनदेशीयो पर्यटक आगत्य अत्रत्यां दशां विलोक्य—स्वयात्रावर्णनपुस्तके वर्णितम्—यत भारतीयाः सज्जनाः सच्चरित्राश्च भवन्ति। राजमार्गे निर्भयाः चलन्ति किन्तु धर्मभीरवो भवन्ति। कुत्रापि चौरभयन्नास्ति। नार्यश्च गुणशीलयुक्ताः पतिव्रताश्च सन्ति। राज्यप्रबन्धोऽपि सुन्दरोऽस्ति। इत्यादिना ज्ञायते यत् तदानीमपि अयं उन्नत आसीत्। किन्तु कालप्रभावात् बौद्धादिधर्मप्रचाराच्च शनैः शनैः प्राचीनशृंखलायां शैथिल्यं अभूत्। अहम्मन्यता वर्द्धिता। परस्परम् विरोधाग्निः प्रज्वलितः। तदैव स्ववसरापेक्षिणो वैदेशिका आक्रमणङ्कृतवन्तः। राज्यशक्तिं स्वायत्तीकृत्य शासकत्वेनातिष्ठन्। भारतीयसंस्कृते धर्मस्य च समूलमुन्मूलनाय शिखा यज्ञोपवीतानां कर्तनम् धर्मग्रन्थानामग्नौ प्रक्षेपश्चाभूत्। किन्तु तदानीन्तनाः महाराणा प्रताप-

शिवाजीप्रभृतयो धर्मवीरा वर्णनातीतं कष्टमनुभवन्तोऽपि धर्मस्य जातेश्च रक्षणमकार्षुः। गुरुगोविन्दसिंहस्य अल्पवयस्कौ सुकुमारौ पुत्रौ धर्मार्थमेव प्राणान् तत्यजतुः। यवनकालेऽपि ढाकानिर्मितवस्त्राणां सर्वत्र प्रसिद्धिरासीत्। तत्र निर्मितानि वस्त्राणि सर्वत्र गच्छन्तिस्म। अस्तप्राये यवनराज्ये वृटिशगवर्नमेन्टराज्यस्य स्थापना जाता। प्रजासु वर्द्धिता अशान्तिर्विनष्टा। प्रत्यक्षेण न कोऽपि कमपि बाधते स्म। किन्तु वैदेशिकैर्विद्वद्भिः स्वीयसूक्ष्मबुद्धिप्रभावेण स्वसाम्राज्यमूलं दृढीकरणार्थम् देशेऽस्मिन् आङ्गलविद्यालयमहाविद्यालयानां स्थापनं कृतम्। तत्र पाश्चात्यविदुषां रचितनूतनग्रन्थानामध्यापनेन नवयुवकानाम्बुद्धौ डारविनस्य सिद्धान्तेन मनुष्याणामुत्पत्तिर्वानराज्जाता। रामो वन्यः असभ्यश्चासीत्। कृष्णः गोपिकाभिस्सह ननर्त इत्यादिना कुत्सितविचारस्थापनेन मनः परिवर्तितम्।

भारतवर्षे आङ्गलशिक्षाप्रारम्भकाले लार्डमेकालेमहोदयेन स्वमनोऽभिलषितं शिक्षोद्देश्यं स्वकीयपत्रे लिखितम्—तस्याभिप्रायः यथा—

"आङ्गलशिक्षया एवम्भूता मनुष्यसमूहा उत्पत्स्यन्ते—ये रक्तवर्णादिभ्य एव हिन्दवो भविष्यन्ति। किन्तु आचारविचाररुचि-चरित्रचिन्तादिषु गोरण्डा एव भविष्यन्ति"। तत्कथनमिदानीं प्रत्यक्षं दृश्यते। प्राणान् पुत्रं कलत्रं राज्यं त्यक्त्वापि यं धर्मं अस्माकं पूर्वजा न तत्यजुः तमेव धर्मं पाश्चात्यदेशानुकारिणः सभ्यताभिमानिनो वयमकारणमेव मुञ्चामः। अत एव धर्मप्रधानेऽस्मिन् देशे धर्मशैथिल्येन प्रकृतिकोपो जायते। अतिवृष्ट्यनावृष्टिजन्य दुष्कालेन लोकः त्रस्यते। अन्नं विना कोमलमतयः बालकाः सुन्दर्यो नार्यो युवका वृद्धाश्च प्राणान् त्यजन्ति। ग्राम्यानां कृते तु अत्यन्तकष्टावसरः सम्प्राप्तः। यतः वैदेशिकानि महर्घाणि वस्तूनि भारते विक्रीयन्ते। ये खलु धनिका त एव क्रीणन्ति, परन्तु ये निर्धना स्तेषां कथं निर्वाहः स्यात्? अत्रत्यनिर्मितवस्तूनां विक्रयोऽपि कथं स्यात्? यथा वस्त्रविषये अग्रगण्यानां नेतॄणां यथा मतंविद्यते यत्—स्वदेशीयवस्त्रैरेव निर्वाहः कर्त्तव्यः, तथैव सर्वाणि वस्तूनि स्वदेशनिर्मितान्येव उपयोगे—आनेतव्यानि! आचारव्यवहारोऽपि स्वदेशीय एवास्तु। पूर्वोऽयं देशः पूर्वीयत्वेनैव स्थातुमर्हति, न तु पाश्चात्येन समम्। वस्त्रालङ्कारविभूषितामपि वेश्यां दृष्ट्वा न कुलवधूनां मनः आकृष्यते, न सिंहः शृगालानुकारी शोभते—वयमपि प्राचीनं गौरवं पुनः प्राप्नुयाम स्तथैवाचरणमपि विधेयम्।

# वेदाध्ययनस्यावश्यकता

(लेखकः—पं० श्रीवेणीरामशर्मा गौड़ः, काशी)

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥
(शु० य० ३४।५८)

वेदमेव सदाभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ (मनु० २।१६६)
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ (मनु० २।१६८)

वेदस्य मनुष्यमात्रेण सह सत्यपि सामान्यतः सम्बन्धे भारतीयैः सह घनिष्ठः सम्बन्ध इत्यत्र नास्ति विप्रतिपत्तिलेशः । अस्ति चात्र कारणानां भूयस्त्वम् । तत्र तावदिदमेकं कारणम्, यन्मनुष्यसृष्ट्यारम्भे विश्वामित्र—वसिष्ठात्रिभरद्वाजप्रभृतयो ये महर्षयो भारतीयानामस्माकं वंशप्रवर्त्तयितारः प्रवराध्याय—प्रवरमञ्जर्यादावुक्तास्त एव सर्वानुक्रमण्यामार्षानुक्रमण्याञ्च वेदप्रवर्त्तका भणिता इत्यस्मत्पूर्वजैरेव वेदाः प्रवर्त्तिता इति बह्वादरणीयता । द्वितीयन्तु—मनुष्यमात्रस्य अभ्युदयोऽधःपतनं वा स्वं स्वं शीलमेवावलम्बते । यस्य हि पुंसः शीलमुदारतरं निर्मलञ्च प्रकाशते तस्याभ्युदयः करतलगतः, यस्य चैतद्विपरीतं तस्याधःपतनमिति निश्चप्रचमेव। तादृशे च शीलादौ पुंसः प्रवर्त्तनं संस्कृतवाङ्मयेष्वेव दरीदृश्यते । किम्बहुना—भारतीयानामस्माकं सर्वस्वभूतेयं संस्कृतभाषा । ईदृशी चाप्युत्तमा भाषा केनापि दुर्दैवविपाकेन नेदानीमात्मानं समग्रतया प्रकाशयति, तथापि यावानुपलभ्यते त्वंशस्तावत्तावोक्तगुणगणभूषिता वर्वर्त्ति ।

अस्य सर्वोत्तमसंस्कृतसाहित्यकल्पवृत्तस्य मूलभूतो वेदः । वेदत एव संस्कृतसाहित्यस्य सञ्जातमुत्थानम् । भारतीयैश्च संस्कृतसाहित्यस्यामुमेव मूलभूतं वेदमवलम्ब्य लोकोत्तरोऽभ्युदयः समपादि सम्पादयिष्यते च ।

यस्य वेदस्यावलम्बनमेवास्माकं महतेऽभ्युदयाय कल्पते तादृशेनानेन सहास्माकं विशेषतः सम्बन्धोऽवश्यमङ्गीकार्यः । अपि च वेदोऽस्माकं प्राचीनो धर्मग्रन्थः। धर्मग्रन्थे च यत्किञ्चिन्निरूपितं तदविलम्बेन मान्यं पालनीयञ्च व्यवहारे परमार्थे चेति तृतीयं कारणम् ।

येन वेदेन सहास्माकमेतादृशो निविडः सम्बन्धः, यश्चास्माकमभ्युदयनिःश्रेयस-

हेतुस्तत्तादृशे वेदे सर्वथा वयमनभिज्ञा इति किमस्त्यतोऽपि शोचनीयम्! एवं बहुभिः श्रुत एव न वेदः, यैश्च कैश्चिच्छ्रुतस्तेऽप्येवमनुमिमते, यन्महान् वेदराशिः स च न शक्यते सकृत्पठितुमप्येकस्मिन् जन्मनि। दूरे तिष्ठन्तु पामराः पण्डिता अपि बहवो दशामेतादृशीमनुभवन्तीति किमतः शोच्यतरम्!

सुविदितमेतत्—देशान्तरीयपुरुषापेक्षया भारतीयाः सभ्यतरा विद्याभ्यासशालिनश्च। तत्तादृशानामस्माकं सर्वश्रेयोनिदानभूतेऽस्मिन् वेदभागे उपेक्षैतादृशी सर्वथाऽनुचितैव। को नाम पितरमिव स्वकं न्याय्ये धर्म्ये च पथि प्रवर्त्तयन्तमधर्म्यादन्याय्यतश्च पथो निवर्त्तयन्तं वेदमिममुपेक्षमाणः कथं लोकमात्रामैहिकीमामुष्मिकीं वा निर्वर्त्तयितुमीशीत।

ये च महान्तः करुणापूरपूरिता ईर्ष्यालुता—क्षुद्रहृदयता—कातरताद्यनेकदोषविनिर्मुक्ता अनुग्रहैकपरायणा अस्मत्पूर्वतना महर्षय आसन्, तादृशानां तेषामेव सन्ततयोऽपि वयमिदानीं क्षुद्रहृदयतादिभिर्महद्भिर्दोषैः परिपूरिताः। तत्र चेदमेव मुख्यं कारणम्, यदस्माकं वैदिकी पठनपाठनशैली सर्वथा परिभ्रष्टा। सर्वेऽप्येते दोषा वेदस्य पठनपाठनत एव निवर्त्स्यन्ते, मित्रतावीरतादिगुणाश्च प्रादुर्भविष्यन्ति।

वेदशिक्षा खलु मनुष्यहृदयक्षेत्रे देशहितं जातिहितमात्महितमित्येतादृशं गुणगणं वपति। या चैवमेतादृशीं गुणसम्पत्तिं लभते; भजति चैहिकामुष्मिकफलप्राप्तिभाजनतां, सैव मनुष्यजातिर्लोके सर्वोत्तरा विजयते।

येयं वैदिकी शिक्षा तादृशीं गुणसम्पत्तिं प्रसूते, या च ऐहिकामुष्मिकफलभाजनतामापादयति पुरुषं, हन्त! महदिदं दौर्भाग्यमस्माकं यत्तया शिक्षया सर्वथा वञ्चिता वयम्। प्रायो मनुष्यजातिः स्वस्य पूर्वजानां सम्पत्तेरभिरक्षणं स्वस्य महाभाग्यं मनुते, तदर्थमहर्निशं प्रयतते च यथाऽस्माकं पूर्वजैः सहाविच्छिन्नः सम्बन्धो भवेत्, स्वभाव एवायं मनुष्यजातेः, परन्तु वयमिह तादृशात्स्वभावादपि दूरे वर्त्तामहे। अतो दूरीकृत्येदमौदासीन्यमस्मत्पूर्वजानाममूल्यसम्पत्तिभूतस्य वेदराशेरभिरक्षणार्थं तदीयशिक्षालाभस्तत्प्रचारश्च प्रथमां कोटिमावहति। यदि वयमवश्यकर्त्तव्यस्यास्य पालनं न कुर्मस्तर्हि स्वीयपूर्वजानाममूल्या वेदसम्पत्तिरचिराद् भ्रश्येत! तद्रक्षणं विना पूर्वजैः सह सम्बन्धोऽपि विनश्येत्। ये च मतान्तरस्था देशान्तरस्था वा पुरुषाः स्वीयां पूर्वतनीमल्पीयसीं निःसारभूतामपि सम्पत्तिं महता प्रयासेनाकार्यकरणेनापि सम्यगभिरक्षन्ति वर्धयन्ति च, तेषां पुरतो महदिदं लज्जास्पदम्। अतः सानुरोधं प्रार्थ्यते—वेदस्यैवाध्ययने ऽध्यापने च यथाशक्ति सर्वैः प्रयतितव्यम्, तत्र च वर्त्तमानं शिक्षारत्नमादाय संसारेऽस्मिन् सत्कारार्हैरनुकरणीयैश्च भवितव्यम्। यतोऽस्माकं भारतीयानां वर्त्तमानावस्था शोचनीया घृणोत्पादिका च।

कुलीनाः खलु पुरुषाः सामान्यतोऽप्यात्मना सम्बद्धं पदार्थजातं यथाशक्ति निर्वहन्त्येव यावज्जीवं न कदापि परित्यजन्ति। अस्माकन्तु भारतीयानां न केवलं

वेदेन सह सामान्यतः सम्बन्धः किन्तु विशेषत एवेति निरूपितमधस्तात्। एवं सर्वप्रकारेणापि सम्बद्धं वेदमिममात्मानं जीवितं मन्यमानाः न पालयेम न वा भवेम तदभिवृद्धौ दत्तदृष्टयस्तदा धिगस्मान्। यतो जात्यन्तरापेक्षया हिन्दुजातिः सर्वतः श्रेष्ठा। तादृशस्यास्य वेदस्य परिरक्षणं पठन-पाठन द्वारा अर्थज्ञानद्वारा च भवितुमर्हति नान्यथा। अस्यैव महतो वेदराशेः सर्वश्लाघनीयस्य सर्वाभ्युदयनिदानभूतस्य यथावदर्थं निर्णेतुमेव प्रवृत्तः सर्वोऽपि संस्कृतवाङ्मयराशिः।

'वेद एव द्विजातीनां निःश्रेयसकरः परः।' (या० स्मृ० आ० ४०)



## अभिभाषणम्।

[ विहारप्रान्तीयदेवभाषापरिषदः एकादशेऽधिवेशने
सभापतिपदमलङ्कुर्वतां
पं० श्री चिन्नस्वामिशास्त्रिमहोदयानां ]

यां वाचं समुपासते दिविषदो विश्वे विधात्रादयः
यस्यामायतते हविः क्रतुभुजां धर्म्यञ्च कर्माऽखिलम्।
यामाराध्य नृपा नरा यमिवराः स्वाभीष्टसिद्धाः पुरा
तां कल्याणमयीमुताऽमृतमयीं दैवीं गिरं राध्नुमः॥

मान्यमहोदयास्सभासदः, अनवद्यविद्योदधिविलोडनावाप्तज्ञानामृतास्वादननिर्वृतनिखिलनिजकरणाः विपश्चिद्वराः, सुरभारतीसेवनपरिपूतजीवना विद्यार्थिनः, अन्ये च तदाराधकास्सामाजिकाः!

अद्याऽहमात्मानमतिवेलं सभाजितं मन्ये यदत्र भवन्तः सभापतिपदे महनीयगुणगणनिधिभिः, अखिलविद्याविलासपरिपक्वज्ञानैर्दिगन्तविश्रान्तस्वयशोराशिभिर्विपश्चिदपश्चिमैरधिष्ठेये करणीयबहुकार्यभारगुरुणि मां तदनर्हं स्थापयन्ति। तत्र च निरतिशयो निर्व्याजश्च प्रेमैव भवतां कारणम्। न मदीयो गुणो विद्या वा। अतस्तदर्थं भवद्भ्यो हार्दिकान् धन्यवादान् बहुशो वितरामि। पवित्रतमे सुरभारतीसमुद्धरणजीवातौ भुवनक्षेमङ्करे व्यापारेऽत्र स्वशक्त्यनुरूपं किञ्चिदपि कर्त्तुमवसरो मया लब्ध इति तेनाऽतितरामात्मानं कृतकृत्यमवगच्छामि च।

अयि सभाजनार्हाः सभासदः!

प्रायशस्सर्वेऽपि सुरभारतीसमाराधका वयं जानीम एव—भाषेयं दैवी भाषान्तराणां भारतीयानामखिलानामपि, जननी पालनी च सर्वसमाराधिता अखिलमपि गौरवमुपलम्भिता कदाचित् सर्वोत्तमा विराजते स्मेति। ये च धर्मज्ञाः, ये च

व्यावहारिकाः, ये च राज्यशासकाः, ये च लोकयात्रानिर्वर्त्तिनः, ये च तपस्विनः, ये चाऽऽत्मनिरताः, सर्वेषामेषां स्वस्वसमीहितसाधने नान्तरीयकमासीदेतद्भाषाध्ययनम्।

## अस्या देवभाषात्वम्

इयं हि पूर्वं देवभाषा, राजभाषा, जनभाषा, ग्रान्थिकीति चतुष्टय्यासीदिति सूक्ष्मेक्षिकया विचार्यमाणे सुस्पष्टमवगम्यते। तथाहि—यो यया भाषया व्यवहरति रात्रिन्दिवं, यामालम्ब्यैव तस्य भोजनाच्छादनादयस्सर्वे व्यापाराः प्रवर्तन्ते, सा तस्य भाषेति लोकानुभवसिद्धम्। एवञ्च देवैस्साकं यो व्यवहर्त्तुमिच्छति, सोऽनयैव भाषया तं सम्पादयितुमीष्टे। सतीषु बह्वीषु भाषासु अधुनाऽपि यो देवानाराराधयिषति, क्रतुभिर्वा यियक्षति, स्तवैर्वा तुष्टूषति, स इमामेव भाषां शरणीकरोति। न क्रतवो ज्योतिष्टोमाद्या दर्शपूर्णमासाद्या वा हिन्दीभाषया वङ्गभाषया तैलङ्गभाषया क्रियन्ते कृता वा। न हि तत्रत्याः स्तुतयः भाषान्तरेण सम्पाद्यन्ते, न वा 'इदमिन्द्राय न मम, 'इदमग्नये न मम' इति शब्दान् परित्यज्य भाषान्तरीयैश्शब्दैर्देवतायै हवींषि त्यज्यन्ते। न वा तथा करणे देवता हविर्गृह्णन्ति, कर्माण्यपि सम्पन्नानि भवन्तीत्यत्र किञ्चिदपि प्रमाणं भवति। व्यापारान्तरं तु यथाकथञ्चित् सम्पद्येताऽपि, परं देवैस्सह क्रियमाणो यागदानहोमश्राद्धादिव्यवहारोऽस्यामेवाऽऽयतते, नाऽन्यस्यां भाषायाम्। अस्मादेव हेतोरस्या दैवीत्वम्। एवं धार्मिककृत्यानुष्ठानं सर्वमप्येतद्भाषाधीनमित्यस्या धार्मिकत्वकथनमपि सुसङ्गतमेव।

## राजभाषात्वम्

भारतीयै राजभिरपि स्वकार्यक्षेत्र एषैव भाषा नियोजितेति स्फुटतरं निश्चीयते। यतो हि राजकार्यौपयिकास्सर्वेऽपि विधिनियमनियन्त्रणशासनादयो विषया अनयैव भाषया निर्मिता मनुयाज्ञवल्क्यव्यासपराशरादिभिः। एतेषां हि मन्वादीनां महर्षीणां ग्रन्थकरणं न स्वयशःख्यापनाय, न वा करकण्डूत्यपनुत्तये। परन्तु लोकानुजिघृक्षयैव। स्वग्रन्थोक्तान् राजधर्मान् यथावदवबुध्य, यथा राजानः प्रजाः पालयेयुः, यथा च धर्मविप्लवो न भवेत् लोकनाशो वेत्येतदर्थमेव। अपि च राज्ञामपि स्वकार्यनिर्वहणार्थं राजधर्मावेदका ग्रन्था अवश्यमपेक्षिताः, यानवलोक्यार्थतोऽवगत्य च स्वकार्यं यथावदविकलमनुतिष्ठेयुस्ते। एवञ्च विनैनां भाषां यदि अपरा तत्कालवर्त्तिनी भाषा अवर्त्तिष्यत राजकार्योपयुक्ता, सदा तस्यामेव भाषायां सर्वं इमे ग्रन्था निर्मिता अभविष्यन्। यथाऽद्यत्वे तादृशा ग्रन्था राजभाषायामेव (आङ्गलभाषायां) निर्मीयन्ते। अधिकरणेऽप्पीयमेव व्यवहृताऽऽसीत, जयदानादिशासनपत्राण्यप्यस्यामेव भाषायां व्यलिख्यन्त राजभिः।

'पटे वा ताम्रपट्टे वा स्वमुद्रोपरि चिह्नितम्।
अभिलेख्याऽऽत्मनो वंश्यानात्मानं च महीपतिः॥' (या० स्मृ० आ० ३१९)

इत्यादिना महर्षियाज्ञवल्क्याद्युक्तमार्गानुसारेणाऽन्यूनानतिरिक्तानि शासनपत्राणि सुरभारत्यामेव राजभिर्लिखितान्यद्याऽप्युपलभ्यन्ते प्राचीनानि तत्र तत्र । रीतिरियं यावत्पर्यन्तं भारतस्याऽस्य समग्रशः खण्डशो वा शासका भारतीया राजानोऽभवन् तावत्प्रचलिताऽऽसीत् । अतो भारतीया राजानस्सर्वेऽपीमामेव राजभाषात्वेन व्यवाहार्षुरित्यत्र इतोऽपि किमन्यत्प्रमाणमन्वेष्टव्यम् ?

## जनभाषात्वम्

जना अपि तत्र तत्र संस्कृतप्रभवया प्राकृतभाषया कयाचित् कचित्क्वचिद्व्यवहरन्तोऽपि व्यवहारपदेषु गैर्वाण्या एव विशेषत उपयोगं कुर्वन्ति स्मेति प्रतीयते। तथा हि जनपदलेख्यप्रकरणे 'विनापि साक्षिभिर्लेख्यम्' इति याज्ञवल्क्यीयं पद्यं व्याचक्षाणो विज्ञानेश्वरः "प्रातिस्विकदेशभाषयाऽपि लेखनीयम्" इति वदन् जानपदलेखेऽपि प्रथमं गैर्वाण्येव ग्राह्या, असम्भवे तत्तद्देशभाषेति 'अपि' शब्दात् स्फोरयति। किञ्च दृश्यकाव्यावलोकनेन निस्सन्दिग्धमवगम्यते—सर्वजनविदितेयं भाषाऽऽसीदिति । न हि भाषानभिज्ञानां पुरतो नाटकान्यभिनीयन्ते । न हि दक्षिणदेशं गत्वा केचित् हिन्दीभाषया नाटकमभिनिनीषन्ति, न वा दाक्षिणात्याः स्वभाषया तदनभिज्ञानां पुरतः । रसिकाभावे रसस्फूर्तिर्वा कथम् ? कथञ्च वा तथा सति नाटककरणे पण्डितानां प्रवृत्तिः ? अतः केषाञ्चनाऽधमपात्राणां प्राकृतेन व्यवहारेऽपि उत्तमपात्राणां संस्कृतेन व्यवहारः तदवगमश्च सर्वसाधारण आसीदित्येव निश्चेतव्यं भवति ।

## ग्रान्थिकीत्वम् ।

ग्रन्थाश्चैतद्भाषायां न केवलं लक्षशः कोटिकोटिशः प्रणीतास्तेषु तेषु विषयेषु । अमूल्यानि तत्तादृशानि रत्नान्यन्तर्भावयन्तो ग्रन्थविशेषा अतिप्राचीना अदर्शनं बहवो गताः प्रापिताश्च । अद्याऽपि तादृशास्सन्ति बहवोऽप्रकाशिताः, येषां प्रकाशनेन भारतभागधेयमुन्मिषितं स्यात् ।

एवं पुरुषार्थ इव पुरुषोत्तम इव च चतुर्धाऽऽत्मानं विभज्य सर्वामिमां भारतभूमिं, आ च हिमवत आ च कुमारिकाभ्यः, आ च पश्चिमोदधेः, आ च पूर्वोदन्वतोऽभिव्याप्य सर्वं भागं, सर्वोत्तमतया विराजमानाऽऽसीदियं देववाणीति भूतार्थकथनमेव, नाऽतिशयोक्तिः । एवञ्च दैवी वागियं तदात्वे स्वराज्यमूर्धनि प्रतिष्ठिताऽऽसीदिति किमु वक्तव्यम् ?

## अस्या आधुनिकदशा ।

एवमस्याः पुरातनीं परमोन्नतिं ग्रन्थेभ्य इतिहासाच्चाऽवगच्छत आधुनिकीं चाऽवनतिमध्यक्षमीक्षमाणस्य कस्य नाम सचेतसस्तत्प्रणयिनः पाषाणकठिनमपि न द्रवेद्धृदयम् ? सति चैवं कथमेवमेषा शोचनीयामिमां दशामापन्नेदानीम् ? केन वा

कारणेन स्वस्थानात् प्रच्याविता ? । किमर्थं वा तदुपसेविनः क्लिश्यन्ति नितरामधीतिनोऽध्यापयितारो वा ?

केचिदभिप्रयन्ति—नाऽस्याः स्वस्थानात्परिच्युतिः, न वा प्राचीनं गौरवमस्या गतम्। अद्याऽपि बहवो भाषामिमामधीयत एव सानुरागम्। न वा तदुपसेविनां क्लेशलेशः, नैव सुरभाषोपसेवी क्वचिदद्याऽपि क्षुधा मृतः, उदन्यया वा। धार्मिकजनता तां तथैवाऽऽद्रियते। अतो न किञ्चिदवहीनमिति। न वयमिदमभ्युपगन्तुमीश्महे एतद्विपरीतामेव लोकयात्रां प्रत्यक्षमीक्षमाणा जगति। य एवमभिप्रयन्ति किं न ते शृण्वन्ति शतेष्वेकोऽपि गैर्वाणीं नाऽधीत इति ? सोऽप्येकोऽन्यां गतिमाकलय्य विद्याध्ययने काञ्चित् मनागप्यपश्यन् बलादेव नियोज्यते एतदध्ययन इति ? किं ते नाऽवगच्छन्ति—अध्ययनकालेऽधीतिभिरात्मन एकस्मै समयायाऽप्यपर्याप्तमतिक्षुद्रमपि लब्धुं भोजनं कास्का दशा अनुभूयन्त इति ? अपि न ते जानन्ति—प्राप्याऽपि काञ्चन जीविकामशनाच्छादनादेरपर्याप्तां अपूरितोदरा एवाऽस्पृष्टस्वच्छशोभनवस्त्रा एव च बहवः सुधियो नयन्त्यात्मीयां जीवनयात्रां खिन्नमनस आत्मानं आत्मनो विद्याञ्च बहुशो निन्दन्त एवेति। एवं शतशो दृष्ट्वा श्रुत्वाऽवगत्याऽपि च ये नाम—एतावताऽपि किञ्चिन्नावहीनमिति कथयितुं प्रगल्भन्ते, ते क्वचित् सम्प्राप्तसमुचितजीविकान् लब्धप्रतिष्ठांश्चाऽऽत्मन एवोपमां कृत्वा परानपि तथैव चक्षुषा पश्यन्तः परमं पाण्डित्यं प्राप्ता इत्यत्र न संशयः। परं तात्विकी परिस्थितिः सैव, या मया पूर्वं वर्णिता। सेयं सर्वैः प्रत्यक्षीक्रियमाणा न सँछादनमर्हति। सैषा दशा देववाण्या अपसारणीयाऽस्माभिस्सर्वप्रयत्नेनाऽपि। यावदियं न सर्वसुलभा क्रियते, सारल्यं च नाऽऽपाद्यते, तावदयं दोषो नाऽपेयात्। प्रायशस्समेषामेव विद्यार्थिनां विदुषां च कश्चन प्रबोध एतद्विषये प्रबलस्समुदितः। सोऽपि नाऽतिचिरादेव दोषमिममस्याः परिजिहीर्षति। अतस्तेऽप्यत्रास्माकं साह्यमाचरेयुः। परं तदपेक्षया बहु गन्तव्यमग्रेऽस्माभिः, यतो हि भाषाया अस्या राष्ट्रीयत्वापादनं परममुद्देश्यमस्माकम्। योऽयमस्माकमुद्देशः स नवे पथि कस्मिंश्चिदद्य यावदक्षुण्णे पदनिक्षेपणमिति न मन्तव्यम्, यतोऽधुनैवोपपादितम्—अयमेव प्राचीनोऽध्वा प्रायशो भूसुरैर्भूपतिभिरन्यैश्च क्षुण्ण इति। अतो नाऽस्माभिर्नूत्ने पथि पदं निक्षिप्यते। प्राचीनारूढ एव मार्गो मध्यकाले छिन्नभिन्नः पुनर्नवीकर्तुमुद्दिश्यते तावदेव। परमत्रापि महान् क्लेशोऽनुभवनीयो भवेत्, मध्ये बहुभिरनेहोभिर्विच्छिन्नो नाऽल्पेनायासेन सहसा श्लक्ष्णीकर्त्तुं शक्यते, तथाऽपि यतितव्यमेव, 'न साहसमनारुह्य नरो भद्राणि पश्यति' इति ह्यभियुक्ताः कथयन्ति।

तत्र प्रथमतो विचारणीयम्—प्रयत्नोऽयमास्माकीनः तिलेषु तैलनिष्पीडनम्, उत सिकतास्विति। न वयं जानीमः—कुतो न फलेदस्माकं मनोरथतरुरिति। हिन्दीभाषां राष्ट्रभाषां चिकीर्षन्ति तज्ज्ञाः, उरुदूभाषां तदभिमानिनः, केचिदुभयसंमिश्रां काञ्चन भाषाम्। आसु न काऽपि कदाचिदपि सर्वदेशव्यापिन्यासीदस्ति वा इति तु

सुविदितमेव । यदि च तास्वेकस्यास्सर्वजनीनत्वमापाद्येत, तर्हि कुतो न गैर्वाण्यास्तथा-त्वमापद्यते ? सत्स्वपि विभिन्नभाषाभाषिषु जनेषु हिन्दीभाषाभाषिण एव संख्यया सर्वानतिशेरत इति तु सत्यं, तथाऽप्यद्याऽपि तादृशाः प्रदेशास्सन्ति भारतभूमावेव यत्र हिन्दीभाषाया उरुदूभाषाया वा नामाऽपि न जानन्ति जनाः । परं नैकमपि नगरं ग्रामो वाऽस्ति कुत्राऽपि प्रदेशे यत्र स्थितेषु न कोऽपि जानाति सुरगवीमिति । तेषा-मश्रुतापरिचितभाषापेक्षया स्वग्रामे स्वनगरे वा इतस्ततोऽसकृच्छ्रुतचराया अध्ययने महत्सौलभ्यं स्यात् ।

किञ्च तादृशेषु प्रदेशेषु हिन्दीभाषाया उरुदूभाषाया वा शिक्षणार्थं तदभिज्ञा-स्तस्माद्देशादानाययितव्याः । यथेदानीं मन्द्रप्रान्ते हिन्दीशिक्षणार्थं संयुक्तप्रान्तत एवाऽध्यापकाः प्रेष्यन्ते । तदर्थञ्च क्लेशोऽधिकतरस्तेषां बहुविधः । संस्कृतशिक्षणार्थं तु न तादृशः क्लेशः, यतस्तत्तत्स्थलगताः पण्डितास्तत्र नियोक्तुं शक्यन्ते । ते चाऽति-सौलभ्येनाऽध्यापयेयुश्छात्रान् ।

किञ्च ये नामाऽऽत्मानमभिमन्वते हिन्दुत्वेन तेषां पूर्वजेष्ववश्यमेव केचिदधीतैत-द्भाषाका भवेयुरित्यत एतेषामसृक् मस्तिष्कं वाऽऽरूढैतत्संस्कारमेव भवेदित्यत्र नाऽस्ति संशयः । अतो निगूढस्य तस्योद्बोधनमेवाऽऽवश्यकमेतद्भाषाविषये । भाषान्तरविषये तु संस्कार उत्पादनीय इत्यस्ति महान् भेदः । गीर्वाणभाषायां बहून्यतिकठिनानि पदानि प्रकृतदेशकालानुपयुक्तानि सन्ति यान्यवलोक्य बिभ्यति सर्वेऽपि तामध्येतुमिति समानोऽयं दोष इतरत्राऽपि । विषयेऽत्राऽचिरादेव पत्रिकायां प्रकाशितं लौकिकेषु परं पारङ्गतानां श्रीमतां डा० तेजबहादुरसप्रूमहोदयानां वचनमुद्धृत्याऽत्र श्रीमतां पुरत उपस्थापयितुमिच्छामि । तदित्थम्—"It is complained that Urdu contains words which are unintelligible to the villagers, there are hundreds of words which are equally unintelligible to them in Hindi which is in vogue at present." "अर्थात् उरुदूभाषायां सन्ति बहूनि पदानि येषामर्था ग्रामीणैः पुरुषैर्नाऽवगम्यन्त इति अभिशस्यते, परं हिन्दीभाषायामपि तथैवाऽनेकशतानि पदानि सन्ति यान्यज्ञातार्थानि अनुपयुक्तानि चेति । अतस्सार्व-त्रिकोऽयं दोषो नैकत्रैव व्यपदेष्टुमुचितः ।

अथ वा यदि सन्ति कठिनानि पदान्यप्रकृतानि च स्युर्नाम, का नो हानिः ? सर्वाण्यपि तान्यध्येयानि अध्यापनीयानि वेति का वा राजाज्ञा ? पाठप्रणाली काचित्सर्वत्र प्रवर्त्तनीया यथा नातिचिरेण कालेन सरलानामुपयुक्तानामेवाऽध्यापनं सम्पद्येत । ग्रन्थाश्च तादृशा बालशिक्षार्थं प्रणेतव्याः । ये व्यवहारौपयिकैरतिप्रसिद्धैः स्सरलैश्शब्दैरर्थैरेव च सन्दृब्धा भवेयुः ।

किञ्चाऽधिकरणराजसभादावपेक्षितव्यवहार सम्पत्तयेऽपेक्षिताः पारिभाषिकाः शब्दास्सर्वे प्रायशोऽस्मत्पूर्वाचार्यैरन्विष्य प्रयुक्तास्स्वग्रन्थेषु । येऽधुनापि हिन्दी-

भाषायामपि व्यवह्रियन्ते। अतस्तदर्थमपि न नः क्लेशलेशः। कोऽयमत्र भवतामतिमैच्य आग्रहविशेष इति चेत्—कथमयमाग्रहः? यदि नाम कश्चिस्स्वस्य स्वभ्रातृणां स्वदेशमात्रस्य वा निखिलश्रेयोनिदानभूतां सर्वस्माद्दुःखात्परित्राय पोषयन्तीं जननीशतसमां पूर्वमेव परमे स्थाने निवेश्य लालितां कालचक्रवशात् स्वस्थानतश्च्युतां देवगिरं पुनस्तस्मिन्नेव स्थानेऽभिषिच्य यत् तादृशं देशमङ्गलमाहर्त्तुमिच्छति सोऽयमाग्रहः? को वा मातृकुक्षिपरिपोषितस्तदीयस्तन्यविवृद्धो दुर्हृदयोऽपि वक्तुमीष्टे प्रयत्नोऽयमाग्रहपूर्ण इति। न हि। अतस्स्वकर्तव्यमिदं कार्यजातमेकैकस्याऽपि स्वोन्नतौ स्वदेशोन्नतौ स्वजननीसमुद्धरणे वा दर्शितादरस्य।

किञ्च नाऽयमस्माकमभिलाषो भाषासौन्दर्यसौष्ठवप्राचीनतादिगुणगणसमाकृष्टमनस्कत्वकृतः, यया भाषया भारतं वर्षमिदं समग्रमप्येकेनैव सूत्रेण बद्धमासीत्। यद्बलादेव च सर्वे वयं परस्पराहष्टश्रुतशीलचारा अपि एकस्यामेव वर्तन्यां गच्छन्त एकप्रकारावेव विधिनिषेधावाद्रियमाणा एकमेव धर्मं चरन्तः कदाचिद्दैववशाद्दर्शनप्रसङ्ग अननुभूतपूर्वं प्रेमभरजनितमानन्दमनुभवन्तो भ्रातृभावं वा स्नेहरसाप्लुतमुपदर्शयन्तो नित्यतृप्ता आत्मनो जीवनयात्रां निरवर्तयाम, यस्या ह्रासदोषादिदानीमस्माकं तादृशो भावो मन्दं मन्दं विपरिवर्तते प्रान्तीयभावश्चाऽस्मान् शनैः जिग्रसिषते। प्रथमं मामेव निदर्शयत। कोऽहम्? कुतस्त्यः? कुत्रत्यः किङ्गुणः? किंशीलो वा? मयाऽत्र सभामध्य उपस्थितौ भवतां प्रेमरससमाप्लुते मनसि दृढतरमवकाशं लब्धुं वा कोवाऽवसरोऽलप्स्यत, यदीयं भगवती जगज्जननी देवभाषाऽस्मानेकस्मिन् सूत्रे नाऽग्रन्थिष्यत्।

किञ्चाऽस्या एव देव्याः कोऽपि महिमा—यद्वयं भारतीया भूमावन्यत्र सभ्यतायाः कस्या अपि अङ्कुरोदयात्पूर्वमेव तस्यां परिनिष्ठिता अभूम, आस्महे चाऽधुनापि। अतो भारतीयसभ्यताया उत्पादिनी परिपोषिणी चेयमेव महनीयतमा भाषेति साध्ववगम्यते। भिन्नभिन्नभाषाभाषिणोऽपीमामात्मीयामेव सहार्दमभिमन्वते भारतीयाः। अतो देवभाषाया राष्ट्रियत्वापादनमस्मास्वैकमत्यविशेषसम्पादनद्वाराऽतिप्राचीनरीतिसमुद्धारद्वारा तद्गतानाममूल्यरत्नानां प्रख्यापनद्वारा च कमपि महिमानमाविर्भावयेदधुनेति न तत्र संशयः।

## किमस्माकं कर्तव्यम्?

एवं सर्वाभ्युदयकरेऽप्यत्र कार्ये यदि विदुषां वैमत्यं भवेत्, तर्हि ते विषयवैतथ्यमवबोधनीया यथावसरम्। जनता चाऽन्यत्राऽपि सभाधिवेशनव्याख्यानादिमुखेन वस्तुयाथात्म्यप्रतिपादनद्वाराऽत्र रुचिमत्यापादनीया। ततो राजकीयाश्च प्रार्थनीया भाषाया अस्या अनिवार्यशिक्षाकोटिनिविष्टत्वसम्पादने, तदनुरोधेन च बहूनामध्ययनागाराणामुद्घाटने, तदनुगुणशिक्षाप्रदाने च। सर्वेषामेव विषयाणां संस्कृतभाषये-

वाध्यापनेऽध्यापकाः प्रार्थनीयाः । असति विशिष्टबाधके सर्वेऽपि व्यवहारा गैर्वाण-भाषयैव कर्तव्याः । छात्राश्च सुरवाण्यामेव लेखनभाषणादौ विशेषतश्शिक्षणीयाः । ते च ते च महाराजा विद्याप्रणयिनस्सुरभारतीसेवकाश्च धनिका यथायथमत्र साहाय्य-माधातुमभ्यर्थनीयाः । परमत्र सर्वत्राऽप्यस्माभिरत्यक्तधर्मपथैरेव भाव्यम् । नेदं कदाऽपि विस्मर्तव्यं सर्वपथीनश्रेयोदायिन्यपीयं सुरगवी तदवलम्बिनो वयं च सर्वदा धर्मोत्तरा एवेति । यदि च स भगवान् सनातनो धर्मोऽवलेहनं प्राप्यते मनागपि, तर्हि अवधी-रितोऽणुमात्रमप्यास्माकीनप्रयत्नफलदानाय न कल्पेत । अतः प्राचीने धर्म्ये पथि स्थितैरेवाऽत्र यदि प्रयत्येत स्वाभीष्टसम्पादने, तर्हि तं मनोरथं भगवान् परमेश्वरः "धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ" इति स्ववचनानुरोधेन स्वस्वरूपमेव मन्वानो नातिचिरादेव तत्सम्पादनेनाऽस्माननुगृह्णीयात् । वयमप्यतिप्राचीनामपि नित्य-यौवनां मङ्गलैकमयीमस्मन्मातृरूपां देववाणीं यथावत्पूजयन्तः, तस्याः, तस्य परम-पूरुषस्य च निस्सीम्नोऽनुकम्पाया आत्मानं अस्मद्भारतभूमिञ्च नित्यभाजनं कुर्वन्त-स्सर्वदा सुखमेधिषीमहि ।

इति शम् ।



युक्तप्रान्तीयसंस्कृतपाठ्यप्रणालीसुधारसमितिकर्णधाराणां पुरतो निवेदयति—

## अयि सहृदयाः सुधियः !

तत्र भवतां भवतां पुरत उपहाररूपेण पञ्चषशब्दा उपस्थाप्यन्ते—'बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता दिव्यं वर्षसहस्रम्' इत्युपक्रम्य 'प्रधानं च षट्स्वङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति ।' ( महाभाष्यम् १।१।१ ) इति प्राञ्जलं महामुनिपातञ्जल्युपदेशं 'सेयमान्वीक्षिकी—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वभूतानां विद्योद्देशे प्रकीर्तिता ॥( न्या० भा० १।१)

इति वात्सल्यायनं महामुनिवात्स्यायनादेशं च पुरस्कृत्य तथा 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति परिपक्वबुद्धिबुधवचनमनुसृत्य चिरकालतोऽद्यपर्यन्तं काश्यां पठनप्रणाली प्रचलति अर्थात् आदौ केवलं व्याकरणं न्यायं वा छात्रा अधीयते अध्यापकाश्चाध्यापयन्ति । तत्र लब्धव्युत्पत्तयः पश्चाद्यथेष्टं विषयान्तरं तत्तद्विषय-निष्णातेभ्योऽनुशीलयन्ति । एतयैव प्रणाल्या शिवकुमारोपमाः शिवकुमारमिश्रप्रभृतयो-ऽध्यगीषत अध्यापिपंश्च । इदानीन्तना अपि उत्कृष्टविद्वांस एतयैव प्रणाल्या पठन्ति पाठयन्ति च । किम् इमे व्याकरणस्य न्यायस्य वाऽध्ययनकाले इतिहासभूगोलखगोला-दीन् गणितं च सहैवापाठिषुः ? प्रथमायां, मध्यमायां; मध्यमायाञ्च व्याकरणेन सहैव भूगोलादीन् अध्यापयितुकामैः युक्तप्रान्तीयसंस्कृतपाठ्यप्रणालीसुधारसमितिकर्णधारैः

सह युयुक्षवः काशीविद्वांसो मम सखायः व्याकरणाध्ययनसमये गणितादीनपाठिषुः ?
यदि नापाठिषुः, तदा अग्रेतनानां प्रथमामध्यमाच्छात्राणां केवलव्याकरणाध्ययनस्यापि
सुव्यवस्थाम्प्रथमतोऽकृत्वा तेषां शिरसि गणिताद्यध्ययनभारमपि स्थापयन्त्या उक्त-
समितेः कर्णधारेभ्यः स किं सखा...' इति वचनमनुसृत्य हितमुपदेशं कुतो न
प्रयच्छन्ति ?—यत् हिन्दीमिडिलपरीक्षोत्तीर्णा न्यूनातिन्यूनहिन्दीप्राइमरीपरीक्षो-
त्तीर्णा वा प्रथमामध्यमापरीक्षायां प्रवेशार्हाः, प्रतिपाठशालं छात्राणां धार्मिकं साप्ताहिक-
समाचारपत्रं मासिकसमाचारपत्रं वा अवश्यं पाठ्यं भविष्यतीति नियमञ्च नियमा-
वल्यां योजयित्वा सफलयन्तु स्वमनोरथं भवन्तो वृथा सङ्घर्षं मा वर्द्धयन्तु इति ।

अधुनातनसंस्कृतविद्यालये प्राय एक एव अध्यापकः प्रथमां मध्यमाञ्च पाठयति,
'स्वाधीतं विस्मृतं माभूत्' इति उत्तमपरीक्षाग्रन्थानपि अध्यापयति अवलोकयति च ।
एवम् उत्तमपरीक्षाध्यापका अपि प्रायः व्याकरण-न्याय-मीमांसादिपरीक्षासु पाठ-
यित्वाऽपाठयित्वा वा 'मुण्डितोऽसि भिक्षित्वा भुङ्क्ष्व' ( मूंड दिया माँग खा ) इति
न्यायमनुसृत्य विद्यार्थिनः प्रेषयन्ति । भगवानेव जानातु, कथं सहस्रमुखमकृत्वा इमे
सर्वान् पाठयन्ति विषयान् ।

संस्कृतपाठ्यसुधारसमितिकर्णधाराः ! भवन्तः कथयन्ति यद् वयं भारतवर्षस्य
सभ्यतारक्षायै प्रतिष्ठायै च प्रयतामहे यथेष्टमुत्सहामहे चेति । परन्तु अस्य क्षुद्रजनस्य
चेतसि भारतसभ्यताया उपरि पाश्चात्यसभ्यताया महानयं विजयः यत् संस्कृतपाठ्य-
प्रणाल्यामपि तदीयानुकरणम् । सम्प्रति भारतीयसंस्कृतपाठ्यप्रणाल्या आरम्भे अर्थात्
प्रथमामध्यमयोः एकविषयता द्विविषयता वा भवति, अन्ते बहुविषयता । अस्या
बीजन्तु आदौ एकविषये प्रावीण्यलाभे सति सर्वेषु विषयेषु सौकर्येण प्रावीण्यलाभः,
तथा स्वल्पकायधनासु तत्तद्ग्रामनगरपाठशालासु सर्वविषयाध्यापकालाभः, अन्तिम-
परीक्षार्थं प्राप्तायां काश्यां च सर्वविषयाध्यापकलाभ इति । इयं हि काशीस्थविदुषा-
मुज्ज्वला कीर्तिः यत् कस्यायं छात्र इति अगणयित्वा पुत्रप्रेम्णा सर्वानविशेषेण
पाठयन्ति । पाश्चात्यपाठ्यप्रणाल्यां तथा तदनुकारिण्यां भारतीयाङ्गलपाठ्यप्रणाल्याञ्च
आरम्भे बहुविषयता, क्रमश उत्तमपरीक्षायां एकद्विविषयता भवति । किं प्रथमामध्यमयोः
भूगोलखगोलगणितेतिहासप्रवेशे तस्यानुकारो न स्यात् ? किमेवं करणे प्रकाण्ड-
पाण्डित्यं भवेत् ? तस्माद् अनालोच्य परिणामं तथा संस्कृतपाठशालानां संस्कृतच्छा-
त्राणाञ्चार्थिकीं दुरवस्थितिं तदनुकरणं भारतसंस्कृतपाठ्यप्रणाल्या उपरि किं न
विजयः ? किमनया व्यवस्थया बहुपाठशालानां द्वारं पिहितं न स्यात् ?
मया ऋषिऋणविमुक्तये संस्कृतभारत्याः पुरतो वक्तव्यताविनिवृत्तये च अयं
लेखः प्रकाशितः । अन्ते च ममेयं प्रार्थनास्ति यत् प्रथमं भवन्तो विज्ञानपरिषदि
युक्तप्रान्त-प्रधानमन्त्रिणां व्याख्यानस्य समालोचनायां कृतां "आज"पत्रसम्पादकस्य
टिप्पणीं प्रदर्शन्युद्घाटनसमये प्रधानमन्त्रिभिर्दत्तमुन्मत्तहस्तिदृष्टान्तञ्च (आज भा० ५२

सं० ८ ) निभालयन्तु तदनन्तरमिमं लेखं पर्यालोच्य यद्भवद्भ्यो रोचते तत् कुर्वन्तु भवन्त इति ।

भवतां किङ्करः—
चण्डीप्रसादशुक्लः
काशीस्थ श्रीजो० म० गोयनका सं० महाविद्यालयस्य लघुसेवकः ।

स्वामी दयानन्दजी महाराजः
सनातनधर्मस्य सुप्रसिद्ध व्याख्याता



वर्णाश्रमस्वराज्यसङ्घकेन्द्रपुरुषपूज्यपाद-श्रीमत्-पण्डित-

प्रवरश्रीपञ्चाननतर्करत्नमहोदयान् प्रति प्रहितानां

धर्म्मप्राण-लक्ष्मण-शास्त्रिद्राविणमहोदय-

लिपीनामेकतमस्याः प्रतिलिपिः।

॥ श्रीगुरुः शरणम् ॥ जलगांव पूर्व-
खानदेश दी॰ ८-
७ शनिवार १९४७

श्रीमत्सु पूजनीयेषु तर्करत्नमहोदयेषु परःसहस्राः
प्रणतीर्विरच्य सविनयं निवेदयामि-श्रीमदा-
देशानुसारं महाराष्ट्रप्रान्ते परिभ्रमणं विधाय
जलगांवनगरे समागत्य च। अखिलभारतवर्षीय
वर्णाश्रमस्वराज्यसङ्घस्य बृहदधिवेशनं चिकी-
र्षुः श्रीचरणानामागमनं हृदयेनाभिलषा-
मि। तत्रत्यापि कार्यसहस्रे श्रीयुतपण्डितश्री-
जीवन्यायतीर्थमहाशयेन सहात्र सम्मेलने
वश्यं पौषशुक्लाष्टम्यामस्मिन्नगरे समाग-
न्तव्यमेवेति प्रार्थये। बहुदेशीया विशिष्टविद्वां-
सो धार्मिका महानुभावाः [illegible] यात्र समु-
पस्थिताः स्युस्तथा श्रीचरणाः प्रयतन्तामिति
प्रार्थये। एतदधिवेशनं सम्यक् सफलं सञ्जातं
चेन्महाराष्ट्रदेशः सर्वोऽप्यात्मसाद्भविष्यति।
एतत्साफल्यसम्पादनं केवलं श्रीमतामेवाधीनं
श्रीमान् महेशचन्द्रन्यायोपाध्यायमहाशयोऽपि
यथाऽत्र समागच्छेत्तथा विधीयतामिति प्रार्थना
श्रीशरच्चन्द्रकविराजप्रभृतीन् प्रोत्साह्य बाहुल्येनावि-
द्वांसोऽत्र यथा समेष्यन्ति तथा विधीयताम्
केवलं श्रीचरणानामवलम्ब एवास्माकं शरण-
मिति सर्वथा रक्षणीया वयमिति प्रार्थयामः

किमधिकं नाऽऽनिवेदितेन, तद्देशीयवृत्तपत्रिकासु बाहुल्येन संचारो यथा स्यात्तथा श्रीजीवन्यायतीर्थमहाशयं प्रोत्साह्य तद्द्वाराऽनुकंप्यामिति प्रार्थ्यते श्रीचरणानां वशंवदः

श्रीलक्ष्मणशास्त्री द्राविडः

वर्णाश्रमस्वराज्यसंघ आफिस

[illegible]

THE ANNEXED CARD IS INTENDED FOR THE ANSWER.



10, Manmandir

Benares City

# ननिशाकरः।

( १ )

न रजनी रमणी रमणीयभा

न गगनं ननु ! नीलनवाम्बरम्।

न चपलाऽस्ति तदीय सुदृक्छटा

जयति तद्वदनन्न निशाकरः ॥

( २ )

मुदिरमण्डलमण्डितकालगे
उपवने भवने भुवनेऽखिले ।
अनुपमः समयः सुनिभात्यहो
नहि रविर्न निशा न 'निशाकरः' ॥

— प्रभातमिश्रः प्रयागनिवासी ।



## यूरोपीयदेशेषु वायुयान संख्या ।

सर्वेषामपि देशानामधिपतयः प्रायः स्वकीयवायुयानानां वास्तविकसंख्या गोपयन्ति । तथा विश्वस्तसूत्रेभ्यो यत्किञ्चिदवगम्यते तदनुसारं नीचैः कस्मिन् देशे कियन्ति वायुयानानि सन्तीति प्रकाश्यते—

| देशाः | | | वायुयान संख्या |
|---|---|---|---|
| ग्रेट ब्रिटेन | ... | ... | २००० |
| फ्रांस | ... | ... | २५०० |
| जेकोस्लोवेनिया | ... | ... | ५५० |
| जर्मनी | ... | ... | ३५०० |
| इटली | ... | ... | २००० |
| रूस | ... | ... | ४००० |
| पोलेण्ड | ... | ... | ५५० |

ब्रिटेनस्य २००० वायुयानेषु तानि सर्वाण्यपि वायुयानानि सन्ति यानि भारते देशान्तरेषु च वर्त्तन्ते ।

विहारप्रान्तीयसरकारेण ग्रामसुधारविभागे २१६ पुरुषाणामावश्यकतायै विज्ञापनं निस्सारितमासीत् । श्रूयते यत्तदर्थं १० सहस्रपुरुषाणां निवेदनपत्राण्या-गतानि सन्ति !

× × × ×

२७ वर्षानन्तरं डाक्टर हरदयालमहोदयाय भारते आगन्तुमनुमतिप्रदानाय भारतसरकारेण निश्चितम् । सन् १९११ तमे वत्सरे डाक्टर महोदयो भारताद्बहिष्कृत आसीत् । इदानीं प्रतिज्ञातं तेन यदद्यारभ्य अवैधे आन्दोलने सम्मिलितो न भविष्यामीति ।

× × × ×

एको भारवाहो ( कुली ) लखनऊ स्टेशनात् रकाबगंजे गच्छन् १००० रूप्यकैः पूर्णां पेटिकामेकामादायपलायितः। तत्रैवाऽन्योऽप्येको भारवाहः संयुक्तप्रान्तीय सिविलसेक्रेटरियट् कर्मचारिणः श्री उमर महोदयस्य १००० रूप्यकाणां वहूनि वस्तूनि गृहीत्वा कुत्रापि गतः। अतः सावधानैर्भवितव्यं जनैः।

दिसम्बरमासस्य २७-२८-२९ तारिकासु काश्यां महता समारोहेणाऽखिल भारतीयवर्णाश्रमस्वराजसङ्घस्यैकादशमधिवेशनं श्रीयुत् वैजनाथवाजोरिया एम० एल० ए० महोदयस्य साभापत्ये सुसम्पन्नम्। स्वागतसमितेरध्यक्षेण पं० धर्मदत्त वेदशास्त्रिणा पं० वेचूमिश्र शास्त्री एम० एल० एल० बी० महोदयेन मन्त्रिणा चाऽधिवेसनसफलतायै महान् यत्नोऽनुष्ठितः।

× × × ×

अ० भा० हिन्दी साहित्य सम्मेलनस्याऽग्रिममधिवेशनं काश्यां भविष्यति।

× × × ×

वर्षेऽस्मिन् हिन्दूमहासभाया वार्षिकमधिवेशनं दिसम्बरमासस्य २९-३०-३१ दिवसेषु नागपुरे संजातम्।

× × × ×

वर्षेऽस्मिन् सितम्बर मासस्य तृतीये सप्ताहे शिमलाया हिन्दी साहित्यसम्मेलनस्य २७ तमवार्षिकाऽधिवेशनं श्रीमतः "आज" सम्पादकस्य पं० बाबूराव विष्णु पराड़कर महोदयस्य सभापतित्वे सम्पन्नम्। सहैवाऽन्यान्यपि तत्राधिवेशनानि जातानि। सूची नीचैर्दीयते—

साहित्यपरिषदः—अध्यक्षः डा० धीरेन्द्रवर्मा एम० ए० डी० लिट्।
इतिहास परिषदः—अध्यक्षः श्री जयचन्द्र विद्यालङ्कारः।
दर्शनपरिषदः—अध्यक्षः डाक्टर भगवानदास एम० ए० डी० लिट्।
विज्ञान-परिषदः—अध्यक्षः श्री फूलदेव सहाय एम० ए०।
संगीतसम्मेलनम्—अध्यक्षः श्री डी० के० चौधरी लहरी एम० एल० ए०।
एवं कविसम्मेलन—महिला सम्मेलने अपि सम्पन्ने।

"केन्द्रिय असेम्बली" मध्ये डा० देमुमुखेन हिन्दूस्त्रीणां कृते विवाहविच्छेदाधिकारदायकः प्रस्ताव उपस्थापितः। तदुपरि सनातनी सदस्य—श्री वैजनाथजी वाजोरियामहोदयेनोक्तम्—"डाक्टर साहब का रोग दिन-दिन बढ़ता जा रहा है"। एतत्प्रस्तावाऽनुसारं पत्यौ पञ्चभिः वर्षैरन्यत्र स्थिते, परस्त्रिया सह कृते विवाहे धर्मच्युते वा स्त्री पतिं त्यक्तुं शक्नोति।

× × × ×

# सूर्योदयः।

चतुर्दशे वर्षे } माघ फाल्गुन चैत्रपूर्णिमाः १९९५-९६ { ८-९-१० संख्याः

## बड़ौदानरेशस्य निधनम्।

गतफेब्रुअरीमासस्य षष्ठ्यां तिथौ बम्बईनगरे स्वकीयभवने बड़ौदानरेशस्य सर जयाजी राव गायकवाड़महोदयस्य सार्धाष्टवादने दिने निधनमभूत्।

महाराजोऽयं सन् १८६३ ख्रीष्टाब्दे मईमासीय-१० दशतारिकायां जन्म-लब्ध्वा सन् १८७५ ख्रीष्टाब्दीय मईमासस्य २७ सप्तविंशतितमतारिकायां त्रयोदश-वर्षीय एव वड़ौदासिंहासनमधिरूढवान्। पूर्वमस्य विवाहसंस्कारः तंजोरराज्येश्वरपुत्र्या श्रीचिमलनाबाई महोदयया सह समजनि। निधनमुपगतायाञ्च तस्यां महाराज देवास-नरेशस्यात्मजया सह परिणयोऽभूत्। महाराजोऽयं सम्प्रति स्वराज्यप्रजाऽभ्युदयका-मनया सर्वत्र राज्ये साक्षरताप्रचारस्य, कृषिसमुद्योगस्य प्रबलं प्रयत्नं कारितवान्। शिक्षाप्रियोऽयम् महाराजः स्वराज्ये प्रतिग्रामं प्रतिनगरं जङ्गमपुस्तकालयप्रबन्धं कारयित्वा सर्वा अपि प्रजा शिक्षिताः कृतवानासीत्। पाठशाला—मल्लशाला—चिकित्सालयादीनामावश्यकोपयोगिनां प्रजापेक्षितानाञ्च सर्वेषामेव वस्तुनां विनियोगोऽस्य राज्ये सुविहितम् अस्ति।

सूर्योदयस्य प्रचारोऽदसीयराज्ये साधुविद्यते। एवम्भूतस्य संस्कृतभाषाप्रियस्य राज्ञो निधनमस्मान् समुद्वेजयति इति तदीयात्मनश्चिरशान्तिम् कामयमानास्तदीयशोक सन्तप्तपरिवारैः सह समवेदनां प्रकटयन्तो विरमामः।

## किशनगढाधीशस्य देहावसानम्।

गतफेब्रुअरीमासीय चतुर्थतारिकायां स्वराजधान्यां किशनगढाधीशस्य महाराज-दीक्षितयज्ञनारायणसिंहबहादुरमहोदयस्याकस्मिकं देहावसानं हृद्गतेरवरोधात् समजनि। महाराजोऽयम् धार्मिकः प्रजावत्सलः सरलचेता उदाराशयश्चासीत्। एतस्य वदान्यताऽपि प्रसिद्धैवासीत्। श्रीभारतधर्ममहामण्डलीयधर्मकार्ये साहाय्यं महाराजेनानेन सर्वथा विधीयतेस्म। धर्माभ्युदयार्थं सर्वथा सर्वदा बद्धपरिकरस्यास्य भूपतेरवसानाद्वयं सर्वेऽपि शोकसन्तप्ताः तस्यात्मनः श्रीकाशीविश्वेश्वराच्चिर शान्तिं प्रार्थयमानाः तच्छोकसन्तप्तैश्च तदीयपरिवारवर्गैः समवेदनां प्रकटयामः।

## प्राप्तग्रंथसमालोचनम् ।

शक्तिभाष्यतिमिरभास्करः—प्रथमभागः परमहंसपरिव्राजकाचार्यदण्डि-स्वामि श्रीशान्ताश्रमविरचितः । ऋणमुक्तेश्वर महादेव बड़ौदा नगरात् विना मूल्यं उपलभ्यते ।

पुस्तकमिदं परमप्रसिद्धविदुषां सम्प्रति वाराणसीमधितिष्ठतां त्यक्तमहामहोपाध्यायपदपद-नानादर्शनपरमाचार्य-सर्वतन्त्रस्वतन्त्र श्रीपञ्चाननतर्करत्न-भट्टाचार्य्यमहोदयानां ब्रह्मसूत्रशक्तिभाष्यस्य समालोचनायां लिखितं दृश्यते, ब्रह्मसूत्रशक्तिभाष्यं हि मुद्राङ्कनप्रकाशित-प्रथमाध्यायमात्रमपि अल्पीयसैव कालेन जगति महतीं प्रसिद्धिमलभत इति परमसन्तोषास्पदमस्माकम् ।

यद्यपि तत्र शक्तिभाष्यस्योपोद्घाते भाष्यप्रणेतृभिर्महोदयैः स्वशब्देनैवोक्तम्— "इदं पुनरिहावधेयम्भगवद्भिराचार्यपादैः सन्यासिनामवबोधाय यद् ब्रह्मसूत्रव्याख्यानमारचितम् । शक्तिभाष्येऽस्मिन् तद्विरुद्धवादभूयिष्ठेपि तेषां श्रीमदाचार्यचरणानां मतविरोधित्वं नास्ति । × × × × × × एवमिह शक्तिभाष्ये प्रपञ्चसारादि-विदितमाचार्याशयं क्वचिद्व्यक्तं क्वचिद् निगूढं च शारीरकभाष्यविषमार्थ-भूयिष्ठं विवरितुमिहास्माकं प्रवृत्तिः ।" (श० भा० पृ० ४ पं० ९ पृ० ६ पं० ११) तथापि अस्य पुस्तकस्य प्रणेत्रा "मणिनिर्मितेऽपि भवने पश्यति पिपीलिकश्छिद्रम्" इति लौकिकन्यायात् सर्वत्र श्रीमदाचार्यचरणमतविरोधित्वमेवेह शक्तिभाष्ये दृश्यते ।

अस्तु, सर्वोऽपि जनः स्वमत्यनुसारमेव पश्यति इति नास्ति तस्य महात्मनो दण्डिस्वामिनोऽत्रापराधः । स हि स्वबुध्यूहितं आचार्यमतविरुद्धं शक्तिभाष्यमतम्, शक्तिभाष्यनिबद्धान शारीरकभाष्यविरुद्धवादांश्च खण्डयितुं प्रवृत्त इति । अस्माकमपि आशाहर्षावभूताम ।

यद्यपि शक्तिभाष्ये शंकराचार्यमतविरोधस्तु अणीयानपि नास्ति । यतो हि शक्तिभाष्योपक्रमे ग्रन्थप्रणेतृभिरेवोक्तम्, यत् "तैरेव भगवद्भिराचार्यचरणैर्गृहिसाधारणमोक्षमार्गोपदेशश्च प्रपञ्चसारे योऽसौ सप्रसादं सरहस्यं चोक्तः × × × तमेव विभिन्नप्रस्थानं शक्तिवादमाश्रित्य अस्माभिरेतद्व्याख्यानमुपक्रम्यते ।" (श० भा० पृ० ४ पं० २ पं० ५)

तथापि शारीरकभाष्यमतविरुद्धशक्तिभाष्यमतम् अनेन निरस्तमित्याशा । शारीरकभाष्यमतस्थापनमनेन जातमिति हर्षश्चेति, द्वावप्यापततोऽभूताम् । परन्तु कियतः एव कालात् यावता शक्तिभाष्यतिमिरभास्करोऽनुशीलितः तावता कालेन तावाशाहर्षौ स्वयं कर्पूरायितौ निर्वेददुःखतयैव परिणतौ । यतो हि पुस्तकमिदं शक्ति-

भाष्यार्थानवबोधेन तत्पाठनिगूहनेन तन्मतविद्वेषातिरेकविलुप्तयुक्तायुक्तत्वविचारेण च निरमायीति निश्चप्रचम्। शक्तिभाष्यतिमिरभास्करमिति निरर्थकनामकं पुस्तकमिदं परिशीलितवतान्तु सर्वेषामेव विदुषां ममेदं कथनं प्रस्फुटमेव भविष्यति। परन्तु तावच्छ्रममनङ्गीकुर्वतां सदसद्व्यक्तिहेतूनां सज्जनानां दर्शनतत्त्वज्ञानां विदुषाम्—कथन्तानिवृत्तये दिङ्मात्रमत्रोपदर्श्यते। तथाहि शक्तिभाष्यतिमिरभास्करे (वस्तुतस्तु शक्तिभाष्यभास्करकौशिके) अस्मिन् पुस्तके प्रथमं चातुराश्रम्यपक्षस्थापनमिति प्रस्तुतो विचारः। अर्थान्तरप्रस्तोऽयं विचारः, नहि चातुराश्रम्यपक्षनिरसनं शक्तिभाष्ये वर्तते। शक्तिभाष्यस्योपोद्घातोपक्रमे भाष्यकृतैवोक्तम् ? चातुराश्रम्यमैकाश्रम्यं वा; द्वयोः प्राप्ते सोत्तरश्चैवम्" (श० भा० पृ० २ पं० ४)

अत्र च स्मृतिप्रमाणमुपदर्शितम् "आश्रमविकल्पमेके ब्रुवते इत्यादिना स्मृतिकर्तृभिरेव। श्रौतं प्रमाणन्तु गार्हस्थ्यमात्रस्य"—साक्षात् श्रुतिविधानादेवोपलभ्यते। एवं स्थिते ऐकाश्रम्यपक्षनिरसनं न शक्तिभाष्यतिमिरापसारणं, किन्तु धर्मशास्त्रप्रयोजकगौतमस्मृतिसाहाय्याच्छ्रुति-निरसनमेव। तथा च "आम्रान् पृष्टः कोविदारानाचष्टे" इतिवदर्थान्तरञ्चाकलयामः। अहो! दुर्जयं कलिमाहात्म्यं येन पाश्चात्त्यशिक्षादीक्षिता म्लेच्छशिष्या नवीना इव धर्मरक्षकपदभाजोऽपि यतिव्रता महर्षीनाक्षिपन्तीति। नापि तत्रास्ति काऽपि युक्तिः, प्रत्युत—युक्त्याभास एवायं 'सत्यैकाश्रम्ये चातुराश्रम्यविधानानुपपत्तिरिति, हास्याय च शास्त्रदर्शिनां विदुषाम्'। षोडशिग्रहणाभावेऽप्यतिरात्रयागनिर्वाहे षोड़शिग्रहणविषयः श्रौतविधिरप्यनेनाक्षिप्यते इति प्रतीयते। तत्रेच्छाविकल्पः सर्वसम्मतः। शक्त्याऽऽश्रमविकल्पश्च शक्तिभेदेन व्यवस्थितः, अन्यथा षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतं। तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा। इति ब्रह्मचर्यकालविकल्पोऽपि नोपपद्येत। लघुकालसत्वे गुरुकालविधानस्य वैयर्थ्यात्।

शक्तिभाष्य-मतमिदमस्ति यद् या हि जैमिनीया पूर्वमीमांसास्ति उत्तरमीमांसा च बादरायणीया, विद्यते मीमांसात्वेन तयोरेकशास्त्रत्वमेव तस्य च नानाशक्तिप्रतिपादकः पूर्वविभागः यो हि सम्प्रति पूर्वमीमांसाशास्त्रत्वेन लोके प्रसिद्धः, तत्सर्वनियन्त्र्येकशक्तिप्रतिपादकप्रश्नोत्तरभागः यो हि वेदान्तशब्देनोच्यते। मिलितमिदमुभयमेकं शाक्तदर्शनम्। मीमांसात्वेन द्वयोरेतयोः शास्त्रयोरेकत्वानङ्गीकारे तु चतुर्दशविद्यास्थानेषु वेदान्तदर्शनस्य प्रवेश एव न स्यादिति। एतन्मतस्य निरासाय परिव्राजकाचार्य्यैर्यदुक्तं तदसम्बद्धप्रायम्। यतो हि शक्तितत्त्वप्रतिपादकत्वेनैतयोरेकशास्त्रत्वमिति शक्तिभाष्यपक्षः। यत्र भागभेदे यादृशी शक्तिरुपयुज्यते तन्निरूपणमेव तद्भागभेदेन युक्तम्, नहि पाणिनीये व्याकरणे प्रथमाध्याये प्रथमपादे स्वरसन्धिनिरूपणमिति स्वरसन्धिनिरूपणवर्जितेन पादेनाध्यायेन वा पाणिनीयव्याकरणान्तर्गतेन न भवितव्यमिति कोऽप्यभ्युपपद्येत। तथाहि अपरशक्ति-स्वाभाविकशक्ति

भेदेन ब्रह्मशक्तयो बह्व्यः, ब्रह्मस्वरूपा चैकेति श्वेताश्वतरश्रुतिप्राप्तशक्तिषु बहुशक्तिस्वरूपकथनं पूर्वभागे तन्नित्यैकब्रह्मशक्तिकथनञ्चोत्तरभागः इत्येतच्छक्तिभाष्यमतम्। भवद्भिः परिव्राजकाचार्य्यैः तस्य फलजिज्ञास्ययोर्भेदात्—इत्यादिशारीरकभाष्याम्रेडनमात्रत एव निरासाय वद्धपरिकरैर्भूयत इति हास्यास्पदमात्रमेतत् ।

किञ्च स्वयं सूत्रकृद्भिर्भगवद्भिर्वादरायणैः तदुक्तमित्याकारकेन ( अल्पश्रुतेरिति चेत्तदुक्तम् १।३।२१ । संज्ञातश्चेत्तदुक्तम् ३।३।८ )। इत्यादि सूत्रजातेन स्वोक्तस्य उत्तरमीमांसाशास्त्रस्य ग्रहणात् पूर्वमीमांसाशास्त्रस्य च ( हानौ तदुक्तम् ३।३।२६ अक्षरधियाम्''''''तदुक्तम् ३।३।३३ ) इत्यादि सूत्रजातेन च ग्रहणात् समानतन्त्रत्वं यदभ्युपगतं तदेव शारीरकभाष्ये पूर्वतन्त्र इति ब्रुवाणैर्भगवद्भिराचार्यपादैरपि स्वीचक्रे । एवं सम्प्रदायगुरुवराणामभिमतमुपेक्ष्यमाणैर्नवीनपरिव्राजकाचार्य्यैर्यदाचरितं तदशोभनमेव । अतएव जैमिनिकृतपूर्वमीमांसाग्रन्थानन्तर्जिज्ञासाविषयो ब्रह्म निरूप्यत इत्यर्थकं शक्तिभाष्यमनवबुद्ध्यमानैः परिव्राजकाचार्य्यैर्ब्रह्मस्वरूपैकशक्तिस्वरूपप्रतिपादकब्रह्मसूत्रनिरूपणस्य देवतायागादिनानाशक्तिस्वरूपप्रतिपादकपूर्वमीमांसानिरूपणानन्तर्य्यं नास्तीति यदुक्तं तद्भगवद्बादरायणसूत्रशारीरकभाष्यविरुद्धमिति व्यक्तं भवति ।

किञ्च आद्यस्य हिरण्यगर्भस्य यतो जन्म तद्ब्रह्म इति जन्माद्यस्य यतः, इति सूत्रस्य शक्तिभाष्यसम्मतोऽर्थः । 'ब्रह्मा देवानां प्रथमः सम्बभूव' 'यो ब्रह्माणं विदधाति पूर्वं' 'यं कामये तं तमुग्रं कृणोमि' 'तं ब्रह्माणम्' इत्यादयो मन्त्रवर्णाः प्रमाणत्वेन तत्रैवोदाहृताः । परिव्राजकाचार्य्यैरेतस्य व्याख्यानस्योपरि दूषणमुद्भावितम्, यथा "यदि सर्वादित्वेन हिरण्यगर्भस्य ग्रहणं स्यात्, आकाशेन तर्हि किमपराद्धं तस्यापि "एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः, इत्यादि श्रुतिनिर्देशेन सर्वादित्वं प्रतिज्ञायते । सर्वादित्वं हिरण्यगर्भस्य प्राप्तमाकाशस्यापि प्राप्तम्" इत्यादिना, तदबोधविजृम्भितम् । दृश्यते हि मुण्डकश्रुतिः "स प्राणमसृजत प्राणात् श्रद्धां खं वायुः" इति "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी; इति पठ्यते 'स इमान् लोकानसृजत, इत्येवं सृष्टिक्रमो बहुधा वर्तते। एकत्र श्रुतौ पाठक्रमेणाकाशस्य यथा सर्वादित्वमुच्यते तथा श्रुत्यन्तरे प्राणादेरपि सर्वादित्वमिति विरोधः प्रसज्यते । तस्मादाकाशस्य सर्वादित्वमिति प्रतिज्ञा कथमुपपाद्यते ? न चापि आकाशस्य वाचकशब्देन प्रथमत्वं श्रुत्या प्रतिज्ञातम्, प्रतिज्ञातन्तु "हिरण्यगर्भः समवर्त्तताग्रे" "ब्रह्मा देवानां प्रथमः सम्बभूव" इत्यादौ वाचकशब्देन हिरण्यगर्भस्याद्यत्वम् । तदिदं श्रुतिवचनं तिरोदधतां परिव्राजकाचार्याणामबोधो वा शक्तिभाष्यद्वेषविलुप्तविवेकत्वं वेति न जानीमहे ।

विवर्तवादस्थापनाय यः पूर्वाचार्यभाषितानामनुभाषणाय यतमानैः परिव्राजकाचार्य्यैः शक्तिभाष्यप्रणेतृभिर्दर्शितदोषस्योद्धारस्तु स तु नोपलब्धः । तथाहि न च

विवर्ताधिष्ठानस्यापादानत्वम् रज्जोः सर्प उत्पद्यते इति न प्रयोगः, रज्जौ सर्प इत्येव प्रयोगात्, इति शक्तिभाष्यम्। अस्यायमाशयः—विवर्ताधिष्ठानत्वेन ब्रह्मणः प्रकृतित्वं यद्यभविष्यत् तर्हि विवर्तवादेऽपि 'जन्माद्यस्य यत' इति प्रकृतिश्चेत्यादि सूत्रे कामं समगंस्येताम्, न च तथा भवति, तथाभावे रज्जोरपि सर्प-विवर्ताधिष्ठानत्वेन रज्जोः सर्प उत्पद्यते इति प्रयोगः स्यात्, स्मृतिपुराणकाव्येषु क्वचिदपि तादृग्प्रयोगो नोपलभ्यते। तस्मात् "यतो वा इमानि" इत्यादि श्रुत्यनुरोधेन ब्रह्मसूत्रोक्तस्य ब्रह्मणि प्रकृतित्वस्य चानुरोधेन विवर्तवादो हेय एव। यच्च 'वाल्येन तिष्ठासेत्' इत्यस्य व्याख्यानस्य शारीरकभाष्ये सिद्धान्तेऽपि तस्मादान्तरो भावविशेषो वालस्याप्ररूढेन्द्रियस्यादिरिह वाल्यमाश्रीयते। तदाह—अनाविष्कुर्वन्निति। ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन् दम्भदर्पादिरहितो भवेत्। यथा वालोऽप्ररूढेन्द्रियतया न परेषामात्मानमाविष्कर्तुमीहते तद्वत्। एवं ह्यस्य वाक्यस्य प्रधानोपकार्य्यार्थानुगम उपपद्यते। तथा चोक्तं स्मृतिकारैः—यं न सन्तं न चासन्तं न श्रुतं न वहुश्रुतं। न सुवृत्तं न दुर्वृत्तम् वेद कश्चित् स ब्राह्मणः। गूढ़धर्माश्रितो विद्वान् न ज्ञातचरितं चरेत्। अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्। अव्यक्तलिङ्गोऽव्यक्ताचारः, इति चैवमादिना वालभावपरतया स्थितत्वेऽपि परिव्राजकाचार्य्याणां पूर्वपक्षरूपत्ववचनं तत् सत्यमर्यादामतिक्रान्तमिति ब्रूयामहे। निदर्शनमेतत्। स्वल्पकलेवरे सूर्य्योदये समालोचनप्रपञ्चासम्भवात् विस्तरतः पुनरग्रे संक्षेपतो विद्वद्भिरेतदवगन्तव्यम्, यद् एकमेव हि सर्वत्रैवास्मिन् लघुपुस्तके क्वचन शक्तिभाष्यानवबोधमूलकम्। कुहचन स्वमतकल्पितदोषाभासनिरसनप्रयासः, कुत्रचन व्यर्थमेव 'पूर्वाचार्य्याणां भाषितानामनुभाषणमिति व्यर्थशब्दाडम्बरेणैव पुस्तककलेवरं सम्भृतं दृश्यते। किं बहुना पुस्तकमिदं पठित्वा मम मनसि एतदेव स्फुरितम्—यद् व्यर्थमेव परिव्राजकाचार्य्यैः पुस्तकलेखनप्रकाशनप्रयासोऽङ्गीकृतः। शक्तिभाष्यकर्त्तारस्तु इह ज्ञानक्षेत्रे श्रीकाशीधाम्नि समुपविष्टाः शक्तिभाष्यसम्बन्धे शास्त्रार्थं कर्तुमनसो विदुषः प्रतीक्षन्ते। तदिह परिव्राजकाचार्य्या वाराणस्यामागत्य शास्त्रार्थं विधायैव स्वमनः सन्तोषं कुर्वन्तु। प्रथमतस्तु शक्तिभाष्याशयज्ञाने एव परिव्राजकाचार्य्याः सन्दिहाना दृश्यन्ते। ततश्च प्रथमं लज्जां विहाय भाष्यकर्तॄणां समक्षं समुपस्थाय शक्तिभाष्यगतं निजाज्ञानं परिष्कुर्वन्तु इत्यस्माकं सत्परामर्शो विद्यते। पूज्यपादाः तर्करत्नमहोदया हि सम्प्रति काश्याम् अद्वितीया विद्वांसः सन्ति। श्रीकाशी पण्डितसभायाः प्रधान सभापतिपदञ्च तैरेव सुशोभितं विद्यते। संशय्य तेषु तिष्ठतां परिव्राजकाचार्य्याणां गौरवमेव स्यान्न लाघवमिति स्तोकेनैव विरमति—

(महामहाध्यापकः) श्रीगोपालशास्त्री (दर्शनकेशरी)

दर्शनविद्यालय लक्ष्मीकुण्ड, काशी।



## होलाकला ।

रचयिता पं० नारायणपति शर्मा, काशी ।

अहो ! होलिके ! त्वं विचित्रासि लोके,
ददन्ते महोल्लासपूर्णान्तरङ्गाः ।
असभ्याश्च सभ्या महाश्लीलगालीः,
गलोत्फाललग्ना इवानङ्गमग्नाः ॥१॥
बाला युवानोऽपि मिथो मिलित्वा
एरण्डवृक्षान्बहुशो विचित्य ।
स्तेनादिनाप्याहृतकाष्ठभारान्
प्रक्षिप्य वह्नौ ज्वलयन्ति होलाम् ॥२॥
बालास्ततः सर्जनकामनार्ताः,
तारैस्स्वरैः स्वैर्जननेन्द्रियाणाम् ।
नामानि गृह्णन्ति न लज्जमानाः
प्रीत्यै भवत्या नहि चित्तवृत्त्या ॥३॥
क्षिपन्ति रङ्गानि यदन्यगात्रे,
तन्नो समीचीनतरं विभाति ।
विद्वेषमूलं प्रतिभासते तद्
यत्क्षेपणीयं निजबन्धुवर्गे ॥४॥
अवीर-रक्ताम्बरभालगात्रा
वीराभया भान्ति जना अवीराः ।
बीभत्सवाणी न ततः प्रयोज्या,
सा सभ्यवर्गे बहुगर्हणीया ॥५॥
असभ्यताया इदमेव चिह्नं,
यद्गर्हणीयं वचनं मुखोक्तम् ।
जुगुप्सितं तत्तु सदैव हेयं,
यदन्यहृन्मर्मविशंसितं स्यात् (कुदस्तु वाक्यं) ॥६॥

सोल्लासहास्यं तु सदा विधेयं,
होलोत्सवेऽवश्यविशेषरूपैः ( पात् )।
मनोविनोदाय सुहृज्जनानां,
मनः पितुर्भाग्यविवर्द्धनार्थम् (य) ॥७॥

मनः पिता मे भगवान्प्रसीदतां,
प्रह्लादगोप्ता च मनः पितामहः।
व्रजाङ्गनाकेलिकलाकलापभा-
गसंख्यपत्नी व्रततत्परो विभुः ॥८॥

सम्बत्सरान्ते मृतहोलिकाग्नौ
प्रक्षिप्य होलाङ्कुरमञ्जुपुञ्जम्।
प्रदक्षिणीकृत्य विभूतिधारी,
आवर्ष नीरोगसुखी जनः स्यात् ॥९॥

गालीप्रदातार इमे मनुष्या,
गालीवितानोद्धुरकर्मठान्यैः ।
विभूषिता एव भवन्ति भान्त-
स्ततः स्वयं किन्न विभूषयन्ति ॥१०॥

विक्षिप्तचित्तः क्षिप मान्यगात्रे,
रङ्गं विशेषेण विधर्मिवर्गे ।
योऽयं स्व"दाहा"दि महोत्सवे स्वो-
रस्ताडनं "हा"युतमातनोति ॥११॥

शीतं व्यतीतं नहि चोष्णतापो,
न शीतभीतिर्न च घर्मदुःखम्।
विरुद्धभावेऽपि मिथो मिलित्वा,
ते चक्रतुर्यत्सुलभं (हं) वसन्ते ॥१२॥

पुराणपत्राणि निपात्य वृक्षाः
स्थाणु स्वरूपञ्च विहाय नैजम्।
नव्यानि भव्यानि सुकोमलानि,
गृह्णन्ति शाखासु सुपल्लवानि ॥१३॥

समागतेऽस्मिन्नृतुराजराज्ये,
पुंस्कोकिला अप्यतिमत्तचित्ताः ।
आह्वानहेतो र्निजकामिनीनां
कूजन्ति शाखान्तरमध्यसंस्थाः ॥१४॥

स्पृष्ट्वा दिवाकीर्तिमथोवगाह्य,
धृत्वा बिभूतिं हुतहोलिकायाः ।
प्राप्ते वसन्तोत्सवपर्वघस्रे,
चूताङ्कुरप्राशनमुक्तमाद्यैः ॥१५॥

सर्वे मिलित्वा सह कुंकुमेन,
सोल्लासिताः सत्पटवासचूर्णैः ।
रक्ताम्बरा रक्तकलेवरा वा
कामं निकामं हि समर्चयन्तु ॥१६॥

इदं होलाष्टकद्वन्द्वं-प्रोक्ता होलाकला शुभा ।
श्रीनारायणपतिना भत्रेच्छान्तिप्रदायिनी ॥



## काशीस्थ-गुर्जरसंस्कृतच्छात्राणां सन्तोषः ।

अखिल भारतवर्षीय-सनातनि-संस्कृतच्छात्रसंघस्य काश्यधिवेशनसभापतिपदभाजां मोहमयीस्थ-जी. टी.—संस्कृतकॉलेज प्रधानाध्यापकानां पं० श्रीरमापतिमिश्रमहाभागानां सं० १७७५-पौष शुक्लाष्टम्यां ( सा० ३०।१२।३८ ) पठित-मुद्रितव्याख्यानपुस्तिकायास्त्रयोदश पृष्ठगताष्टचत्वारिंशत्प्रघट्टके प्रदर्शितः प्रकृत्यात्यलसत्वांशः काशिकगुर्जरसंस्कृतच्छात्रेष्वपि प्रसज्यति मृषेव; [ वस्तुतोऽधिकाशिवर्तमानाः श्रमसंयमादिच्छात्रधर्मनेदिष्ठाः परमुद्योगिनोऽस्पृष्टजाड्यालस्यलेशाश्च ते 'शास्त्राचार्य्य' कक्षाभ्यन्तरचरी भूयापि पठन्तीत्यत्र पूज्यानां गुरुवराणामनुभव एव प्रमाणम् ] एतदालोच्य समग्रगुर्जरसंस्कृतच्छात्रवृन्देन प्रार्थिताः श्रीमद्रमापतिमिश्रिमहानुभावाः स्वलेखाभिप्रायं विवृण्वाना उत्पद्यमानं भ्रममपनीतवन्तः । तदर्थं भृशं प्रमोदभरमनुभवन्तो मान्यानां तेषां गुणग्राहितापरिचयेन चातिवोपकृता भगवन्तं श्रीविश्वेशमभिप्रार्थयन्तः सौमनस्यार्थं तेभ्यो वितरन्ति शतशो धन्यवादान् काशीस्थगुर्जरसंस्कृतच्छात्राः ।

'शास्त्री' प्राणजीवनः बी० जोशी काव्यतीर्थ,
'साहित्याचार्य्य-श्रेणिस्थः, "रिसर्चस्कॉलर"—
गवर्न्मेंन्टसंस्कृतकॉलेजसरस्वती भवनम् काशी ।

# ब्राह्मणानां श्रेष्ठत्वं जन्मना वर्णव्यवस्था च।

निबन्धा पं० दीनानाथशर्मा शास्त्री सारस्वतः।

( क्रमागता )

## कर्म्मणा वर्णव्यवस्थायां हानिः

प्राक्तनजन्मकर्म्मणा ब्राह्मणादिवर्णे उत्पत्तिरिति सनातनधर्मसिद्धान्तः। ऐहिकगुणकर्म्मणा एव ब्राह्मणादिवर्णो भवतीति वादिनां राद्धान्तः। अस्मत्पक्षे बहूनि प्रमाणानि, तानि प्राक् प्रदर्शितानि। अत्र योगदर्शनसूत्रं श्रूयताम् 'सति मूले तद्विपाका जात्यायुर्भोगाः' साधनपादे १३ सू० जातिर्ब्राह्मणत्वादिः प्रारब्धकर्म्मणेदं शरीरमुत्पद्यते। यावत्तस्य परिवर्त्तनं न स्यात्; तावज्जात्यादि परिवर्त्तनमपि न भवति; अन्यथा प्रारब्धकर्म्मणां (प्राक्तन जन्मस्थानां) वयर्थ्यं प्रसज्येत। न्यायदर्शने कथितम्-"पूर्वशरीरे (जन्मनि) या प्रवृत्तिर्वागबुद्धिशरीरारम्भलक्षणा, तत् पूर्वकृतं कर्मोच्यते; तस्य फलं-तज्जनितौ धर्माऽधर्मौ, तत्फलस्यानुबन्ध आत्मसमवेतस्याऽवस्थानम्, तेन (अदृष्टस्यात्मसमवायेन) प्रयुक्तेभ्यो भूतेभ्यस्तस्य शरीरस्योत्पत्तिः...... तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहितेन पतिते-(नष्टे) ऽस्मिन् शरीरे-शरीरान्तरं (अग्रिमजन्मशरीरं) निष्पद्यते ३।२।६२। अत्र स्वामि दयानन्दस्याऽपि सादरं श्रूयताम्-'पूर्वजन्मके पुण्य पाप के अनुसार वर्त्तमान जन्म, और वर्त्तमान तथा पूर्वजन्म के कर्मानुसार भविष्यत् जन्म होते हैं' सत्यार्थप्रकाशे नवमसमुल्लासे पृ० १५६। तेन वर्त्तमानजन्मकर्मानुसारं भविष्यजन्मैव भवति; न वर्त्तमान जन्म। तेन ब्राह्मणजन्मतो सत्कर्म्मभिरग्रिम जन्मन्येव, नैहिकजन्मनीति सिद्धम्। 'कर्म्मणा चोदितो येन तदाप्नोति पुनर्भवे। अभ्यस्ताः पूर्वदेहे ये तानेव भजते गुणान्" सुश्रुतसंहितायां शारीरस्थाने २।५८। 'कर्म्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत्' ३।२५।

अधुनैहिकगुणकर्म्मसु विचार्यते—मन्वादिप्रोक्ततत्तद्वर्णकर्म्मणां करणस्याऽऽज्ञा यदा प्रारम्भादेवाऽस्ति; तर्हि शूद्रादिवर्णाः स्वनियतकर्म्मतो भिन्नकर्म्माणि कर्त्तुमेव कथं शक्नुवन्ति ?। यदि शूद्रादिभिन्नवर्णकर्म्माणि कर्त्तुमारब्धस्तर्हि स धर्म्मानुयाय्येव कुतः स्थितः ?। यदि स्मृतिनिर्दिष्टस्वकर्म्माणि तेन प्रारब्धानि; तर्हि स उच्चवर्णः एव कथं भविष्यति ?। स्मृतिविरुद्धकर्म्मकर्त्तु कृते भगवत इदं वाक्यम्—' श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाभङ्गान्मम द्वेषी न मे भक्तो न मे प्रियः,।

स्मृतिराचष्टे—ब्राह्मण इदं कर्म्म कुर्य्यात्, शूद्रश्च इदं कर्म्म कुर्य्यात्। अत्रेदं पृच्छ्यते, यदत्र ब्राह्मणशूद्रो वा स्मृत्या जन्मना मतः? गुणकर्म्मणा वा?। यद्युच्यते—जन्मनेति; तर्हि त्वस्मत्पक्षः सिद्ध एव। यदि कथ्येत—गुणकर्म्मणाऽत्र ब्राह्मणशूद्रा विवक्षिता इति तर्ह्येतत् प्रष्टव्यम्—गुणकर्म्मपरीक्षायां कोऽवधिः? कदा च स गुणकर्म्मभि ब्राह्मणादि र्भविष्यति। यदि कथ्येत—पञ्चविंशे वर्षे ब्राह्मणादिः स्यादिति; तर्हि वाच्यम्—स्मृत्यादिप्रोक्त—ब्राह्मणाद्युपयुक्तपठनादिकर्म्माणि स किं पञ्चविंशतिवर्षस्य उत्तरमेव प्रारभेत? तर्हि प्राक् तु ब्राह्मणाद्युपयुक्तपठनादिकर्म्माणि न कुर्य्यात्। ब्राह्मणस्य गर्भाष्टमे यज्ञोपवीतादिकं कर्त्तव्यं भवति, क्षत्रियस्य च गर्भादेकादशे, तर्हि यज्ञोपवीतादिकमपि किं पञ्चविंशतिवर्षानन्तरमेव कार्य्येत? यद्येवम्, तदा गर्भाष्टमं वर्षं कुत एष्यति?। यदि कथ्येत, नहि २, यज्ञोपवीतं ब्राह्मणस्य गर्भाष्टमे एव वर्षे भविष्यति, न पञ्चविंशतिवर्षोत्तरम्, तर्ह्येतद् वाच्यम्, किं गर्भाष्टमे वर्षे तस्य गुणकर्म्माणि ब्राह्मणजनोपयुक्तानि सञ्जायन्ते? यदि कथ्येत—ओमिति, तर्हि तु प्रत्यक्षमपलपन्तो धन्या भवन्तः यतो न तत्र ब्राह्मणस्य षट् कर्म्माणि दृश्यन्ते। यदि कथ्येत—नहि; तस्मिन् समये तस्य ब्राह्मण गुणकर्म्माणि न भवन्ति; तर्हि स ब्राह्मणं कथम्? यदि च न ब्राह्मणः; तर्हि तस्य गर्भाष्टमे यज्ञोपवीतं कथम्? इति विमर्शकैर्विचार्य्यम्।

अयं निष्कर्षः—किं तत्तद्वर्णानां कर्म्माण्यारम्भादेव (जन्मना) नियम्यन्ते? वर्णनिर्म्माणोत्तरमेव वा तद्वर्णकर्म्माणि नियम्यन्ते?। यदि जन्मनैव तत्तद्वर्णकर्म्माणि नियम्यन्ते; तर्हि जन्मसिद्धवर्णव्यवस्थावशाद् वा? गुणकर्म्मणा वा?। यदि जन्मना वर्णनिर्णयकारणात्; तर्हि त्वस्मत्पक्षः सिद्ध एव। यदि गुणकर्म्म-कृतवर्णव्यवस्थावशात्; तर्हि नैतद् युक्तम्। यतो नहि पूर्वं तस्य कानिचिद् ऐहिकगुणकर्म्माणि, येन स तद्गुणकर्म्मानुसारं निश्चितवर्णवान् जातः स्यात्। यदि कथ्येत—वर्णनिर्म्माणोत्तरमेव तद्वर्णकर्म्माणि नियम्यन्ते तत्रैतद् वाच्यम्, वर्णाः कदा कथं वा निर्म्मीयन्ते? यदि व्यपदिश्येत—पञ्चविंशे वर्षे गुणकर्म्मणा वर्णा नियम्यन्ते; तर्ह्येतद् वचनीयम्, यत्तु तत्तद्वर्णकर्म्माणि तु भवन्तस्तत्तद्—वर्णनिर्म्माणानन्तरमेव कर्त्तव्यानि मन्वते; तर्हि प्राकृतेन तानि कानि कर्म्माणि कृतानि; येन स तत्तद्वर्णवान् जातः; पश्चाच्च स स्मृत्यादिनियतकर्म्माणि कर्त्तुंश्चाऽधिकृतः सम्पन्नः। किं तान्यपि कर्म्माणि स्मृतिषु निर्दिष्टानि; यानि वर्णनिर्माणात् प्राक् प्रतिपादितानि स्युः; एतदुत्तरदायित्वं

वादिनां शिरसि।

अथ चैतदपि प्रष्टव्यं यत् तत्तद्वर्णानां पृथक् २ कर्म्माणि जन्मना नियतानि वा भवन्ति स्मृतिप्रणेतॄणां द्वारा ? अथवा तत्तद्वर्णस्य स्वेच्छानुसारेणि भवन्ति कर्म्माणि जन्मना ? । यदि उत्तीर्य्येत यत्-तत्तद्वर्णानां कृते पृथक् २ कर्म्माणि स्मृत्यादि-नियमितानि भवन्ति जन्मना ; तर्ह्येतद् वाच्यम्, यस्तदाज्ञां न पालयित्वाऽन्यदीयानि कर्माण्यारभेत, स किं दण्डभाङ् न भविष्यति ? ।

'स्वे स्वे धर्म्मे निविष्टानां सर्व्वेषामनुपूर्व्वशः। वर्णानामाश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता' मनु० ७.३५ 'वैश्यशूद्रौ प्रयत्नेन स्वानि कर्म्माणि कारयेत्। तौ हि च्युतौ स्वकर्म्मभ्यः क्षोभयेतामिदं जगत् ?' मनु० ८।४१८ 'दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्व्वसेतवः। सर्वलोकप्रकोपश्च भवेद् दण्डस्य विभ्रमात्' मनु० ७।२४। 'अकार्य्याणि तु वक्ष्यामि यानि तानि निबोध मे। लोकवेद विरुद्धानि तान्येकाग्रमनाः शृणु। स्वधर्म्मस्य परित्यागः परधर्म्मस्य च क्रिया' महाभा० शान्तिपर्व० ३४।०-१० 'वरं स्वधर्म्मो विगुणो, न पारक्यः स्वनुष्ठितः' मनु० १०।९७ 'यः कश्चित् कस्यचिद्धर्म्मो मनुना सम्प्रकीर्तितः। स सर्व्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः' मनु० २।७ 'वेदोदितं स्वकं कर्म नित्यं कुर्य्यादतन्द्रितः। तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्' मनु० ४।१४ 'नेहेतार्थान् प्रसंगेन न विरुद्धेन कर्म्मणा' मनु० ४।५ 'निबद्धं स्वेषु कर्म्मसु' मनु० ४।१५५ 'श्रेयान् स्वधर्म्मो विगुणोऽपरधर्म्मात् स्वनुष्ठितात्। स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः' गीता ३।३५ 'स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः' गी० १८।४५ 'स्वकर्म्मणा तम् (परमात्मानम्) अभ्यर्च्य सिद्धिं विन्दति मानवः' गी० १८।४६ 'आत्मीये संस्थितो धर्म्मे शूद्रोऽपि स्वर्गमश्नुते। परधर्म्मो भवेत् त्याज्यः सुरूपपरदारवत्' अत्रि० १८ यो यस्याऽभिहितो धर्म्मः स तु तस्य तथैव च। तस्मात् स्वधर्म्मं कुर्वीत द्विजो नित्यमनापदि' हारीत० ३।१७ 'शूद्रः स्वकर्म्मनिरतः स्वर्गं शुश्रूषयाऽऽच्छेति' महाभारत० अनुशासन० ३।२१ इति मनुस्मृति भगवद्गीतामहाभारताऽत्रि-हारीतस्मृतिप्रभृतयो ग्रन्थाः परकर्म्मकरणान्निरुन्धन्ति। यदि भिन्नवर्णानां कर्म्मकरणेऽपि स्वातन्त्र्यमभविष्यत्; तर्हि ब्राह्मणकर्म्म तपस्यादिकं चिकीर्षुं जन्मना क्षत्रियं युधिष्ठिरं भगवान् व्यासः 'स्वधर्म्मं चर धर्म्मज्ञ ! यथाशास्त्रं यथाविधि' महाभा० शान्ति० २३।१-६ इति नाऽकथयिष्यत्।

एवं यदि स्मृत्यादयोऽन्यवर्णकर्म्मचिकीर्षुं वर्णान्तरकर्मकरणाद् वारयन्ति; तर्हि सोऽन्यवर्णवान् कथं भवेत् ? एवञ्च जन्मसिद्धैव वर्णव्यवस्था स्थिता । अत एवोपवेदोऽपि जन्मत एव तत्तद्वर्णनियतविद्याग्रहणमादिशति । तथा च 'शक्तिमन्तञ्चैनं ( जातबालकं ) यथावर्णं विद्यां ग्राहयेत्' सुश्रुत० शारीरस्थाने १०।५२ इति जन्मनैव वर्णव्यवस्था सिद्धा ।

यदि कथ्येत—तत्तद्वर्णस्य स्वेच्छानुसारीण्येव भवन्ति कर्म्माणि तर्हि ब्राह्मणादीनामुत्पत्तिमात्रमेव दर्शयित्वा स्मृतिभिस्तत्तत्कर्म्माणि कथं नियमितानि ? द्रष्टव्या मनुस्मृतिः । वादिमतानुसारन्तु ब्राह्मणादिर्भविष्यति २५ वर्षे; तत् किं तत्तद्वर्णः स्मृतिनियमितकर्म्म २५ वर्षानन्तरमेव प्रारभेत ? ।

ऐहिकैरेव कर्म्मभिर्यदि वर्णव्यवस्था क्रियते; तर्हि क एव मनुष्य एकस्मिन्नेव जन्मनि सहस्रकृत्वः सहस्रवर्णवान् भवेत् । यतो हि गुणकर्म्मपरिवर्त्तनन्तु यदा कदाचिज्जायते एव । अत एवोक्तं योगदर्शने—'एवं धर्म्मलक्षणाऽवस्थापरिणामैः शून्यं न क्षणमपि गुणवृत्तमवतिष्ठते, चलं च गुणवृत्तम्' विभूतिपादे १३ । अद्य पुरुषस्तामसिककर्म्माणि कुर्व्वाणः शूद्रो भवेत्; श्वोदिने युद्धावेशं प्राप्य क्षत्रियः, परश्वश्च अध्ययनाऽध्यापनादिकञ्च कुर्व्वाणो ब्राह्मणो भवेत् । कतिपयदिवसोत्तरञ्च अर्थक्लेशवशाद् अर्थव्यापारकार्य्यं कुर्व्वाणो, वैश्यो भवेत् । एवं पुनः पुनः कर्म्मणां परिवर्त्तनवशात् कदाचिद् ब्राह्मणः कदाचित् क्षत्रियादिश्च भवेत् । दिनानामन्तरं वा त्यक्तव्यम्—एकस्मिन्नेव दिने प्रातः स्नानध्यानशमदमादियुक्तश्च ब्राह्मणः; मध्याह्नात् पूर्वञ्च रजोगुणाऽवलम्बितः स्त्रीपुत्रादिकं ताडयन् निर्भर्त्सयँश्च क्षत्रियः, मध्याह्नात् सायंपर्य्यन्तञ्च पण्यशालायां क्रयविक्रयं कुर्व्वाणः सायम्प्रातश्च गवादिसेवां विदधानश्च वैश्यः; रात्रौ विषयविलासानन्दमदमत्तश्च शूद्रो भविष्यति । एवं जाते सति महान् अनर्थो भवेत् । किं भवन्तस्तस्य २ तादृशं ३ गुणकर्म्म दृष्ट्वा तत्तद्वर्णतां कुर्व्वन्ति ? । भवद्भिः स्व 'बाबू' मण्डली यया वेदस्य स्पर्शनमात्रमपि न कृतं स्यात्; कदाचिच्छूद्रवर्णो गणिता ? यद्येवं न कृतम्; तर्हि केयं गुणकर्म्मतो वर्णव्यवस्था नाम ? । किं भवदीयपञ्जिकायां ( Rigester ) नामोल्लेखमात्रेण, आनकचतुष्टयस्य स्वसमाजे मासिकप्रदानमात्रेणैव जनो द्विजो मन्यते ? बत !

अधुना गुणकर्म्मकृतवर्णव्यवस्थायां हानयः श्रोतव्याः । कल्पनीयम्—एकेन

कर्मानुसारं भूतेन ब्राह्मणेन कर्म्मानुसारं भूतया ब्राह्मण्या सह (यतः सवर्णाया × सह विवाहः स्वा० दयानन्देनाऽपि सत्यार्थप्रकाशे ९६ पृष्ठे स्वीकृतः ) विवाह कृतः। परं कतिपयदिवसानन्तरम् 'अन्यस्य चित्तमभिसञ्चरेण्यम् उताधीतं विनश्यति' १।१७०।१ इति ऋग्वेदानुसारं स कुकर्म्मा सन् शूद्रतामियात्; तर्हि तस्य ब्राह्मणपत्नी तं कथं सङ्गन्तुं शक्ता; शूद्रत्वात्तस्य। पत्नीञ्च स्व० दयानन्दो जन्मनैव तत्तद्वर्णां मेने, नतु गुणकर्म्मकृतवर्णाम्; तथा च तेन लिखितम् 'अमुकगोत्रोत्पन्नामिमाममुकनाम्नीमलङ्कृतां कन्यांप्रतिगृह्णातु भवान्' संस्कारविधि० १३५ पृष्ठे; एतेन स्पष्टं सिध्यति यत्—स तद्—गोत्रे उत्पन्नां कन्यामिच्छति, नतु गुणकर्म्मणा तद्गोत्रत्वं प्राप्तामिति मार्म्मिका विविञ्चन्तु। (वस्तुतस्तु तत्पतिरपि एवं तदनुसारं तद्गात्रे उत्पन्न एव मंस्यते; यतस्तेन सवर्णयोर्विवाहो मतो नाऽसवर्णयोस्तेन तन्मतेऽपि जन्मना वर्णव्यवस्था सिद्धा ) अस्तु—यदि सा ब्राह्मणी तेन कर्मवशाच्छूद्रभूतेन सह कामवशात सङ्गच्छेताऽपि; तर्हि 'शूद्रादायोगवः क्षत्ता चण्डालश्चाऽधमो नृणाम्' १०।१२ इति मनुपद्यानुसारं तत्सन्ततिश्चाण्डालत्वव्यपदेश्या स्यात्। 'चाण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः' १०५१ इति मनुमनुसृत्य च तस्यै सन्तत्यै नगराद् बहिरेवाऽऽश्रयः प्रदातव्यो भवेत्। मनुस्मृत्यनुसारं १०।५५,५६ तस्याः सन्तत्या शवानां हननम् औशनस ९-१० वैशानसमहाशास्त्राद्यनुसारञ्च तस्या मलापकर्षणं कर्म्म कर्त्तव्यं भवेत्, किं वादिनो मंस्यन्ते एतत्?। अथ च तादृशी सन्ततिर्वर्णसङ्करत्वात् 'सङ्करो नरकायैव कुलघ्नानां कुलस्य च। पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः' गीता १।४२ 'दोषरेतैः कुलघ्नानां वर्णसङ्करकारकैः उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः' भगवद्गीता १।४३ उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्दन! नरके नियतं वासो भवतीत्यनुशुश्रुम' १४४ इत्याद्यनुसारं मृतपितृश्राद्धं कर्तुं कथमधिकृता भविष्यति?। जीवितश्राद्धन्तु स कर्तुमेव न शक्तः पुरुषः। यतः स स्वयं चाण्डालो भविष्यति, तत्पिता च शूद्रः, तन्माता च ब्राह्मणी। शूद्रस्तु ग्रामे वत्स्यति, चाण्डालस्य तु ग्रामान्तरागमनस्याऽपि नाधिकारः। तत्पितो वा बहिर्ग्रामं तदन्तिकं गच्छेत्। परं चाण्डालत्वात् तेन स्पर्श एव निषिद्ध इति सूर्योदये' ६।५-६-७, १०।८-९-१० मल्लेखे द्रष्टव्यम्—इति स कथं जीवितपितृश्राद्धमपि कुर्यात्। अथवा स्वा० दयानन्दमतानुसारं स चाण्डालोऽन्यमेव पितरं निर्म्माय तस्य श्राद्धं कुर्यादिति दुरवस्था भवेत्। (क्रमशः)

× 'सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि' मनु० ३।१२ 'पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते' मनु० ३।४३।

# संस्कृतस्य शोचनीया दशा ।

( ले०—पं० श्रीजयनारायणठाकुर व्या० आ० काव्यतीर्थः
गुरुकुलमहाविद्यालयवैद्यनाथधाम । )

वृत्तान्तमेतदाकर्ण्य कस्य सचेतसश्चक्षुर्निमीलनं न जायते । यदि भूतलस्य प्रतिकोणं निरूपयामि यत् को नाम प्राचीनतमो ग्रन्थः ? तर्हि वेद एव सर्वेषां महत्तमो भवेत् । अस्य प्राथम्यमतिशाययितुं नापि "कुरानः नापि बाइबिलः" नापि त्रिपिटकनामा बौद्धग्रन्थो जेन्दावेस्तानामा पारसीग्रन्थो वा उद्युङ्क्ते इति निर्विवाद एव सर्वेषां सिद्धान्तेन । स च वेदोऽपि सुरभारत्यैव निबद्धः का पुनर्गणनोपनिषदादीनाम् । सुरभारत्या भाण्डागारः उन्मुक्तकपाटः चिरकालादेव अकिञ्चनामन्यां भाषां दूरतोऽपि समाहूय परिपूर्णाञ्जलिना निजाक्षयकोषात् शब्दमित्तां सादरं वितीर्य्य कल्पलतेव पुपोष । सैवेदानीं सुरभारती निखिलभाषाजननी अरण्यरोदनं करोति । श्रूयते खलु पुरा—"अस्माकं राज्ये सर्वैः संस्कृतभाषिभिर्भवितव्यमि" त्यादिश्य किं त्वं संस्कृतं न जानासीति राज्ञा पृष्टस्तद्विषये सन्दिग्धतामापन्नः कश्चित्तन्तुवायः एवमुदतरत् । "काव्यं करोमि न तु चारुतरं करोमि । यत्नतात् करोमि यदि चारुतरं करोमि भूपालमौलिमणिमण्डितपादपीठ ! हे साहसाङ्क कवयामि वयामि यामि" ।

यद्यपि भरतपालितो भारतः मुगलसाम्राज्यान्तर्गतः, अस्य बहवो धर्मग्रन्था भस्मसात्कृताः, तदापि सुरभारत्या इदानीन्तनीवन्नासीत् शोचनीया दशा । तदानीं काले बहवो मुहम्मदीया अपि अस्या अनुरागिणो ज्ञातारश्च आसन् । तदानीमियं तपस्यन्ती दीनेशमेवं प्रार्थितवती भगवन् म्लेच्छकरान्मा मोचय, सत्स्वपि बहुतनयेषु वन्ध्याकल्पामबलां मां त्रायस्व, विभो ! भूतले मे विजयिनस्तनया जायन्ताम् यैरहमदीना स्याम् । किन्तु—"रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । एवं विचिन्तयति कोषगते द्विरेफे हा ! हन्त ! हन्त ! नलिनीं गज उज्जहार" इतिवत् अस्या दशां विगणयामि अथवा—यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसापि न कृतं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी" ॥ इतिवत् वर्तते । केषामपि नाविदितं यत् विहारप्रान्ते इंग्लिशविद्यालये चिराय यत्संस्कृताध्यापनमासीत् यदर्थं संस्कृतज्ञाय विदुषे स्थानमेकं प्रदीयते स्म, तत् स्थानं तदध्यापनञ्च

१९४३ ईस्वीतो निर्वासितं भविष्यति । भारतस्योद्यानभूते विहारे संस्कृतभाषाकेन्द्रे एव एवं दावानलज्वालोद्धृद्भिः, न कं जनं दुःखाकरोति ।

प्रान्ताधिपशिक्षासचिववृत्तान्तं तु श्रावं श्रावमथापि भस्मीभूताङ्गेतवणप्रक्षेपजं क्लेशमनुभवतः कान्न विस्मेरान् करोति - यत् अन्यो हि विभागः प्रतिदिनमुन्नतिशिखरमारोहति किन्तु संस्कृतशिक्षाविभागः अहरहनि यममन्दिरं याति । विहारसंस्कृतसमितितः प्रथमविभागेन परीक्षायां समुत्तीर्णेषु छात्रेषु एकस्मै अपि छात्रवृत्ति-(पुरस्कार) प्रदानाय कोषेषु रूप्यकं नास्ति, किन्तु इंगिलशपरीक्षायां मुहम्मदीयभाषापरीक्षायाञ्च समुत्तीर्णा छात्राः प्राचुर्येण छात्रवृत्तिं लभन्ते ।

मौलवीपरीक्षोत्तीर्णानाम् मिडिल इंगिलशपाठशालायाम् उर्दूभाषां पाठयितुं यथा नियुक्तिर्नितान्तमावश्यकत्वमपेक्षते तथैव तादृशानां मध्यमपरीक्षोत्तीर्णानां हिन्दीभाषाभाषिणां हिन्दीभाषां पाठयितुं स्थानाप्राप्तौ हेतुं बहुशो विचिन्त्यापि नोपलभे ।

आलिमपरीक्षोत्तीर्णाय जनाय यथा "मकतब" विद्यालयनिरीक्षणाय निरीक्षकपदं (इन्सपेक्टिङ्ग ऑफिसरी) वितीर्यते तथैव तादृशसंस्कृतशास्त्रिपरीक्षोत्तीर्णाय संस्कृतविद्यालयं निरीक्षितुं स्थानप्रदाने व्यत्यासकारणं बहुधा सुनिरूपितमपि न निश्चिनोमि ।

को हि नाम मानवश्चिराय सुसमृद्धं पल्लवितं कुसुमितं फलितञ्च उद्यानं समुत्पाटयन् गगनकुसुममहीरुहं तत्स्थाने संयोजयितुमभिकाङ्क्षति ! किन्तु विहारे तु निखिलभाषोत्पादिकां सुधावल्लीसमां संस्कृतभाषां शिक्षापद्धतितो व्यवहारतश्च समुत्सार्य तत्स्थाने वैदेशिकीमुर्दूभाषाञ्च संस्थापयितुकामानां प्रान्ताधिपसचिवानां नीतिप्रवृत्तिः दरीदृश्यत एव ।

एम्० ए० परीक्षाकल्पामाचार्यपरीक्षां समुत्तीर्णेभ्यो जनेभ्यो यदि भाग्यवशात् कथञ्चित्क्वचित्स्थानप्रदानम् "डिस्ट्रिक्टबोर्ड" तो भवति तथापि "मिडिल". परीक्षोत्तीर्णैः "लोअरपाठशालाध्यापकैः समीक्रियन्ते मासिकवेतनदाने ।

अतः संस्कृतज्ञेभ्यस्तत्प्रियेभ्यश्चेदं मे निवेदनं यत् "सङ्घे शक्तिः" इति वचनं संस्मृत्य निजदायमादातुं बद्धकरैः सर्वैः प्रयत्नपरायणैर्भवितव्यम् । "संस्कृतज्ञाः मन्दा व्यवहारानभिज्ञाश्च भवन्तीति" इदानीन्तनानां भाषान्तरभाषिणां प्रायोवादं समूलमुन्मूलयन्तः केवलम् समाचारपत्रं पठित्वैव न विरमन्तु अपि तु तदर्थं भृशं यतन्ताम् । बहुषु समाचारपत्रेषु सनिर्वेदं निजयाचितानि प्रकाशयन्तु । अन्यथा गृहएव अरण्यरोदनं कुर्वताम् भवतां क्लेशमपवारयितुं कोऽपि श्रुतिविवरादङ्गुलिमपसारयितुं न कामयेत ।

अन्ततः प्रान्ताधिपसचिवेभ्योऽपि निवेदनं यत् अद्यत्वे शिक्षाप्रचारस्य महान् समुद्योगः, किन्तु इदानीमेव दीपावसरे संस्कृतविद्या अनुदिनं कृशत्वमुपयाति नैतत्समुचितम् । अतोऽस्या अपि यथा समुन्नतिः स्यात्तथा सकरुणलोचनैरियं निभालनीया ।

[ नहि पत्रे प्रकाशनमात्रेणैवास्य रोगस्यापगतिर्भवेत् । किन्तु विहार-संस्कृतकन्वोकेशनसदस्याः सर्वे मिलित्वा शिक्षामन्त्रिणः समक्षे डेपुटेशनरूपेण गत्वा सम्बोधयेयुः संस्कृतस्येमामवस्थाम् । तत्कृते च निरन्तरं रीत्या नीत्या आन्दोलनञ्च कुर्य्युस्तदा कथञ्चित् स्यादपि । नो चेत् यथा साम्प्रतं तत्पद-स्थानां कृत्यं विद्यते तथैव स्थास्यति चेत् न किमपि भवद्भिः कृतं सिद्धिमे-ष्यति । यतो हि यत्र येऽधिकारिणः तेषामेव कथनं राज्याधिकारिणः शृण्वन्ति नान्येषाम् । राज्याधिकारिणो दृष्टौ तु संस्कृतभाषाप्रतिनिधयः संस्कृतकन्वो-केशनसदस्या एव सन्ति । अतश्च भवन्तः पत्रे लेखप्रकाशनानन्तरं कन्वो-केशनसदस्यानां सन्निधौ निवेदनं कुर्वन्तु इति नः प्रतिभाति (स० सम्पादकः)]

## स्वर्गीय श्री अमृतलालशास्त्रिपादानां स्मारकफण्डः ।

पेटलादनगरे १९३९ खृष्टाब्दीयजानुपरीक्षा प्रारंभन्तः ।

सावसरं १९३९ खृष्टाब्दीयफेब्रुयारीमासीयद्वितीयदिवसे अस्ताचल-चूडावलम्बिनि भगवति सवितरि स्वर्गीय शास्त्रि श्रीअमृतलालशर्म्मपादानां भूतपूर्वाणां स्वर्गतिकाम नोद्देशिका सभापति श्रीकान्तिलालशास्त्रिपादैः सुयोग्यैः सुष्ठु परिचालिता स्वर्गतभूतपूर्वशास्त्रिगुणावली स्मृतिभूयसां परीक्षार्थिनाम् अपरीक्षार्तिनां वा सुरगिरैकहृदयानां बहूनां विद्यार्थिनां सभा आहूता । न केवलमियं सभा पेटलादीयान्तेवासिभिः समलङ्कृता, अपि तु गुजरात काठियावाड़ीयैरपि प्रायेण त्रिशतसंख्या भजद्भि विंद्यानुशीलिभिः मालसरीय श्री माधवविजयपाठशालाध्यापक महोदयैः श्री वैष्णवदासपादैः सिद्ध पुरीय श्री सनातन ब्रह्मचर्य्याश्रम अध्यापकैः शास्त्रि श्री मच्छुराम व्याकरणा चार्य्यमहोदयैः—पेटलादीय श्रीनारायणसंस्कृत महाविद्यालयाध्यापक श्री गौरीशंकरशास्त्रिपादैः श्रीत्रिपुरशंङ्कर महोदयैः वैद्यराजश्री उमाशङ्करशास्त्रिभिः श्रीनर्म्मदाशंकर शास्त्रिमहोदयैरेवं बहुभिरपि विद्याधुरीणैः परिशोभिता-भूत् । अत्र सभायां पण्डितवैष्णवदासमहोदयाः स्वर्गीय शास्त्रिपादानां सर्व शास्त्र पारगामितां विद्यार्थिषु योग्येष्वयोग्येषु वा सप्रेम समदर्शितां संस्कृत साहित्यैक हृदयतां अकपटं तथा निर्भयं धर्म्मप्रेमाणं च विशदीकृत्य सुललित-सुललितभाषया विद्यार्थिनां हृदयं समरञ्जयन् । अतः परं अमदावादीय-ब्रह्मचारी वाडीसंस्कृतपाठशालाया अन्तेवासी श्री रामलखनशर्म्मा हृदया कर्षण्या भाषया पूज्यस्वर्गीयशास्त्रिपादानां नामेह जगति चि-ियितुं तदीय स्मृत्युद्बोधकः कश्चित् फण्डोऽस्तु, इति प्रस्तावं श्रोतृसकाशे उपस्थापयत् । तमेव पर्य्यपूष्टयन् सभापति महोदयाः श्री कान्ते लालशास्त्रिणः सर्वे पण्डित वर्गाः विद्यार्थिनश्च तं सानन्दं स्वीकृतवन्तः । तदैव तत्रोपस्थितैः विद्यार्थिभिः शास्त्रिपादैश्च प्रदत्तः पञ्चाशदधिक शतेन रुप्यकैरेकः फण्डः प्रस्तुतः तैः सवैश्चायम् अग्रे समधिकयितुं प्रत्यज्ञायत च अनन्तरं सभा समागतैः सर्वैः स्वर्गीय शास्त्रिपादानुद्दिश्य कृत ज्ञता प्रदर्शन पुरःसरं स्व स्वश्रद्धाञ्जलिं निवे-दयद्भिः रुभेयम् सभात्वहीना तांत्रपिता ।

—— —— ——

## गायत्र्युपदेशप्रकारः

( ले०—श्री पं० विद्याधर शास्त्री गौड़ महाशयः, अग्निहोत्री )
[ प्रिन्सिपल, धर्मविज्ञान विभाग—हिन्दू यूनिवर्सिटी, काशी ]

सर्वस्मृतिपर्य्यालोचनया सर्वगृह्यपर्यालोचनया च उपनयने गायत्र्युपदेशस्यायं क्रमः प्रतीयते—ॐकारपूर्वं व्याहृतिपूर्वं च आचार्यः प्रथमं पादं स्वयमुक्त्वा अथ माणवकं वाचयेत्। एवं पादत्रयं पृथक् पृथगुक्त्वा ततस्तं वाचयेत्। द्वितीयवारमर्द्धर्चमुक्त्वाऽथ वाचयेत्। यदि माणवकः पादं पादं अर्द्धर्चमर्द्धर्चं च वक्तुं न शक्नुयात्, तर्हि यथाशक्ति तं वाचयेत्। तृतीयवारं माणवकेन सहैव सर्वामृचम् आचार्यो ब्रूयात्। न तु पूर्वस्मिन् वारद्वय इव प्रथममाचार्यस्योक्तिः, अनन्तरं माणवकस्योक्तिः।

"अथास्मै सावित्रीमन्वाह पच्छोर्द्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन्"

इति पारस्करगृह्यात्।

तृतीयेनेति हेतौ तृतीया, न तु तृतीयेन सह इति सहयोगे तृतीया। तथा सति पुत्रेण सहागतः पितेत्यस्य वाक्यस्य यथा पुत्रेण सह पितुरागमनमर्थः तथात्रापि तृतीयस्यैवावर्त्तनं स्यात्। अतः सहेत्यस्य साकाङ्क्षस्य माणवकपदेन अध्याहृतेन तृतीयान्तेन सम्बन्धः। एवं च तृतीयस्मिन् वारे आचार्यो माणवकेन सहैव अनुवदेदिति सूत्रार्थः। अयमेवाशयः "अत्र तु सहपाठो विशेषः" इति ब्रुवतां पद्धतिकाराणामपि अभिप्रेतः। अत्रापि यदि समग्रामृचमभिधातुं न शक्नुयान्माणवकस्तर्हि यथाशक्त्यैवाभिधानम्, परन्तु उभाभ्यां सहैव वक्तव्यम्, न तु पूर्ववद्वचनानुवाचने। एवं सति ये तावत् प्रणवव्याहृतिरहितामेव गायत्रीमुपनयने उपदिशन्ति न सहानुवचनम् तेषामनुष्ठाने न किञ्चित् प्रमाणं पश्यामः।

अथ प्रमाणम् आश्वलायनगृह्ये—

"जान्वाच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भो अनुब्रूहि पाणिभ्यां पाणी संगृह्य सावित्रीमन्वाह पच्छोर्द्धर्चशः सर्वां यथाशक्ति वाचयीत।"

आश्वलायनकारिकायाम्—

"ॐ भूर्भुवः स्वः पूर्वां तु सावित्रीं वाचयेदथ।
पादं पादं च सावित्र्याः स्वयमुक्त्वाऽथ वाचयेत्॥
ततस्त्वर्द्धर्चमर्द्धर्चं सर्वां तामथ वाचयेत्।
एवं वक्तुमशक्तं तु तं यथाशक्ति वाचयेत्॥"

आपस्तम्बसूत्रे—

"सावित्रीं भो अनुब्रूहीति तस्मा अन्वाह तत्सवितुरिति पच्छोऽर्द्धर्चशस्ततः सर्वा व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथाऽर्द्धर्चयोरुत्तमायां कृत्स्नायाम्।"



( श्री पं० विद्याधर शास्त्री गौड़ः वेदाचार्यः )

पारस्करगृह्यसूत्रे—

"अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय पच्छोऽर्द्धर्चशः सर्वां च तृतीयेन सहानुवर्त्तयन्"

गोभिलगृह्यसूत्रे—

"तस्मा अन्वाह पच्छोऽर्द्धर्चश ऋक्श इति महाव्याहृतीश्च ॐकारान्ताः।"

लौगाक्षिः—

"सावित्रीं स्वयमाचार्यः पूर्वं पच्छस्तथैव तम्।
शिष्यं च वाचयेत्पश्चादुच्चार्यार्द्धर्चशः स्वयम्॥
पूर्वं तथैव शिष्यं च वाचयेदित्ययं क्रमः।
त्रिष्वप्येतेषु पद्येषु यथा शिष्यस्तु शक्नुयात्॥
वक्तुं तथैव आचार्यो वाचयेदवधानतः।"

यमः—

"ॐकारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति।
चरति ब्रह्मचर्यं च स वै श्रोत्रिय उच्यते॥"

तिस्रः व्याहृतीरिति शेषः।

आपस्तम्बिनां तु प्रथमवारं प्रथमत ॐकारमुक्त्वा। अनन्तरमेकैकस्मिन्नपि पादे एकैकां व्याहृतिं सम्बद्ध्य पठनमिति। शम्।





## शुभाशीःप्रशस्तिः

शयानः श्रीविश्वेश्वरचरणपङ्केरुहतले
जगन्मातुस्तन्यामृतमितभितान्नैकशरणः।
रणद्भेरीरावै रणरतकलिक्ष्मापतिभटै—
र्हतं पश्यन् सर्वं गलितबलगर्वं विलपति॥ १॥

प्रभो शूलिन्! शूलीकृततनुरयन्ते करुणयाऽ-
नया जीवन्नेव प्रहतबहुदुष्कर्मकलुषः॥
तथाप्याशामाशादशकगतिमन्तःस्थितिमतीम्।
परित्यक्तुं नाऽलं भवति भव तां दूरयतराम्॥ २॥

करिष्यामः सङ्घं कलिकलुषभङ्गं दृढतरम्
स्फुरद्वर्णं वर्णाश्रमशरणमव्याजसरणिम्॥
इतीच्छाबद्धानां कियदपि कृतं येन कृतिना
स यातोऽहन्तांतं तनयततुरद्यापि तनुते॥ ३॥

शिष्टस्तेष्वयमेक एव जरसा रोगेण च व्याकुलः,
तत्सङ्घाब्दमहाधिवेशनरसे साक्षाज्जिघृक्षोत्सुकः॥

अन्ते सन्नपि वञ्चितो वत ततः श्रीसाम्बशम्भोः पदा—
म्भोजे प्रार्थयते क्रमाभ्युदयतां सङ्घस्य सत्सङ्गिनः ॥ ४ ॥

अपि च ब्राह्मेण तेजसा वैदुष्येण सम्मिलितं धर्मभावितचेतसां वणिजां रत्नज्योतिः। तेन कलिकालनिशीथसमुद्यत्तिमिरं अपयास्यतीति धार्मिकाणां महानाश्वासः। सभापतिः श्रीमान् वैजनाथ वाजोरिया एम्० एल्० ए० महोदयः, मन्त्री श्रीमान् रावबहादुर सदाशिवमाधव पराण्डे शर्म्मा, कोषाध्यक्षः श्रीमान् लच्छीराम चूड़ीवाला श्रेष्ठी, एतत्कोषाध्यक्षः श्रीमान् गौरीशङ्करगोयन्का श्रेष्ठी, स्वागताध्यक्षः श्रीमान् धर्मदत्तशास्त्री।

एतेषां सम्मेलनसूत्रभूतौ श्रीमद्राजेश्वरशास्त्रि-श्रीमद्देवनायकाचार्य्यौ। ये च सङ्घाभ्युदयकाङ्क्षिणो विद्वांसो ब्राह्मणाः सज्जनाश्च द्विजाश्चैकजातयश्च यथार्हं तानाशीर्भिर्विनयेन च संवर्ध्य विज्ञापयति भगवच्छ्रीविश्वनाथ-प्रवर्तितेन श्रीमता गौरीशङ्करगोयनकाश्रेष्ठिना विद्यावित्तवित्तमहिम्ना बहुभिर्विस्मृतप्रायस्य ब्राह्मण-महासम्मेलनीय-संस्कृत-विश्वविद्यालयसङ्घटन-सङ्कल्पस्य वार्त्तामुद्घोष्य मुमूर्षोरप्यस्य जरसो ब्राह्मणस्य निःस्नेहजीवनदीपे तैलनिषेक इव श्रवसः विपञ्चीस्वरसम्पात इव पीयूष-विलेप इव मनसो, योऽसौ महानानन्दोत्सवः प्रवर्तितः स खलु सर्वैरेव महोत्साहेन अनुवध्यताम्। येन भगवती वाग्देवी प्रसादकरुणया भारतमिदं अनुगृह्णीयादिति।

निखिललोकमहनीयविभूतिनि श्रीविश्वनाथचरणपरिपूते श्रीवाराणसीधाम्नि संयोजितमिदमेकादशं वर्णाश्रमस्वराज्यसङ्घसम्मेलनमेतदधिष्ठानपुण्यधामेव संस्कृत-विश्वविद्यालयप्रवर्तनगौरवेण सर्वतः सम्मृद्धं भूयादिति।

—श्रीपञ्चाननतर्करत्न भट्टाचार्यस्य
(महामहाध्यापकस्य)

## पौराणिकसमन्वयः

अनुवादकः—ईश्वरशर्मा 'मोहनः'

'त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥'

—श्रीपुष्पदन्ताचार्यः।

यो मूलपदार्थोऽस्ति स एक एव। अजः, अविनाशी निर्गुणः, निराकारः सर्वव्यापी च। क्षेत्ररूपेण यः प्राणिमात्रस्य हृदये विराजमानः। तस्य व्यापकतत्त्वस्य न किमपि नाम, न च रूपम्। स नामरूपाभ्यां दूरे।

शिवपरकशास्त्रेषु स मूलपदार्थः, शिवः। विष्णुपरकशास्त्रेषु च स एव विष्णुशब्द-व्यपदेश्यः, यतः स व्यापकः। सर्वविधानां भक्तानामाराध्यरूपेण यो निर्गुणो मूलपदार्थः, स एक एव। स्वकीयभावनानुसारं रुचिवैचित्र्यधारि सर्वजनानामनुरूपं साधनं मिलेद् एतद् दृष्ट्या निर्मितशास्त्रेभ्यो भक्तः साधनं स्वयं गृह्णाति सर्वाणि नामानि रूपाणि च तस्यैव परमतत्त्वस्य। तस्यैकमपि न नाम न च रूपम्।

निर्गुणनिराकारपदार्थास्त्रिचतुरास्तु * न भवितुं शक्याः। व्यापक एक एव भविष्यति। अतस्तत्र कोऽपि विवादो भवत्येव न। तस्य यदेव नाम विधीयेत, तत् सर्वं युक्तम्। विवादः केवलं सगुणे भवति यत्—कः सर्व्वश्रेष्ठः। यद्धि सगुणस्वरूपमस्ति तदीया भक्ताश्च मायाया दूरे त्रिपादविभूत्यां सन्ति। तानि अनन्तानि समानानि नित्यानि च। उत्पत्तिविनाशादयस्तु मायाविशिष्टैकपादविभूत्यन्तर्गता एव। सगुणब्रह्मणस्त्रिपादविभूतिस्तु चिन्मयी घनानन्दा च।

सगुणब्रह्मणो विभूतिस्तस्य निर्गुणब्रह्मण एव। स एव मूलपदार्थः स्वशक्त्याऽनेकसगुणरूपेषु लीलायै व्यक्तीभूतः। तदीयैतदनेकतत्त्वकारणं 'लीलाकैवल्या' अतिरिक्तं न किमपि। इत्थं ब्रह्म-शिव-विष्णु-राम-कृष्णाद्यनेकरूपे व्यक्तोऽपि स एक एव। ज्येष्ठकनिष्ठो नास्ति। परस्परमभिन्नः। एकं चरित्रं वामनपुराणादुद्धृत्य तदा वयं स्पष्टीकरिष्यामः।

एकदा विश्वनाथो बहुदिनपर्य्यन्तं स्तब्धोऽतिष्ठत्। तदचलत्वेन विश्वमकस्माद् विशृङ्खलीभूतम्। देवताश्चुक्षुभुः। ते श्रीहरिमशिश्रियन्। श्रीहरिणा देवाः प्रबोधिता यत्—शङ्कर एव जागत्काऽव्यवस्थायाः कारणं वेत्ति; स एव शान्तिं दातुं शक्त इति। एवं स देवानादाय कैलाशे उपस्थितः।

कैलाशमागतवतामपि देवानां शङ्करदर्शनं न जातम्। कैलाशपर्वते आरोहणमात्रेण तु भगवतो दर्शनं न भवति। दर्शनन्तु तत्कृपासापेक्षम्। शिवस्तु युष्माकं समक्षे तिष्ठति; परं यूयं तं द्रष्टुं न क्षमाः, स्तुत यूयं तम्। इति विष्णुना प्रतिपादितम्। देवा विष्णोराज्ञां मेनिरे। अत्र तु विष्णुना देवान् प्रति अभेदतत्त्वमुपदेष्टव्यमासीत्। विष्णुः स्वहृदयस्थं शिवलिङ्गं दर्शयामास। देवास्तमानर्चुः। प्रसन्नः सन् हरिरेव हरिहरोऽभूत्। एकस्मिन् शरीरे हरिहरयोर्दर्शनमभूत्। एकश्चरणः श्याम एकश्च गौरः। एकतः कट्यां पीताम्बरम्, अन्यतो गजचर्म। अर्धश्यामवक्षा वनमालोपेतः,

---

* त्र्युपाभ्यां चतुरोऽच्, इति अच् प्रत्ययः।

अर्धं च गौरः सर्पयुक्तश्च । एकतः स्थितयोर्हस्तयोश्शङ्खो गदा च, अन्यतश्च स्थिते हस्ते त्रिशूलमासीत् । एकत एकं नेत्रम्, अन्यतः सार्द्धम् । एकतः शिरसि अर्धमुकुटम्, अपरतो जटाजूटः । देवा भावपूर्णा इदं हरिहरात्मकं रूपं तुष्टुवुः ।

उक्तवर्णनेन साकाररूपमपि प्रभोरभिन्नं समानं वा तिष्ठति । शास्त्रेषु शिवलोक-वैकुण्ठ-साकेतगोलोकप्रभृतीनामनेकेषां दिव्यलोकानां वर्णनम् । यस्मिन् शास्त्रे शिवलोकस्य वर्णनं, तस्मिन् वैकुण्ठादिकं शिवलोकस्याऽन्तर्गतं मंस्यते । तदधीश्वरश्च शिवसेवकः । एवं वैकुण्ठगोलोकादिप्राधान्यपरे शास्त्रे शिवलोकादयोऽन्तर्गता मंस्यन्ते, तथा तेषामन्तर्गतप्रान्तानामधीश्वरा * प्रधानपरतन्त्रा भविष्यन्ति ।

सगुणलोकानां स्थितिराकारो विस्तारो रचना तत्रत्यानामावासप्रकार आकृतिः प्रकृतिश्च सर्वेषु शास्त्रेषु वर्णिताः । तदेयं कठिनताऽवशिष्यते यद्—वस्तुत एषु कतमो लोक * प्रधानः । कतमश्च तदीयोऽन्त * प्रदेशः ?

वस्तुतो यदि दृश्येत; तर्हि वयं शास्त्राणि यया पद्धत्या पश्यामः, सा पद्धतिरेव दूषिता । वयमवबुध्यामहे यदेकमेव पुराणं शास्त्रं वा समस्तवार्तानां वर्णनाय निर्मितम्, सर्वाश्च वार्तास्तस्मिन्नेकस्मिन्नायान्तीति । अत एव शास्त्रेषु अस्माकं वैभिन्न्यं दृश्यते । वयमेतत् सर्वथैव न विचिन्तयामो यदि एकस्मिन्नेव सर्वा वार्ता आगमिष्यन्; तर्ह्यपरेषां निर्माणस्य किं प्रयोजनमासीत् ?

पूर्वमाचक्ष्महि यत्—शास्त्राणि सर्वविधरुचिमतां जनानां कृते तदीयरुच्यनुरूपसाधनं दृष्ट्वा प्रभुचरणपर्य्यन्तं तेषां प्रापणार्थं निरमायिषत । एकं शास्त्रमेकविधरुचीन् जनान् तल्लक्ष्यपर्य्यन्तं प्रापयितुं क्षमम्; तदीया पूर्णसामग्री अमुष्मिन् भवति । एतस्मिन्नर्थे तत पूर्णम् । परं तस्मिन्नन्यविधरुचिमतां जनानां कृतेऽपि पूर्णं साधनं भवेदिति न सम्भवि । अतो यच्छास्त्रं यादृशरुचिमतां जनानां कृते साधनप्रदाने प्रवृत्तं भवति; रुच्यनुरूपमेव साधनं तथा भगवतः सगुणरूपं तल्लोकञ्च वर्णयति । निर्गुणस्य तु वर्णनमसम्भवि । अतस्तत्सगुणद्वारा रूपमेव निर्गुणमाख्याय तन्नाम्ना निर्गुणस्य लक्ष्यं कारयति ।

अविकस्पष्टतार्थमुदाहरणमादेयम् । यथा—शिवभक्तरुच्यनुरूपसाधनस्य व्यवस्थापकेषु शिवशास्त्रेषु शङ्करस्य सगुणरूपस्य शिवलोकस्य च वर्णनं भवति । शैवसाधनानां वर्णनं भवति । शङ्करस्य नामाऽऽदाय 'शिव' इत्याख्याय निर्गुणतत्त्वस्याऽपि सङ्केतो भवति । इयमेव वार्ता विष्णवादिशास्त्रेष्वप्यूह्या ।

शिवपरकशास्त्रेषु वैकुण्ठस्य विष्णुपरकशास्त्रेषु च शिवलोकस्य वर्णनं भवत्येव । एकमेव शास्त्रं यदिताननन्तसगुणलोकान् वर्णयेत्; तर्हि न तथा करणे शक्तम् । अतस्तत् स्वविषयमेव वर्णयति । न्यायदर्शनेऽप्यस्य सङ्केत * कृतः ।

* श्यामवक्षाः । अत्र 'अत्वसन्तस्ये'ति दीर्घः ।

तथा च—'तत्रैकेन न सर्व्वं व्यवस्थाप्यते—इति यथाविषयमेतानि प्रमाणानीन्द्रियादि वदिति' न्या० ४।१।६२।

अधुना प्रश्नोऽवशिष्यते यत्—सर्वेषु शास्त्रेषु गौणतयाऽन्येषां लोकानां वर्णने सत्यपि इयं वार्त्ता कथं मन्येत ? अस्माभिस्तदेव तु तत्त्वं ज्ञेयम्।

सृष्टिर्भगवता विचित्रा निर्मिता। विश्वस्य एकः कणो विश्वस्य प्रतिमूर्तिरस्ति। विश्वस्मिन् यत् किञ्चित्; तदेव तस्मिन् कणेऽपि गौणतयाऽस्ति बीजे वृक्ष इव। 'यथा पिण्डे तथा ब्रह्माण्डे' इति प्रसिद्ध आभाणकः। केवलं मुख्यता गौणता च भवति। किमपि वस्तु एकाकि न। पुरुषस्य शरीरे गौणरूपेण स्त्रीत्वं, स्त्रीशरीरे च गौणरूपेण पुरुषत्वमस्ति। मनुष्यस्य शरीरे गौणरूपेण समस्तपशुपक्षित्वं निखिलञ्च ब्रह्माण्डमस्ति। परं तत्र मनुष्यत्वं प्रधानम्। तथैव पशौ पशुताप्रधानत्वेऽपि मनुष्यत्वेन सह समस्तं विश्वमस्ति। प्रधानताया दृष्ट्या उभौ भिन्नौ। एकोऽन्यस्य नाऽन्तर्गतः।

पृथिव्यां जलस्यांशोऽस्ति; परं तत्र पृथिवी प्रधानम्। यदि वयं पृथिव्या वर्णनं कुर्य्याम; तर्ह्यस्माभिः शिष्टानां चतुर्णां भूतानां वर्णनं गौणरूपेण, तथा तेषां गौणतायामपि एकेन विशिष्टक्रमेण वर्णनं करणीयं भवेत्। यदा जलं वर्णनीयं भवेत्; तदा तत्र जलं प्रधानं भवति, पृथिव्यादयश्च तदन्तर्गता गौणाः। अयं गौणताक्रमोऽपि परिवर्त्तितो भवति।

कथितदृष्टान्तेन लोकानां वर्णनवैभिन्न्यस्य रहस्यमवगतं स्यात्। शिवलोकवैकुण्ठसाकेतगोलोकादय इमे सर्वथा पृथग्भूताः समानमहत्त्ववन्तश्च सन्ति। एषु कश्चिल्लघुः कश्चिच्च वृहत् प्रधानोऽप्रधानो वा न। एतदधीश्वराः शिवविष्णुप्रभृतयोऽपि परस्परं समाना एकस्यैव तत्त्वस्य अनेकरूपत्वाद् अभिन्नाः। एवञ्चैकस्मिँल्लोकेऽन्ये लोका अपि गौणरूपेण तादृशा एव, यथा—जले पृथ्वी, पृथिव्याञ्च जलम्। यथा वा, यथा मनुष्ये पशुत्वं पशौ च मनुष्यत्वम्। जले या पृथिवी तस्या गुणादयोऽपि पृथिवीसदृशा एव। एवं ये लोकान्तर्गता लोकाः, तेषामप्याकारप्रकारस्तथाऽधिष्ठातारोऽपि स्वमूललोकसदृशा एव।

इत्थं शास्त्राणां वर्णनपार्थक्यस्य स्पष्टसमन्वयः सम्पन्नः। शिवपरक-पुराणानि शिवलोकं विष्ण्वादिपरकशास्त्राणि च वैकुण्ठं वर्णयन्ति। स्वप्रधानलोकं वर्णयन्ति च तानि यदप्रधानरूपेण स्वलोकस्य प्रान्तमाख्याय लोकान्तरं बर्णयन्ति; ते लोकान्तर्गतलोकाः। प्रधानलोकास्ते न सन्ति, यत्र ते स्वप्रधानलोकाधीश्वरस्य अधीनं लोकान्तरस्याऽध्यक्षमाचक्षते। तत्र लोकान्तराऽध्यक्षाणामप्रधानता ज्ञेया। प्रधानलोकानामध्यक्षास्तु समाना अभिन्नाश्च।

प्रत्येकशास्त्रं यत्र तत्र स्वाभीष्टसगुणरूपेण सह अपरस्य सगुणरूपस्य साम्यमभेदञ्चाऽऽचष्टे। अयं सङ्केतोऽस्ति यद्—लोकान्तर्गतलोकानां तदधिष्ठातॄणां वा प्रधानताज्ञानस्य स्खलितिर्न कार्य्या। यत्राऽभेदस्य सामान्यताया वा प्रतिपादनं भवति तत्र लोकद्वयस्याऽधिष्ठातॄणाम् अन्तर्गतलोकस्य वा वर्णनं न भवति।

शैवशास्त्रेषु यत्र वैकुण्ठादयᳵ कैलाशस्य प्रान्ताᳵ कथ्येरन्, तत्र ते लोकान्तर्गतलोकत्वेन ज्ञेयाः। यत्र च विष्णुप्रभृतयः शिवोपासकत्वेन आज्ञाकारित्वेन वा अप्रधानाᳵ कथ्येरन्; तत्र ते तदन्तर्गतलोकाधिष्ठातारो ज्ञेयाः। यत्राऽभिन्नत्वेन समानत्वेन कथ्येरन्; तत्र स्वतन्त्रवैकुण्ठाद्यधिष्ठातुर्वर्णनं ज्ञेयम्। अयमेव नियमो× वैष्णवानां तथा रूपप्रधानशास्त्राणां कृतेऽपि ज्ञेयः।

सृष्टिवर्णनेऽपि पुराणेषु वैषम्यम्। कस्मिँश्चित् सृष्टिप्रथमकर्त्ता शिवः, कस्मिँश्चन च ब्रह्मा, अपरस्मिँश्च विष्णुᳵ प्रतिपाद्यते। य आदिकारणत्वेनाऽऽख्यास्यते, शेषाः सर्व्वे तदधीना मंस्यन्ते। तात्पर्य्यमिदं यत्—सृष्टिस्त्रिपादविभूत्यास्तेभ्यो नित्यलोकेभ्यो भवति। कस्मिँश्चित् कल्पे कैलाशात् सृष्टिनिर्माणसञ्चालनलया भवन्ति। कचिच्च कल्पे वैकुण्ठादथवा लोकान्तरात्।

शास्त्राणि तस्यैव कल्पस्य वर्णनमाचक्षते, यस्य कल्पस्य सृष्टेर्निर्माणादिकं तदीयप्रधानलोकाज्जातं स्यात्। यस्माल्लोकात् सृष्टिनिर्म्माणमादौ भवति, तदीयलोकान्तर्गतलोका एवं तदधिष्ठातारोऽपि सृष्टौ तेनैव क्रमेण प्रधानाऽप्रधानास्तिष्ठन्ति। इदमेव समस्तविभिन्नतानां रहस्यम्। अस्माभिः स्वाराध्यस्याऽऽराधना स्वानुकूलशास्त्रेण दृढश्रद्धया कर्त्तव्या। परन्तु अन्यशास्त्राणि लघूनि हेयानि वा न मन्तव्यानि ॥ इति।

## "देवरिया" सनातनधर्मसभाया वार्षिकोत्सवसमारोहः।

गोरखपुरमण्डलान्तर्गत—देवरियातहसीलस्थ—सनातनधर्मसभाया ४१ तमो वार्षिकोत्सवो दिसम्बरमासस्य १९-२०-२१—तारिकासु महता समारोहेण सम्पन्नः। अत्र कविरत्न पं० अखिलानन्दमहोदयाः, भारतधर्ममहामण्डलमहोपदेशकाः पं० गङ्गाविष्णु शास्त्रिणः पं० भगवत्किशोर "व्याकुलाः" सङ्गीतसम्राजश्च समागता आसन्। प्रथमदिने सायङ्काले ४ वादनादारभ्य ९ वादनपर्यन्तं व्याख्यानादिकं जातम्। द्वितीयदिने प्रातःकाले तृतीयवादने च शङ्कासमाधानस्य च कृतेऽवसरो दत्त आसीत्। शास्त्रार्थकरणार्थं स्थानीय एवैक आर्यसमाजी मूर्तिपूजाप्रभृतिविवादग्रस्तविषयेषु वक्तुमसमर्थो मांसप्रकरणमादाय सभायामागतः। समाधानार्थं पं० अखिलानन्द महोदया उत्थिताः सन्तस्तस्य निखिलां दुश्शङ्कां समाधाय तथा प्रभावमुत्पादयामासुर्यथा सर्वेषामपि सुमहान् सन्तोषो जातः। शास्त्रार्थकरणार्थमपि वहवः कोलाहलं कृतवन्तः परं स्वीकृतायां शास्त्रार्थघोषणायां न कोऽपि समाजी सम्मुखमागन्तुमुत्साहं कृतवान्। अन्तिमेऽवसरे पं० अखिलानन्दशर्मणा "वेद और आर्यसमाज" विषये गङ्गाविष्णुशास्त्रिणा च पुराणमहत्त्वविषये तादृशं वैदुष्यपूर्णं प्रभावापादकञ्च व्याख्यानं कृतं यथा विरोधिनामपि मनस्सु सनातनधर्मे श्रद्धा समाजे च घृणा जाता। एवं महता समारोहेण सभापर्व समाप्तिमगात्।

उपमन्त्री

वासुदेव त्रिवेदी विनीतः साहित्याचार्यः

× वैष्णवानाम्। निषिद्धव्यवधानात्त्रुटो नस्य णत्वं न।

## अभिभाषणम्।

[ काशीस्थ गोयनकामहाविद्यालयस्य वार्षिकोत्सवावसरे तत्सभापतीनां महामहोपाध्याय पण्डित बालकृष्णमिश्रमहोदयानां हिन्दू-विश्वविद्यालय संस्कृतविभागाध्यक्षाणाम् ]

गुञ्जन्मिलिन्दमुदितं चपलाश्लेषातिमञ्जुलं किमपि।
अधिकालिन्दीकुञ्जं मरकतपुञ्जं चिरं जयति॥ १॥

माननीयाः! सनातनधर्मसमुद्धारबद्धपरिकराः, महानुभावाः सभासदः!

असत्यपि परिषत्पतिपदोपयोगिनि योग्यत्वे संख्यावतां सेवको यदहमास्थया तदीय-स्थाने स्थापितः तेन "अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः" इति प्राचामौचित्य-चारुवचः सहसाऽनुसन्धानस्य पन्थानमधिरोहति। तत्कृते च धन्यवादानां शतमर्प-यामि दर्पणगणदर्पनिराकारिकीर्तिकिरणधवलीकृतकाश्यपीतलेभ्यः श्रीमद्भ्यः।

मासमासादितक्लेशातिशयस्य मे विख्यातिगोचररुचिरचारित्रजुषां महाविदुषा-मेकत्र दर्शनादन्तरात्मनः पवित्रतायाः प्रत्याशापि नासीदेव। किन्तु देवस्य अद्य प्रसद्यमानता प्रात्याहिकतपोविधानापोदितपाप्मनः अध्यात्मविद्यानिरत-मनसः श्रेष्ठिगणाग्रगणनीय-गौरवगृहीतविग्रहस्य गौरीशङ्करगोयनकामहोदयस्य दया च तदवाप्तौ निमित्तभावं भजति। येन किल करालेऽपि कलिकालेऽतित्वरितवाहि-न्यामाचारपरिवर्तनसरिति एतन्महाविद्यालयस्थापनेन श्रेयसां निदानानि संर-क्ष्यन्ते संस्कृतशास्त्राणि। एतस्मिन् चतुरो वेदान् षड् दर्शनानि त्रिस्कन्धं ज्यौतिषं व्याकरणं काव्यसाहित्ये स्पृहणीयपाण्डित्याः परमोत्साहेनाध्यापयन्ति सन्तः। अत एव पुरोदीरितः श्रेष्ठिप्रवरः संवत्सरशतं आप्नुवन् भव्यानि जीव्यात्, छात्राश्च इतो विद्युत-मिव विद्योतमानां विद्यां प्रतिपद्य सद्यशसः सद्य एव व्याजं विना कृतेन प्रणयेन अपाय-विधुरेण धैर्येण प्रस्पन्दमानेन ब्रह्मवर्चसेन समन्ततः अनादि पारम्पर्यायातपुण्यपालनाय प्रवर्तन्तामिति त्रिपुरारिपादपाथोजं प्रार्थये।

सद्विद्यावाप्तये दिवाश्रिता दिवानिशं परिश्राम्यन्तः सम्यगाचारपरा अन्ते-वासिनश्च प्रेयांसः छात्राः!

पुरा निर्माणकर्मीकृतैः कियद्भिः श्लोकैः सानुरोधं सस्नेहं साशीर्वादमावेदयामि समासतो युष्मानायुष्मतः।

धर्मस्य मानाय सनातनस्य संभूय भूयः प्रयता यतध्वम्!
मा मान्त्रयामोदकमेध्यमार्गान्मनोमनागप्यपसारयध्वम्॥ १॥

सावित्रसर्वोत्तम-मन्त्रजापादलौकिकीं शक्तिमुपार्जयध्वम्!
आशङ्किता यामवलोकमानाः पाखण्डलोका भुवने भवेयुः॥ २॥

श्रद्धानिबद्धादरतो गुरूणां सेवासु सन्नद्धतयावधानैः।
औद्धत्यमद्धा प्रविभूय नम्रधुरं दधाना हितमातनुध्वम्॥ ३॥

गेहेऽपि गीर्वाणगिरा निगाद्य सम्पाद्यमेतन्नियमं कुरुध्वम्।
इष्टानुबन्धि प्रतिभासमृद्ध्यै वादित्वमाधाय विचारयध्वम्॥ ४॥
भूदेवदेहोचितखाद्यपेय-वेषादि शास्त्रप्रतिपादितं यत्।
तदाददानाः शरदां शतानि श्रीशारदाया दयया रमध्वम्॥ ५॥
बहुकालादामयक्रान्तकृशकायतयाऽधिकमितः समीहितं भाषितुं न पारये।

इति विरमामि।



## देवरिया-संस्कृत साहित्यसम्मेलन-समाचारः।

देवरियायां दिसम्बरमासस्य २०-२१-तारिकयोः संस्कृतसाहित्यसम्मेलन-समारोहः तमकुहीराज्यपण्डितानां श्रीमदुमापतिद्विवेद "कविपति" महोदयानां साभापत्ये महता साफल्येन सम्पन्नः। देवरिया, हाटा, पडरौना-तहसीलस्थपाठशालानां प्रायो बहवो विद्वांसः समागता आसन्। गोरखपुरस्थगीताप्रेसतः पं० रामनारायणशर्माणः पाण्डेया व्याकरणसाहित्यशास्त्रिणः पं० मलहूरामशर्माणो व्याकरणाचार्याः च समुपस्थिता अभूवन्। प्रथमदिने मङ्गलाचरणानन्तरं सभापतिनिर्वाचनम्, स्वागताध्यक्षाणां स्थानीयविद्याधर्मसञ्जीवनीसंस्कृतपाठशालायाः प्रधानाध्यापकानां पं० मुनिवरमिश्राणां व्याकरणशास्त्राचार्याणां स्वागतभाषणं कतिपयविदुषां व्याख्यानानि च जातानि। द्वितीयदिने च मङ्गलाचरणानन्तरं सभापतिमहोदयानां महत्त्वपूर्णं सुमधुरं गद्य-पद्यात्मकं भाषणमभूत्। ततः परं कवितापाठः अन्त्याक्षरी च विहिता। प्रस्तावस्वीकृत्यनन्तरं धन्यवादप्रदानपुरस्सरमान्ते सभाविसर्जनं कृतम्। निम्नलिखिता महत्त्वपूर्णाः प्रस्तावाः सर्वसम्मत्या स्वीकृताः।

(क) कस्यापि देशस्य संस्कृतिरक्षा तद्देशीयभाषारक्षणादेव भवतीति सर्वसम्मतसिद्धान्तानुसारमिदं सम्मेलनम् अरबीफारसीशब्दबाहुल्यमादाय प्रवर्त्यमानाया हिन्दुस्तानीति नामिकाया नवीनभाषाया विरोधं करोति हिन्दीभाषायाश्च प्रचारमिच्छति।

(ख) सम्मेलनमिदं प्रान्तीयशिक्षामन्त्रिणोऽन्यानपि शिक्षाधिकारिणः सादरं साग्रहञ्चानुरुणद्धि यत्तैः भारतीयानुपमसम्पत्तिभूतायाः सुरभारत्याः संरक्षणे दृष्टिकोणे निक्षिप्य पाठशालासु दीयमानसहायताया वृद्धिर्विधीयताम्।

(ग) सम्मेलनमिदं हाईस्कूलादिषु आङ्गलशिक्षासंस्थासु संस्कृतोपाधिपरीक्षोत्तीर्णानां संस्कृतपण्डितानामेवाध्ययनपदे नियुक्तिं समीचीनां मनुते।

(घ) सम्मेलनमिदं देवरियानगरे संस्कृतपुस्तकालयस्य नितरामावश्यकतामनुभवति। तदर्थं पञ्च पुरुषा नियोजिता ये पुस्तकालयस्य कृते कार्यं करिष्यन्ति।

एवमन्येऽपि केचित् प्रस्तावाः स्वीकृतिं नीताः। आगामिवर्षस्य च कृते निम्नलिखिताः पदाधिकारिणो निर्वाचिताः।

पं० मुनिवरमिश्राः व्याकरणाचार्याः देवरिया (सभापतिः)
" देवशरणमिश्राः " सलेमपुर (उपसभापतिः)
" सरयूप्रसादपाण्डेयाः एम० ए० साहित्यशास्त्रिणः देवरिया (मन्त्रिणः)
" अमरनाथ शर्माणः व्याकरण साहित्यशास्त्रिणः " (उपमन्त्रिणः)
" श्रीह द्विवेदिनः व्याकरणशास्त्रिणः " "
" रामाज्ञा चतुर्वेदाः व्याकरणाचार्याः " (कोषाध्यक्षाः)
" सरयूप्रसादमिश्राः एम० ए० साहित्याचार्याः " (आयव्ययनिरीक्षकाः)

अस्य सम्मेलनस्य संयोजका अ० भा० संस्कृत साहित्यसम्मेलन प्रचारमन्त्रिणो वासुदेवद्विवेदि "विनीत" साहित्याचार्या आसन्। सम्मेलनमिदं अ० भा० सं० सा० सम्मेलनस्य शाखारूपेण स्थास्यति। देवरिया, हाटा, पड़रौना इति तहसील-त्रितयेनास्य सम्बन्धः स्थास्यति।

सम्वाददाता।

---

## 'विदुषः स्वर्गाधिवासः'

जामनगरनिवासिनां 'महामहोपाध्याय' पं० श्री हाथी भाईशास्त्रि-महोदयानामशीतिवर्षावस्थायां कैवल्योपलब्धिर्जाता। (कदा?) विद्व-द्रत्नानामेतेषामवसानेन संस्कृत समाजस्य महती हानिरुत्पन्ना। हन्त!!! अनिर्वाच्या बुभुक्षाऽनिवृत्तिः कालस्य। एतदीयं समस्तं = जीवनं संस्कृतसमाजस्य सुरसरस्वत्याश्च समुन्नतौ सेवायाञ्च निर्व्यूढमिति तद्विदां प्रत्यक्षम्। महानुभावानां तेषां वैदुष्यप्रकर्ष-प्रतिभापरिस्पन्द-विषये पुनरवसरे कदाचिद्विशिष्य निरूपयिष्यामि।

साम्प्रतं, शोकसन्तप्तहृदा तदात्मनः शाश्वतीं शान्तिं श्रीविश्वेशाद-भ्यर्थयन् तत् कुटुम्बविपत्तौ च समदुःखितां प्रथयन् विरमामि।

❀ ❀ ❀ ❀ ❀ ❀

ता० २१-३-३९ भौमवासरे मिश्रपोखरास्थित हरिहराश्रमे काशिक-गुर्जरसंस्कृतच्छात्रैः कृतायां शोकसभायामुपस्थितसज्जनैः स्वर्गीय महामहोपाध्यायानां गुणानुवादो विहितः। स्वीकृतश्चैकः शोकावेदकः प्रस्तावः॥

निवेदयति—

'शास्त्री' प्राणजीवनः बी० जोशी, काव्यतीर्थः।
'साहित्याचार्य'—श्रेणिस्थः, काशी।

## श्रीकाशीपण्डित सभायाः

### पञ्चाशत्तमं महाधिवेशनम्

फाल्गुन कृष्णप्रतिपदि वादनद्वये श्रीमारवाड़ीमहाविद्यालये काशीस्थ प्रसिद्ध-विदुषां महामहाध्यापकानां पण्डित प्रवर श्रीपञ्चाननतर्क रत्नमहोदयानां साभापत्ये महता समारम्भेण सुसम्पन्नम्। तत्र प्रथमम् मङ्गलगानानन्तरम् सभासञ्चालकानां सर्व-तन्त्रस्वतन्त्र पं० पद्मनाभ शास्त्रि महोदयानां समुपस्थितविदुषां स्वागताभिनन्दपूर्वकं गम्भीरमोजस्वि भाषणमभूत्। ततः श्रीमतां पण्डित श्रीगोपालशास्त्रिनेने महोदयानां सभाविवरणात्मकं भाषणं समजनि। तदनन्तरं तैरेव गतद्वायने दिवङ्गतानां काशीस्थ-प्रसिद्ध विदुषां शोक प्रस्तावः प्रस्तुतः। सभापतिमहोदयाश्च निजस्वास्थ्यवैगुण्यात् स्वस्थाने पं० पूर्णचन्द्राचार्यमहोदयानुपवेश्य प्रस्थिताः। तदानीमेव ऋग्वेदस्य सायणभाष्यानुसारं हिन्दीभाष्यं कुर्वद्भ्यः पं० रामगोविन्द शास्त्रि महोदयेभ्यो धन्यवादवितरणमपि सर्वसम्मत्या सञ्जातम्—तस्मिन्नेवावसरे मण्डलीश्वरमहोदयाः श्रीजयेन्द्रपुरी स्वामिवर्य्याः सभास्थानमलङ्कृतवन्तः। तेषां स्वागते हरहर महादेव शब्दैरनुष्ठिते पं० मदनमोहनशास्त्रिणां सुमधुरं सदाचारसमर्थकं व्याख्यान-मभूत्। अधिवेशनप्रारम्भे काशीस्थेभ्यः परमप्रसिद्धेभ्यो विद्वद्भ्यः श्री पं० राधाकान्तझामहोदयेभ्यः 'पण्डितराज' इत्युपाधिः श्री काशी पण्डितसभातः सर्व-सम्मत्या समर्पितोऽभूत्। अवसाने च श्रीमतां मण्डलीश्वरमहोदयानां धर्मोप-देशानन्तरम् सभायाः प्रधानमन्त्रिणः महामहाध्यापकाः श्रीगोपालशास्त्रिणो दर्शन-केशरिणः बालकानां सदाचारविवृद्धये बालशिक्षालयस्थापनस्यावश्यकतां विधाय समागतेभ्यः सभ्येभ्यो धर्माचार्य्येभ्यः सभापतिभ्यश्च धन्यवादं वितरन्तः सभां विसर्जितवन्तः।

श्रीगौरीनाथपाठकः ( साहित्याचार्यः )
( मन्त्री काशीपण्डितसभा )

### स्वीकृत प्रस्तावाः—

१—श्रीकाशीपण्डितसभायाः पञ्चाशत्तमं वार्षिकाधिवेशनमिदं सर्वतः प्रथमं प्रस्तौति यद् म० म० श्रीमदन्नदाचरण तर्कचूड़ामणीनां, म० म० श्रीमुकुन्द झा बक्शी महोदयानां, म० म० पण्डित श्रीपद्मनाथशर्म-भट्टाचार्य्यमहोदयानां सर्वतन्त्र स्वतंत्र श्रीकाशीनाथशास्त्रिणां, ज्योतिषाचार्य श्रीरामयत्न ओझा महाशयानाम् अन्येषां च तत्तत्प्रान्तनिवासिनां सुधी धौरेयाणां वियोगेन सातिशयं दुःखमनुभवत् तेषां कैवल्यपदावाप्तये श्रीविश्वनाथचरणसरसीरुहेषु सादरमभ्यर्थयतीति।

प्रस्तावकः—पं० गोपालशास्त्रीनेने
समर्थकः—पं० विन्ध्येश्वरीप्रसाद शास्त्री मिश्रः

२—साम्प्रतमनपेक्षितधर्ममर्यादानां पण्डितत्वेन प्रसिद्धानामपि ब्राह्मणानां ऐहिकार्थकाममात्राकाङ्क्षया काश्यामेव पृथक् पृथक् संहतिरवलोक्यते। तदेतस्यामापदि प्राचीनतमया श्रीकाशीपण्डितसभया प्रस्तूयते, यत् तत्र यो हि चिरन्तनाचार-परिगृहीत श्रौत-स्मार्त पौराणिकमर्यादामतिक्रम्य अपारोक्ष्येण पारोक्ष्येण वा वर्तिष्यते, तस्य बहिष्कारमुद्घोषयिष्यति सभेयं स्वविशेषाधिवेशनमुखेनेति।

प्रस्तावकः—पं० श्रीपद्मनाभ शास्त्रिमहोदयः।
समर्थकः—श्री पं० शिवकुमारशास्त्रि महोदयः।

३—श्रीकाशी पण्डितसभायाः पञ्चाशत्तममिदं महाधिवेशनं राजपुतानाशिक्षा-वोर्ड अजमेरसदस्यानां स्वस्कूलविभागे कालेज विभागे च संस्कृतभाषाया हिन्दी-भाषायाश्चाध्यापनाय संस्कृतशास्त्रिपरीक्षादिमान्योपाधिमतां तथा हिन्दीरत्नेत्युपा-धिमतां विदुषां समुपेक्षया केवलं तद्विषययोः वि० ए० एम्० ए० परीक्षोत्तीर्णानामेवा-वसरप्रदानार्थं कृते निर्णये स्वीयं प्रबलं विरोधमुद्घोषयति। तदधिकारिणश्चाधुना साग्रहमनुरुन्धे यदतिशीघ्रमेव पुनर्निजसमित्यधिवेशनं विधाय निर्णयमिदं परिवर्तयन्तु तत्स्थाने संस्कृतपरीक्षोत्तीर्णानां हिन्दीपरीक्षोत्तीर्णानामेव नियुक्तिकृते निर्णयं दद्यन्तु चेति।

प्रस्तावकः—श्री पं० सरयूप्रसादशास्त्री ( द्विजेन्द्रः )
समर्थकः—श्रीदेवीनारायण एड्वोकेट विद्यासागरः।

## हिन्दुधर्मोपदेशिका।

पुस्तकमिदं हिन्दी भाषायां लिखितं विद्यते। सनातनधर्म प्रवेशिकेत्यपरमप्यस्या नाम लिखितं दृश्यते। पुस्तकेऽस्मिन् सनातनधर्मस्य सर्वोऽपि विषयः सन्निवेशितो दृश्यते। वेदादारभ्य पुराणं यावत् सर्वेषामपि सनातनधर्मे प्रामाण्येन संगृहीतानां ग्रन्थानां विषयस्य संक्षेपतो ज्ञातव्यतया सन्निवेशो लेखकस्य प्रौढं पाण्डित्यं प्रकाशयन् पाठकानां मनोयोगं सहसैवावर्जयति। अत्र सनातनधर्मस्थस्य सर्वस्यापि अवतार-तत्त्व—जीवविज्ञान-वर्णाश्रमधर्म-श्राद्धतत्त्व-पञ्चमहायज्ञविधान-सदाचार-नित्यकर्तव्य -सामान्य-विशेषादि धार्मिकविषयस्य सम्यक् प्रतिपादनं सरलसंक्षिप्त हिन्दीभाषया विद्यते। येन स्वल्पप्रतिभा अल्पवयस्का बालका अनायासेनैव हृदयङ्गमं कर्तु-मर्हन्ति। हिन्दीभाषायाःप्रसिद्ध विदुषा श्रीजगन्नाथप्रसाद चतुर्वेदिनाऽपि प्रशंसितमिदं पुस्तकम्। किंबहुना सर्वेषामपि सनातनधर्म-रहस्य-जिज्ञासूनां पुस्तकमिदं सुग्राह्यं विद्यते। विशेषतः प्रथमाध्ययनार्थिनान्तु अवश्यमिदं पुस्तकं पठितव्यम् विद्यते। बाल्यकाले सभासक्तो धार्मिकः शोभनः संस्कार आजीवनं फलदो भवतीति विद्यार्थिभिरवश्यमिदं पुस्तकं पठनीयम्। अस्य पुस्तकस्य लेखकः सनातनधर्मस्य प्रसिद्धो महामहोपदेशको

महामहाध्यापकः श्रीमान् पं० श्री गोपालशास्त्री दर्शनकेशरी महोदयः, प्रकाशकः श्रीरघुनाथ त्रिवेदी धर्मशास्त्री सञ्चालकः श्रीपराशरब्रह्मचर्याश्रमस्य वलियास्थस्य विद्यते। मूल्यम् आणकषट्कमेवास्ति। पुस्तकं मास्तृणमञ्जुलकर्गजेपृष्ठेषु प्रकाशितमपि संशोधनादिदोषयुक्तमस्ति। सूर्य्योदयकार्य्यालय जगतगंज बनारसतोऽपि उपलब्धुं पार्य्यते। त्वरयैव विद्यार्थिभिर्ग्रहीतुं यत्नः करणीयः। अखिलभारतवर्षीयधार्मिकाध्यात्मिक विश्वविद्यालयीय प्रथमपरीक्षायां पाठ्यतयापि पुस्तकमिदं निर्धारितं विद्यते। एतेनापि पुस्तकस्यास्य सर्वोपयोगिता स्फुटमेव प्रतीयत इति वयं सर्वान् हिन्दुगृहस्थान् साग्रहमनुरुन्ध्मः पुस्तकमिदम् पठितुं निजबालकांश्च पाठयितुमिति।

(समालोचकाः)

प्राप्ति-स्थानम् श्रीदेवव्रतशास्त्री, नं० ८ ओल्डघुसरी रोड, सलकिया, हवड़ा

## "प्रताप-विजयः"

लेखकः—साहित्यरत्न श्रीदीशदत्तशास्त्री 'श्रीशः'

प्रकाशकः—श्रीमाधव प्रसादमिश्रः ११ रानीभवानी की गली काशी मूल्यम्—॥)

अस्य ग्रन्थस्य लेखकः गीर्वाणवाणीप्रणयिनां चिरपरिचितो भारत्या एकलः सुतः श्रीमदीशदत्तपाण्डेयः श्रीशः शास्त्री, साहित्यरत्नम्। यस्य हिन्दी-संस्कृत-कविताभिः जनाः प्रफुल्लमानसा भवन्ति, कवितापाठं च श्रावं श्रावमपि नराः अधिकं श्रोतुं वाञ्छन्ति, तस्यैव 'श्रीश' महोदयस्य लेखन्या, लिखितं वीर-रसाप्लावितमिदं नव-काव्यं कस्य मनो न मोदयति। अस्य काव्यस्य ओजःपूर्णभाषां, स्वाभाविकीं वर्णनशैलीम् अतिमनोहरां शब्दयोजनां, रम्यातिरम्यमन्त्यानुप्रासं, वीरजनाह्लादकारिणीं कवितां, कातरहृदयेऽपि स्फूर्तिं प्रदायिनीं रचनां; दर्शं दर्शं बारम्बारं पठित्वाऽपि मनोऽस्य पठनान्न विरमति। कविमहोदयैः स्वदेशभक्तिः, धर्मप्रियता, प्रणपालनं, स्वमानरक्षणं, स्वगौरवरक्षार्थं कष्टादपि कष्टसहनं जन्मभूमेर्महत्वमेवं रूपेण वर्णितमस्मिन् काव्ये द्रष्टव्यमेव।

आरम्भ एव कविः, सरस्वतीस्तवं कुर्वन्नाह—

केषांचिदस्तु कमला कमलायताक्षी,<br>
केषां च शम्भुसुमुखी सुमुखीषु मान्या।<br>
अस्मत्कृते च जननी जननी त्वमेका,<br>
सर्वं विहाय भवतीं भुवि ये यजन्ति।

पश्यत्वयं कविः स्वमनोभावं केन रूपेण जनन्या समक्षे निदधाति, एवमादित आरभ्य समाप्तिपर्यन्तं तस्य वर्णनशैली कदापि नहि त्रुटिता। प्रताप प्रतिज्ञायां कीदृशीं प्रतिज्ञां करोति—

चिन्ता कलत्र सुतयोर्नतयो र्विधाय,
याचेभिलाषणमहो जगदीश्वराय।
मेवाड़मण्डलबलोन्नयनं बलं वा,
म्लेच्छौघसैन्यशरणं, मरणं, रणं वा।

हल्दीघाटी परिचये च—

आस्ते प्रताप इह भारत भूमिवीरः,
हे पान्थ! हिन्दुरसि चेत्सकृदानतः स्याः।
सम्प्रत्यपि प्रतिवदन्निव किन्तु धीरं—
धीरं स्वधीरयति धीरजनं समीरः॥

× × ×

मा कातराः! स्पृशत मां प्रियपारतन्त्र्याः!
अद्यापि यन्न विहिता जननी स्वतन्त्रा।
यन्त्रेदमेव गदतीव ततिस्तरूणां
शाखा कदम्वकृतमर्मरमातनोति॥

एवं सम्पूर्णकाव्ये प्रतिश्लोकं कवेः स्वदेशाभिमानः, देशभक्तिः ओजः, प्रसाद्-गुणः, अलङ्कारो रसश्च वरीवर्त्ति। पौनः पुन्येन पठनेऽपि न पठनाकाँक्षा शान्ति-मधिगच्छति। एतज्ज्ञात्वा समुल्लसति मनो यन्निखिल भारतीयसंस्कृतछात्रसम्मे-लनीय पुस्तकप्रतियोगितायामपि काव्यमेतत्प्रथमश्रेण्यां समागतं तत्प्रणेत्रे ५१) पुरस्कारश्च प्रदत्तः।

—श्रीनरसिंहपाण्डेयः पथिकः, शास्त्री।



## अखिल भारतवर्षीय-क्रौञ्चद्वीपीयब्राह्मणमहासभा।

सुरहातीर्थस्थाने (गुरुआ, गया) रवौ सोमे च नवम्वरमासस्य १३-१४ तिथौ तदनुसारेण मार्गशीर्षषष्ठीसप्तम्योः क्रौञ्चद्वीपीयब्राह्मणानामेकं वृहत्सम्मेलनं सोहसराये पण्डित गौरीशङ्करमिश्रोपाध्यायानां सभापतित्वे ससमारोहं सम्पन्नभूत्। ब्राह्मणमहानुभावाः स्वेष्टमित्रैः सह मिलिताः भागं जगृहुः। अत्र महत्यो जनसंख्याः समायाताः। परञ्च तत्रस्थ गुरुआ संस्कृतपाठशालीयछात्राणां सुप्रबन्धेन निखिल-कार्य्यकलापं सुष्ठुतया सम्पन्नम्।

उपस्थितासु मान्यव्यक्तिषु माननीय व्याख्यानदातॄणां "श्री पं० लक्ष्मीनारायण-पाठकः, काशीनाथशास्त्री पं० कपिलदेवनन्दनपाण्डेयः श्रीकृष्णलालशर्म्मा तथा पं० प्रयागदत्तशर्म्मा" इत्येतेषां नामानि विशेषतयोल्लेखयोग्यानि सन्ति। अध्यक्ष-

महोदयाः भाषणं कुर्वन्तः संस्कृतशिक्षापद्धतौ समुचितसुधारस्य आवश्यकतां प्रदर्शयन्तः तस्या उन्नतेरुपायं कथयामासुः।

क्रौञ्चद्वीपीयब्राह्मणसभाया अग्रिमवर्षस्य पदाधिकारिणां कार्यकर्तॄणाञ्च निर्वाचनमभूत्। तद्यथा सभापति श्री पं० गौरीशङ्करमिश्रः सोहसरायवास्तव्यः उपसभापतिः श्री पं० प्रयागदत्तशर्मा मंगरावां वास्तव्यः मन्त्री श्री पं० काशीनाथशास्त्री पटनासिटी, उपमन्त्री श्री पं० कपिलदेवनन्दनपाण्डेयः, कोषाध्यक्षः श्री पं० हरिहरशर्म्मा गुरुआ। मन्त्री कपिलदेवनन्दनपाण्डेयः व्याकरणतीर्थः दणवां, पुनपुन पटना।

## संस्कृतवादप्रतिवादमहोत्सवः।

श्रीस्याद्वाददिगम्बरजैनमहाविद्यालये माघकृष्णप्रतिपत्तिथौ भृगुवासरे (६।१।३९) वयःपूर्या परित्यक्तवाराणसेयराजकीय-संस्कृतमहाविद्यालयव्याकरणाध्यापकपदानां श्रीमतां पण्डितहरिनारायण—(तिवारी) शास्त्रिणां, प्राप्तपूर्वाध्ययनप्रचुरप्रतिष्ठितानामधुनाऽऽत्मसमाधिनिष्ठानां श्रीमतां सुब्रह्मण्यशास्त्रिणां, हिन्दुविश्वविद्यालयस्य व्याकरणाध्यापकानां श्रीमतां पण्डितराजनारायणशास्त्रिणाञ्च निर्णेतृत्वे "राजाज्ञा पालनीया शास्त्राज्ञा वा" इति विषयमवलम्ब्य श्रीरामचन्द्रशर्म—(वीर) कृतमङ्गलाचरणपुरस्सरं महीयसा समारोहेण वार्षिकवादप्रतिवादमहोत्सवः सानन्दमजनिष्ट।

उत्सवेऽस्मिन् स्थानीय-दशसंस्थानां प्रतिभावन्तोऽन्तेवासिनः समगंसत। तत्र शास्त्राज्ञापक्षे गोयनकाविद्यालयस्य वेङ्कटरमणनामाऽन्तेवासी स्वर्णमयपदकरूपप्रथमपारितोषिकेण, बिडलाविद्यालयस्य रामजीमिश्रः, श्रीचन्द्रविद्यालयस्य ब्रह्मदत्तमिश्रश्च रजतपदात्मकेन द्वितीयपारितोषिकेण पर्यतोषि। राजाज्ञापक्षे शंकराचार्यपाठशालाया नारायणनामाऽन्तेवासी द्राविडः स्वर्णमयपदकरूपेण प्रथमपारितोषिकेण, साङ्गवेदविद्यालयस्य विश्वनाथशर्माऽन्तेवासी रजतपदकरूपेण द्वितीयपारितोषिकेण पर्यतोषि। रजतप्रतिमारूपेण विजयचिन्हेन शंकराचार्यपाठशाला समतोषि। वाराणसेयराजकीयसंस्कृतमहाविद्यालयस्य पुराणशास्त्राध्यापकाः श्रीमन्तोऽनन्तशास्त्रिणः (फड़के), विश्वविद्यालयस्य साहित्याध्यापकाः श्रीमहादेवशास्त्रिणः, रायबहादुरोपाधिजुषो भूतपूर्वन्यायाधीशाः श्रीवैजनाथदासाः, वाकीलाः श्रीगनपतरायाः होशिङ्ग इत्यादयोऽनेके प्रथितनामानो विद्वांसः स्वोपस्थित्या महोत्सवमिमाप्यायितवन्त आसन्।

हर्षचन्द्रः (B. A. L L. B.)

अध्यक्षः स्या० वि० काशी।



## साक्षरतादिवसः ।

दिवस एष ममास्ति तु हर्षदो
यदिह भाति निरक्षरतोद्यमः ।
इयमहो मम भारत-सत्प्रभा
प्रतिजनं लसतां शुभशान्तिदा ॥१॥

सुदृढमत्र करोमि महाप्रणम्
सपदि सम्प्रति गच्छति हायने ।
अतिनिरक्षरमत्र जनत्रयम्
द्रुततरं विदधेऽतिसुशिक्षितम् ॥२॥

कुरुत यूयमपीत्थमिमं प्रणं
यदि न शक्तिरिह क्रियतां तदा ।
धनसुदानमये भवतां यतो
भवतु भारत-साक्षरता शुभा ॥३॥

प्रतिजनं यदि भाष्यति शिक्षणम्
प्रतिजनं यदि बुद्धिविकासनम् ।
प्रतिजनं यदि बोध-विवर्धनं
द्रुततरं भविताऽपरतंत्रता ॥४॥

अतिपरिश्रमि-शिक्षण-मंत्रिणा
मतिदयोदितशिक्षणवल्लरी ।
प्रतिजनं वितता फलदा तथा
विदधतां मम देश-समुन्नतिम् ॥५॥

सुकृपया जगदीश्वरपादयोः
प्रतिपलं लभतामयमुन्नतिम् ।
द्रुततरं बहुशिक्षणसज्जितो
भुवि विभातु विभान्वितभारतः ॥६॥

अस्त्यर्थमस्तु भुवि भारतभाप्रकाशः
सच्छिक्षणाश्रितजनाश्च मुदं लभंताम् ।
स्वातंत्र्यपूर्णलसितो मम भारतोऽयं
भूयात्सदेच्छति हृदा गिरिजाप्रसादः ॥७॥

गिरिजाप्रसादशर्मा,
[ ई० आई० आर० इण्डियन ब्वायज स्कूल ]
मोगलसराय ( बनारस )

---

## संस्कृताध्यापन-प्रश्नावलिः ।

लेखकः—हुपरीकरोपाह्वः श्रीपादापरनामकश्रीबालशास्त्रितनूजो गणेशशर्मा,
एम्. ए., बी. टी. ।
संस्कृतप्राध्यापकः—'श्रीमहाराणी ताराबाई टीचर्स कॉलेज, कोल्हापूर.'

अयि गीर्वाणवागनुरागिणो महाभागाः ! नैतदविदितं भवतां यदखिलेऽप्यस्मिन् भारतवर्षे आङ्ग्लपाठशालास्वध्येतृभिर्बालैरधीयमानेषु विविधविषयेषु 'संस्कृतम्' इत्यन्ततमो विषयः । आङ्ग्लपाठशालासु प्रायश्चतुर्थश्रेणीतः संस्कृताध्यापनमारभ्यते । प्रतिसप्ताहं चत्वारिंशन्निमेषपरिमिताश्चत्वारः पञ्च वा कालांशा (Periods) लभ्यन्ते संस्कृताध्यापनाय । एतेभ्योऽनध्यायदिनानि व्यवकलनीयानि । एवं संस्कृतभाषाधिगमाय न पर्याप्तः कालो लभ्यते छात्रैः । अपि चेदानीं न केवलं विप्राः किन्त्वविप्रा अपि संस्कृताध्ययनं कर्तुमीहन्ते । गीर्वाणभाषा च सर्वेषामपि भारतीयानामनर्घ्यविचाररत्नानामाकरः, आचारधर्माणामधिष्ठानं, नानाशास्त्रविद्याकलाकलापानां महोदधिः । एतस्या गीर्वाणवाङ्मयनिलीनायाः सुविचाराचारात्मिकायाः संस्कृतेः परित्राणसमुन्नत्यर्थं गीर्वाणभाषाज्ञानं तदधिजिगांसुभ्योऽशेषच्छात्रेभ्यो वितरणीयमित्यपरिहार्यं सञ्जातम् । तस्मात्सुकुमारमतीनां सकलजातीयकुमाराणां गीर्वाणवाण्यां सुगमप्रचाराय सर्वैरपि प्रज्ञावद्भिर्निरतिशयप्रेमास्पदीभूतायाः सुरभारत्या अध्यापने कापि रुचिरोपयुक्ता पद्धतिराविष्करणीया समाश्रयणीया चेत्यत्र न कोऽपि सन्देहः । ये संस्कृताध्ययनमात्रेण शास्त्रेष्वसाधारणनैपुण्यमधिजिगमिषन्ति, न तेषां कृतेऽयं विमर्शः । ये तु गीर्वाणभारत्यामन्तर्हितं महाकाव्यनाटककथादिप्रबन्धानां सौन्दर्यं मूलास्वादनेनावगन्तुमिच्छन्ति, तेषां सामान्यच्छात्राणां कृतेऽयं प्रस्तावः । अधुना देववाचः सार्वत्रिकप्रचारार्थं विशिष्टशास्त्राधीतेरपेक्षया काव्यनाटकादिवाङ्मयस्य तद्गतभाषास्व-

ण्याश्चाध्ययनमेव हिततरं भवेदिति सुनिर्णीतम्। 'रण्डागीतानि काव्यानि' इति वदतां पण्डितप्रकाण्डानां कालस्तु समाप्तकल्पः, यतो विशिष्टशास्त्रनैपुण्यं समासादयन्तो जना यत्र कुत्रापि क्वाचित्का एव। अत्र तु संस्कृतभाषाजिज्ञासूनामाङ्ग्लविद्यालयीनच्छात्राणामध्यापने ये विवाद्याः प्रश्नाः समुद्भवन्ति तेभ्यः कतिचित् संस्कृतानुरागिणां सविधे विन्यस्यन्ते समीक्षार्थं सम्यङ्निर्णयाय च। प्रेक्षावन्तोऽसन्दिग्धप्रत्युत्तरदानेनानुगृह्णीयुरिति बलवदाशास्यते। प्रत्युत्तराणि संस्कृतभाषयाऽऽङ्ग्लभाषया महाराष्ट्रभाषया वा देयानि।

## सामान्यप्रश्नाः।

१ (अ) बालानां कृते या संस्कृताध्यापनपद्धतिः पुरातनकालादारभ्याद्य यावद् गीर्वाणभाषापण्डितैः समाश्रियते च, तस्याः स्वरूपं कीदृक्, किं च तद्गतविषयाणामानुपूर्व्यम्?।

(आ) उदीच्यभारतीयानां दक्षिणात्यानां च पद्धत्योः के भेदसाम्ये?

(इ) गीर्वाणभाषापण्डितानामध्यापनप्रणाल्यां के गुणा दोषा वा? सा प्रणाल्याङ्ग्लपाठशालास्वनुस्त्रियमाणा चेत् किं परिवर्तनमिष्यते?

२ त्रिदिवं गतानां डॉ० भाण्डारकरमहोदयानां संस्कृताध्यापनपरिपाटी बालानां सुखबोधाय कियन्मात्रं गुणावहा?।

३ इदानीं पाश्चात्यदेशेषु कैश्चिदध्यापकैः संस्कृततुल्यानां 'ग्रीकूलॅटिन्' इत्येतासां प्रविरलप्रचारभाषाणामध्यापने तां तामेव भाषामाश्रित्य संवादपद्धतिः प्रयुज्यते। यस्याः कस्या अपि भाषाया अध्ययनाध्यापनविषये तदधिष्ठानभूतानि कानिचिद् व्यापकतत्वानि समवलम्ब्यमानानि वर्तन्त इति सन्दृश्य तैस्तानि बालमनोविज्ञानानुसारेण (Child psychology) समुद्भावितानि सङ्कलीकृतानि च। तेषां तत्त्वानां तस्याः संवादपद्धत्याश्च (Conversational method) संस्कृताध्यापने कियानंशो ग्राह्यः?।

४ आङ्ग्लतृतीयश्रेणीतः संस्कृताध्ययनारम्भे क्रियमाणे कः प्रत्यवायः? तथा कृते च उपक्रमाध्यापनं कया रीत्या कार्यम्?

## व्याकरणम्।

५ (अ) किं भाषामुखेन व्याकरणं पाठनीयं वा व्याकरणमुखेन भाषा? कस्मात् कारणाच्च?

(आ) सामान्यच्छात्राणां संस्कृतवाङ्मयप्रवेशाय कियन्मात्रं व्याकरणज्ञानमपेक्ष्यते, के व्याकरणविभागाश्चात्यावश्यकाः?

(इ) सौकर्योपयोगदृष्ट्या व्याकरणविभागानामध्यापने कोऽनुक्रमः समीचीनः स्यात्?

(ई) शब्दरूपावलिसमासचक्रयोः प्रस्तावः कदा कार्यः ?

(उ) अध्यापकेन सुकोमलमतिभिश्छात्रैः किं व्याकरणनियमानुरोधेन रूपसिद्धिः कारयितव्या, वा तैः पुस्तकस्थानि सिद्धरूपाण्येव कण्ठे करणीयानि ?

(ऊ) संस्कृताध्ययनाय मातृभाषाव्याकरणज्ञानस्य कियत्यपेक्षा ?

## अनुवादः।

( अ ) अपि संस्कृतभाषाध्यापनस्य 'मातृभाषयानुवाद' इत्येकमेव साधनम् ? अन्यान्यपि साधनानि स्युश्चेत्कानि तानि ?।

( आ ) संस्कृतस्य मातृभाषयानुवादः केषु केषु स्थलेषु हितमावहेत् ?।

( इ ) मातृभाषानुवादस्य का पद्धतिः श्रेयसी, संस्कृतशब्दानुसारिणी मातृभाषासरण्यनुसारिणी वा ? उभयोरप्युपयोगो यथासम्भवं कुत्र कथं चेष्टः ?।

( ई ) मातृभाषाया आङ्ग्लभाषाया वा संस्कृतेऽनुवादः सामान्यच्छात्राणां कियत्परिमाणेनोपकारकः ? उपकारकः स्याच्चेत्स आङ्ग्लविद्यालयेषु कतमस्यां श्रेण्यामारब्धव्यः कया रीत्या चाध्यापयितव्यः ?।

## वाङ्मयाभ्यासः।

७ ( अ ) उपक्रमावस्थायां किं स्वरूपं वाङ्मयं छात्रैरभ्यसनीयम्, किं विश्लिष्टवाक्यानि (Disconnected sentences) वा कथासंवादवर्णनात्मकाः संश्लिष्टपरिच्छेदाः (Connected passages) ? किमर्थं च ?।

( आ ) संस्कृतवाङ्मयं केन भाषासाधनेन (Medium) अध्यापयितव्यम्, संस्कृतभाषया मातृभाषया वा ?

( इ ) वाङ्मयाध्यापनेऽध्यापकेन ( १ ) प्रश्नप्रणाली (Questioning), ( २ ) अनुवादप्रणाली (Translation), ( ३ ) कथनप्रणाली (Telling) चेत्येताः कुत्र कथं वा प्रयोज्याः ? उभयभाषोपयोगः कर्तव्यश्चेत्कुत्र संस्कृतं प्रयोज्यं कुत्र च मातृभाषा ?।

(ई) कथाकाव्यसंवादवर्णनादीनामध्यापनं प्रत्येकं कया विभिन्नपरिपाट्या कार्यम् ?

( उ ) वाङ्मयाध्यापने प्रायः कः कल्पोऽनुसर्तव्योऽध्यापकेन, कया दृष्ट्या च ?

( ऊ ) गीर्वाणवाङ्मयगताः पर्यायशब्दाः ( Synonyms ), भिन्नार्थशब्दाः (Homonyms), वाक्सम्प्रदायाश्च (Idioms) कया पद्धत्याध्येतव्याः ? अमरकोशप्रस्तावः कदा कथं च कार्यः ?।

## पाठ्यपुस्तकानि।

८ ( अ ) बालानां सुखबोधाय समीचीनानि संस्कृतपाठ्यपुस्तकानि कृच्छ्रेणैव

लभ्यन्ते । नूतनेषु विरचयितव्येषु कानि तत्त्वानि लेखकैरात्मनः पुरः संस्थाप्यानि ? पुस्तकगतपाठानां क्रमविषये स्थूलतया किं तत्त्वमाश्रयणीयम् ? ।

( आ ) बालानां पाठ्यपुस्तकेषु कीदृशी भाषा के च विषया उपयोक्तव्याः ? अभिजातभाषायाः (Classical language) प्रस्तावस्तेषु कियन्मात्रं शक्यः ? अभिजातग्रन्थानामभ्यासः कतमस्यां श्रेण्यां कतमे वयसि वा साध्यः ?

( इ ) संस्कृतवाङ्मयस्थाः कथाकाव्यनाटकादयो विविधप्रकारा बालानां पाठ्यपुस्तकेषु श्रेण्यनुरोधेन यथाक्रमं कथं संनिवेश्याः ?

(ई) पाठ्यपुस्तकेषु व्याकरणविभागाः कथं संविभाज्याः कया रीत्या च लेखनीयाः ?

( उ ) आङ्ग्लभाषायां सूक्ष्माभ्यासार्हेभ्यः पाठ्यपुस्तकेभ्योऽतिरिक्तानि बालोचितानि बहूनि स्थूलवाचनपुस्तकानि (Books for Rapid Reading) लभ्यन्ते । तादृशेषु संस्कृतभाषायां लेखितव्येषु कानि तत्त्वानि लेखकैरनुसर्तव्यानि ? ।

## सङ्कीर्णप्रश्नाः ।

९ 'अल्पारम्भः क्षेमकरः' इति न्यायात् कथावर्णनपत्रादिपरिच्छेदरूपेण प्रबन्धलेखनं छात्राणां कियद्धिताय भवेत् ? अयं विषय आङ्ग्लविद्यालयशिक्षाप्रणाल्यां कथं सन्निवेश्यः कया रीत्या चाध्याप्यः ? ।

१० वाङ्मयव्याकरणयोः के भागाः कण्ठस्थाः करणीया अकरणीया वा ? पाणिनीयसूत्राणामध्ययनं यथाप्रसङ्गमाङ्ग्लपाठशालासु कियन्मात्रं साध्यम् ?

११ आङ्ग्लविद्यालयेषु संस्कृतभाषायाः पाठ्यक्रमनिर्धारणे ( Curriculum construction ) का दृष्टिः समवलम्बनीया ? केषु विभागेषु च पाठ्यक्रमपरिवर्तनमिष्टम् ?

१२ लौकिककार्येषु संस्कृतज्ञानां संस्कृतवाग्व्यवहारः सुसाध्यो दुःसाध्यो वा ? दुःसाध्यश्चेत्केन कारणेन ? सुसाध्यश्चेत् कैरुपायैः ?

१३ आङ्ग्लमहाविद्यालयेषु प्रधानत्वेन संस्कृतमधीत्यापि विश्वविद्यालयोपाधिधारिणोऽध्यापका अध्यापनेऽन्यत्र वा संस्कृतभाषया सौकर्येण संभाषणादिव्यवहारं कर्तुं न पारयन्ति । तेषामध्यापने संस्कृतभाषाव्यवहार इष्टोऽनिष्टो वा ? इष्टश्चेदध्यापकैर्भाषाव्यवहारनैपुण्यं कथं सम्पाद्यम् ?

१४ संस्कृतशिक्षकाणां संस्कृतवाग्व्यवहारचमत्वाय महाविद्यालयीये संस्कृतपाठ्यक्रमे किं परिवर्तनमिष्यते ?

# समालोचनम् ।

विद्वद्वृत्तम्—भागद्वयम् कालीकुमारग्रन्थमालायाः प्रथमं पुष्पम्, लेखकः पण्डित कालीप्रसादशास्त्री, संस्कृतसम्पादकः । प्रथमभागस्य १) द्वितीयभागस्य मूल्यमेका मुद्रा । प्राप्तिस्थानं संस्कृतकार्यालय अयोध्या । पुस्तकेऽस्मिन् ब्रह्मा-विष्णुशिवप्रभृतिदेवानां प्राचीनकवीनां विदुषां च परिचयो वर्तते । लेखकस्य प्रयासः प्रशंसामर्हति । मुद्रणादिकं सर्वं मनोहरं दृश्यते । गीर्वाणभाषासमुन्नतिकामैः विशेषतः संस्कृताध्यायिभिश्च नूनं पठनीयमेतदिति ।

× × × ×

त्रिविल्वदलचम्पूः । रचयिता वि० सु० रामस्वामिशास्त्री, बि० ए० बि० एल० मधुरा निवासी ।

तीर्थयात्राप्रसङ्गेन मधुरानगरीतः प्रस्थितेन कविना वाराणसीवृन्द्रावन-मथुरा प्रयाग गयादितीर्थाणां तत्र स्थितानां विद्यालयानां, सुप्रसिद्धानां दर्शनीयानां स्थानानां च वर्णनं सुमधुरेण पाण्डित्यपूर्णेन काव्येन विरचितम् । अनेन पुस्तकेन भारतीय-प्राचीनतीर्थदर्शनाभिलाषिजनानां काव्यरसास्वादनेन समं तीर्थयात्रायां महत् साहाय्यं भविष्यतीति अस्माकं विश्वासः । अत्र मूल्यं लिखितं नास्ति । विदुषो लेखकस्य सन्निधौ पत्रप्रेषणेन सर्वमन्यत् ज्ञातं भविष्यति । तीर्थाटनं कुर्वद्भिरपि शास्त्रि-महानुभावैः यथासाध्यं परिश्रमं विधाय पुस्तकाकारेण परीणितमिति धन्यवादार्हा इमे । एतस्य त्रिदलचम्प्वामिधानस्य पुस्तकस्यान्तिमं पद्यमत्रोद्धरामः—

मीनाक्षीवरसुन्दरेश-कृपया काश्यादिदेशान् बहून्  
वार्धक्येऽपि मृशाशया समचरं पापक्षयार्थं मुदा ।  
काव्येऽस्मिन् ललिते त्रिविल्वदलमित्याख्यान्विते शोभने  
मत्तीर्थाटनवर्णनैकनिरते पूर्णं दलं चान्तिमम् ॥

× × × ×

गृह्यसूत्रम्—श्रीमन्महर्षि पारस्कराचार्यविरचितं माध्यन्दिनशाखीयम् । श्रीमता पण्डित वेणीरामशर्मणा साहित्यालङ्कारेण कृतं विवृतियुतम्; काशी हिन्दूविश्वविद्या-लयीय-धर्मविज्ञानविभागाध्यक्षेण पण्डित श्रीविद्याधरशर्मणा टिप्पण्यादिना संयोजितं संस्कृतञ्च । काशीस्थ 'संस्कृत बुकडिपो' कचौड़ीगली मास्टर खेलाड़ीलाल पुस्त-कालयाध्यक्षैः प्रकाशितम् प्राप्तिस्थानं एतदेव—मूल्यं १॥) रूप्यकमात्रम् ।

भारतवर्षे प्राचीनकाले यथा आसीत् कर्मकाण्डपद्धतेः प्रचारः तथाधुना न वर्तते । परीक्षोत्तरणपरायणमात्राः साम्प्रतिका विद्यार्थिबन्धवः शास्त्रान्तरेषु परीक्षा-

मुत्तीर्य यथा कथमपि स्वकीयजीविकानिर्वाहं कुर्वन्ति। किन्तु वेदानामध्यापनस्य, वैदिकानां विदुषां अभावस्तु सर्वत्रैव दृश्यते। वेदार्थज्ञानसम्पन्नाः विद्वांसो विरला एव। कर्मकाण्डग्रन्थानामध्यापनाध्यापनाभावात् वैदिकसंस्कारोऽपि यथास्वरूपं न सम्पद्यते। एतादृशे समये गृह्यसूत्रं विवृतियुतं टिप्पण्यादिसहितं विधाय महानुपकारः संसाधितो विवृतिकारेण। अस्य मुद्रणादिकं रमणीयं विद्यते। वेदाचार्याणां सुप्रसिद्ध-वैदिकानां श्रीमतां पण्डित विद्याधरशर्मणां अग्निहोत्रिमहोदयानां टिप्पण्या ग्रन्थस्यास्य महत्त्वमधिकं वर्द्धते। वयं अस्य सर्वथा प्रचारं कामयामहे। वैदिककर्मकाण्डिनां साहाय्याधायकमिदमिति नूनं संग्रहणीयमस्ति।

समालोचकः—अवधेश प्रसाद शर्मा।

## संगृहीतसमाचाराः।

आसामप्रान्तीयव्यवस्थापरिषद्सदस्यैः पृथक् प्रान्तीयप्रधानन्यायालय-(हाईकोर्ट) स्थापनार्थं महामाननीयसम्राट्समीपे प्रार्थनापत्रं प्रेषितमासीत्। वर्तमानमन्त्रिमण्डलमपि तस्य समर्थनं करोति।

श्रीबदरीनाथमन्दिरप्रबन्धकरणाय यू० पी० प्रान्तीय-व्यवस्थाकसभायां कश्चन प्रस्तावः समुपस्थापितः, स च सदस्यैः स्वीकृतश्च। एका समितिरपि नियोजिता या कर्तव्यनिश्चयं विधास्यति।

साक्षारता-प्रचारदिवसो जनवरीमासस्य पञ्चदशदिवसे संयुक्तप्रान्तीयशिक्षा-मन्त्रिणः श्रीसम्पूर्णानन्दमहोदयस्यादेशेन प्रतिनगरं महता समारोहेण सम्पन्नः। ग्रामे ग्रामे साक्षरताप्रचारार्थं शासकानां साहाय्येन प्रबन्धो भविष्यतीति।

काश्यां जनवरीमासस्य द्वितीयदिवसे सर्वतन्त्रस्वतन्त्रपण्डितवेणीमाधव शुक्ल महोदयानां समापतित्वे नवसाहित्यसम्मेलनमभूत्। संस्कृतसाहित्यसंमेलनस्य प्रधानमन्त्रिणा पण्डित विद्याधरशास्त्रि एम० ए० महोदयेन प्रदर्शन्याः समुद्घाटनं कृतम्। काशीस्था अनेके विद्वांसः समुपस्थिता आसन्। महामहोपाध्याय पण्डित-गिरिधरशर्मचतुर्वेदमहोदयैः संस्कृतशिक्षायां परिवर्तनप्रयोजनं समर्थयद्भिः प्रभावशालि भाषणं कृतम्।

× × × ×

फरवरीमासस्य षष्ठदिने बड़ौदाधिपति महाराज सर सयाजी राव गायकवाड़ जी० सी० एस० आई० जी० सी० आई० ई०, एल० एल०, डी० महोदयः स्वर्गतः इति महत् दुःखम्।

किशनगढ़ नरपते भारतधर्मवैभव महाराज बहादुर दीक्षितयज्ञनारायण सिंह महोदयस्य हृदयगत्यवरोधेन माघमासे देहावसानमभूत्।

श्रूयतेऽस्मिन् वर्षे कलकत्ताविश्वविद्यालय मैट्रिकपरीक्षायां पञ्चासत्सहस्रसंख्याकाः परीक्षार्थिनो विद्यार्थिनः संमिलिता भविष्यन्तीति। गतहायने त्रिंशत् सहस्रसंख्याकाः संमिलिता आसन्।

× × × ×

त्रिपुरीनगरे (सी० पी० प्रान्ते) राष्ट्रियमहासभाया (कांग्रेस) वार्षिकाधिवेशनं सुसमारोहेण श्रीसुभाषचन्द्रवसुमहोदयस्य सभापतित्वे मार्चमासे संजातम्। मतभेद कारणात् श्रीवसुमहोदयः सभापतिपदं त्यक्त्वा 'अग्रगामी दल' नाम्ना राष्ट्रसमाभ्यन्त एव नवं संघटनं कर्तुमभिलषति। सम्प्रति विहाररत्न डाक्टर राजेन्द्रप्रसादमहोदयः सभापतिः निर्वाचितः।

काश्यां हिन्दुमोहम्मदानां पारस्परिककलहेन होलिकादहनमपि न जातम्। मासं यावत् कलहः प्रचलित आसीत्। अनेके पञ्चत्वं गताः, गृहदाहेन आपणानां लुण्ठनादिदुष्कृत्यजातेन, उभयोपि महती हानिः समजनि। एवं कर्णपुरप्रयागादिनगरेषु कलहो जातः।

राष्ट्रियमहासभायाः ( कांग्रेस ) वार्षिकाधिवेशनं विहारप्रान्ते आगामि दिसम्बरमासे भविष्यति। अधुना स्थाननिर्णयो न जातः।

श्रीभारतधर्ममहामण्डलस्य महामहोपदेशकाः श्रीमन्तः पण्डित गङ्गाविष्णु शास्त्रि साहित्यनिधिमहोदया, तथा पण्डित गोपालचन्द्र चक्रवर्ति वेदान्तशास्त्रिणो भागलपुर ललितपुर ( झांसी ) बाँदा खड्गपुरादिनगरेषु सनातनधर्मप्रचारार्थं गतवन्त आसन्। सर्वत्रैव एतेषां—सनातनधर्ममहत्व मूर्तिपूजा-ब्रह्मचर्य-विवाह-संस्कार-श्राद्धमण्डन हिन्दुसंघटनादि विविधविषयकं भाषणं संजातम्। सम्प्रति प्रतिप्रान्तं प्रतिग्रामं सनातनधर्मप्रचारस्य प्रयोजनमावश्यकम्।

श्रीविन्ध्यक्षेत्रे चैत्रशुक्लसप्तमीमारभ्य दिनत्रयं यावत् अखिल भारतवर्षीय-संस्कारसमिते र्वार्षिकोत्सवो महता समारोहेण सुसम्पन्नः। अत्रावसरे धर्मरञ्जन महामहोपदेशक पण्डित धूमावतीप्रसादपाण्डेयः प्रचारमन्त्री महामण्डलस्य, महामहोपदेशकः पण्डित गंगाविष्णुशास्त्री सुप्रसिद्धः सनातनधर्म प्रचारकः स्वामि लालनाथजी ( यः खलु श्रीमतो गान्धिमहोदयस्य मन्दिरप्रवेशान्दोलनस्य विरोधं कृतवान् ) सङ्गीताचार्य प्रोफेसर भगवत्किशोर व्याकुल, अन्ये च सुयोग्या व्याख्यातारः समुपस्थिता आसन्।



चतुर्दशे वर्षे ] वैशाख-ज्येष्ठ-पूर्णिमयोः १९९६ [ ११-१२ संख्ये




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces and Bombay Presidency for use in Schools and Colleges.

सम्पादकः—
त्यक्त महामहोपाध्यायपदवीको
**महामहाध्यापकः श्रीपञ्चानन तर्करत्न भट्टाचार्यः ।**

सहकारि सम्पादकः—
**अवधेशप्रसादशर्मा द्विवेदः**

उद्गम-स्थानम्—
**श्रीभारतधर्ममहामण्डलम्, ( जगद्गञ्ज ) काशी**

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम् ।
संरक्षकेभ्यः ५) । वहिर्भारतम् ४) छात्रेभ्यः पुस्तकालयेभ्यश्च १)

# विषय सूची ।





---

# परीक्षाफल ।

अखिलभारतवर्षीय—धार्मिकाध्यात्मिकसंस्कृतविश्वविद्यालय के सन् १९३९ का परीक्षाफल १५ जुलाई के मध्यम में प्रकाशित कर समस्त केन्द्राध्यक्ष महाशयों के समीप भेजा जायगा । अन्य सज्जन या परीक्षोत्तीर्णछात्र स्वतन्त्र रूप से यदि परीक्षा फल जानना चाहें तो कृपया टिकट या जवाबी कार्ड अवश्य भेजें । आगामी वर्ष ( १९४० ई० ) के लिये परीक्षा सम्बन्धी आवश्यक सूचनाएँ अगस्त मास में दी जायंगी ।

निवेदक—

श्रीराधिकाप्रसाद चक्रवर्ती

सेक्रेटरी,

अ० भा० सं० विश्वविद्यालय,

महामण्डलभवन, काशी ।

---

# सूर्योदयः ।

चतुर्दशे वर्षे } वैशाख-ज्येष्ठ पूर्णिमयोः १९२६ { ११-१२संख्ये

## सम्पादकीया अभिप्रायाः ।

### विहारप्रान्ते संस्कृतशिक्षादुरवस्था ।

इह भारते मिथिलाप्रदेशो हि वैदिककालादारभ्य संस्कृतभाषायाः प्रधानं क्षेत्रं गण्यते । बृहदारण्यकोपनिषदि जनकस्य राज्ञः सभायां कुरुपाञ्चालानां संस्कृतज्ञविदुषां समवायो दृश्यते । बौद्धकालेऽपि विहारप्रान्ते एव नालन्दाविश्वविद्यालयो विराजते स्म । चन्द्रगुप्तप्रभृतिसम्राजां समयेऽपि पुष्पपुरी एव संस्कृतविद्यायाः प्रधानं केन्द्रमासीत् । शङ्कराचार्य्यप्रभृतय आचार्याऽपि सनातनधर्म-संरक्षणार्थं मण्डनमिश्रप्रभृतीन् विहारप्रान्तीयानेव विदुषः समाश्रयन्ति स्म । इत्थं प्राचीनकालतः समारभ्याद्यावधि विहारप्रान्तः संस्कृतविद्यायाः प्रधानं केन्द्र मासीत् । परन्तु अद्यतने कांग्रेस गवर्न्मेण्टकाले यत्र सर्वथा सर्वतः संस्कृतभाषायाः समृद्धिरपेक्षिता आसीत्, यस्य कालस्य कृते जनता समुत्सुका आसीत् । यत्आगते स्वायत्तशासने सर्वथा वयं स्वाभिलाषान् पूरयिष्याम इति । तत्रैव वज्रप्रहारो जातः । किं ब्रूमः । यद्धि विषादालङ्कारस्योदाहरणं कविभिरन्योक्त्या दत्तं विद्यते तदेवेह सर्वथा संगच्छते-तथाहि-

> "रात्रिर्गमिष्यति भविष्यति सुप्रभातम् ।
> भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ॥
> इत्थं विचिन्तयति कोशगते द्विरेफे ।
> हा हन्त ! हन्त ! नलिनीं गज उज्जहार ॥" इति ।

विहारप्रान्ते इंग्लिशस्कूलविभागे यत्र संस्कृतभाषाया अध्ययनमावश्यकमासीत्तत्रैव सम्प्रति तद् ऐच्छिकं जातं विद्यते। एवम्भूतः कश्चन प्रस्तावः स्वीकृतोऽस्ति यः खलु १९४१ ईस्वीतः कार्यरूपे परिणमिष्यति इति श्रूयते। संस्कृतविद्यालयपाठशालाप्रभृतिषु तदध्यापकानां कृते मासिकं साहाय्यं यत्र पञ्चदशरूप्यकाण्यासीत् तत्रापि द्वादश संख्या सञ्जाता। यत्र च द्वादश संख्या साहाय्यस्य तत्र नव संख्या सञ्जातेति महद् विषादस्थानमिदम्। सर्वत्राऽपि भारतीयगौरवसमेधके राष्ट्रियविचारप्रचारके संस्कृतशिक्षानुरागिणि विहारप्रान्तशिक्षामन्त्रिणि विद्यमाने एवेदं सर्वं विगुणितं कृत्यं समपद्यत इति आश्चर्यान्वित एव विद्वत्सङ्घो विद्यते।

अस्तु, वयं सर्वानेव विहारप्रान्तीयान् संस्कृतानुरागिणो मान्यान्, शासकवर्गस्थान् विदुषः, संस्कृतविद्यालयाध्यापकाँश्च संस्कृतविदुषः, तत्प्रतिनिधिभूताँश्च संस्कृतकन्वोकेशनसदस्यान् साग्रहं सरोषं सानुरोधञ्चावेदयामो यत्ते स्वशक्ति सामर्थ्यानुरूपं यतन्तामस्य विहारप्रान्तीयसंस्कृतभाषाह्रासस्य दूरीकरणाय। शिक्षामन्त्रिणां पार्श्वे प्रार्थनामण्डलतो वैधान्दोलनेन चास्य विहारप्रान्ते सर्वप्रथमं जातस्य संस्कृतभाषाया उपरि वज्रप्रहारस्य विनाशाय आकाशपातालमेकीकुर्वन्त उपसर्पन्ताम्। झटित्येव चात्र प्रतीकारो विधेय इति नवयुवकैः सभासमित्यादिना शतशः प्रस्तावाः शिक्षामन्त्रिसमीपे तडित्पत्रादिना प्रेष्याः शिक्षामन्त्रिमहोदयैरपि स्वमनोयोगेन कलङ्कोऽयं शीघ्रमेव संमार्जनीय इत्यस्माकं सत्परामर्शः।

---

## काश्यां हिन्दुयवनकलहः।

इह काश्यां पञ्चषैर्वर्षैः 'हिन्दुमुस्लिम' नाम्ना प्रतिवर्षं कलहो जायते। स च गतहोलिकावसरे महोग्ररूपेण जातः। वस्तुतः कलहोऽयं दुष्टानामाततायिनामविवेकतो भवति। नात्र केचन सभ्या विचारशीला मोहम्मदीया हिन्दवो वा सम्मिलिता भवन्ति। किन्तु 'व्यसनेन च मूर्खाणां निद्रया कलहेन वा' इत्युभयपक्षगाः कलहोपजीविनो दुष्टाः परस्वहर्तारो येन केनापि व्याजेन परधनापहरणं परपीडनं च कुर्वन्ति। अस्मिन् वर्षे होलिकामहोत्सवोऽपि न जात इति महत् खेदास्पदम्। निरीक्षणांनिरपराधिनां नागरिकाणां च महती धनजनहानिर्जाता। तेषां दुष्टानां दोषेण

सर्वेषामेव काशीनिवासिनां सर्वमेव, धार्मिकं सामाजिकं, साहित्यिकं कृत्यं निरुद्धमासीत् । सर्वविधाभिः हानिभिः सह मानसिको महान् क्लेशः सर्वैरनुभूतः । अस्मिन्नेव व्यतिकरे समयतो महता प्रयासेन नानाविधैरुपायैः विलम्बचक्रात् समुद्धृतोऽपि सूर्योदयः पुनः विलम्बचक्रे समायातः । अधुना 'सूर्योदय' प्रकाशनस्य सुदृढप्रबन्धः कृतोऽस्ति । ग्राहकाः कृपया क्षमाप्रदानपुरस्सरं 'सूर्योदये' लेखप्रकाशनेन, ग्राहकत्वस्वीकारेण, प्रचारद्वारा च सर्वविधमस्मत्साहाय्यं करिष्यन्तीति निवेदयामः ।

[ स० सम्पादकः ]

---

## ग्राहकमहोदयेभ्यो निवेदनम् ।

सूर्योदय' स्य सप्तमाङ्के "ग्राहकेभ्योनिवेदनम" इति विज्ञप्तिपत्रं मुद्रितं ग्राहकमहानुभावानां सन्निधौ प्रेषितमासीत् । तदनन्तरं बहुभिः कृपालुभिः ग्राहकैः स्वीयं वार्षिकं मूल्यं मनिआर्डरद्वारा प्रेषितम्, कैश्चन बी० पी० स्वीकारकरणेन मूल्यं दत्तम् । तेभ्यः सुरभारतीसेवापरायणेभ्यः शतशो धन्यवादा दीयन्ते ।

बहूनां ग्राहकमहोदयानां वार्षिकम् अद्यावधि न प्राप्तम् । ये च अद्यावधि मूल्यं न प्रेषितवन्तः, ते शीघ्रं धनादेश-( मनिआर्डर ) द्वारा स्वकीयं वार्षिकं मूल्यं प्रेषयन्तु । कठिनेऽस्मिन् समये धर्मस्य हिन्दूसंस्कृतेः स्वात्मनः सुरभारत्याश्च गौरवरक्षार्थं भवन्तः पराङ्मुखा न भविष्यन्तीति अस्माकं विश्वासः । आशास्ति भवन्तोऽस्य वार्षिकं मूल्यं नूनं शीघ्रं प्रेषयिष्यन्तीति । अथवा वी० पी० द्वारा 'सूर्योदयं' प्रेषयितुमनुमतिपत्रं कार्यालयेऽस्मिन् सम्प्रेष्य स्वकीयं ग्राहकत्वं संरक्षिष्यन्ति । धनादेशपत्रे (मनिआर्डरकूपन) स्वकोयेन पूर्णसंकेतन सह 'नवीनोऽहं प्राचीनो वा, ममेयं ग्राहक संख्या इति सुस्पष्टतया लेखनीयम् ।

येषां ग्राहकमहोदयानां 'सूर्योदय' ग्रहणेच्छा न वर्तते, तैः कृपया एतत् विज्ञप्तिपठनानन्तरमेव वयं विज्ञापनीयाः, अन्यथा बी० पी० परावर्त्तने निरर्थकं क्षतिग्रस्ता भविष्यामः, तथाविधा ग्राहकास्तु सुरभारतीयसेवायां महतीं बाधां समुपस्थापयन्ति इति सबहुमानं सानुरोधं च निवेदयामः ।

—कार्याध्यक्षस्य ।



----महाकोशले-हिन्दूसम्मेलनं समाप्तम् । तत्र प्रस्तावा निर्विरोधं स्वीकृताः । सभापतिः श्रीसावरकरमहोदयः सूचितवान् यत् आर्यसमाजेन हिन्दूमहासभया च रूप्यकाणां लक्षद्वयं दत्वा सोलापुरे 'बन्देमातरम्' कालेजस्य निर्माणाय निश्चयः कृतः । अन्तिमभाषणे च सावरकरमहोदयेन हिन्दवः सङ्केतिता यत्ते निर्वाचनेषु तथाविधानेव हिन्दूहितैषिणो जनान् प्रेषयेयुर्ये धर्मस्य, संस्कृतेः, भाषाया नागरिकाऽधिकाराणां च रक्षां । यै प्रतिज्ञां कुर्युः ।

× × × ×

----जूनमासस्य ९ तारिकायां बम्बई नगरे भारतीयनरेन्द्रमण्डलस्य स्थायिन्या मन्त्रिसमितेरधिवेशनं वीकानेरस्य प्रधानमन्त्रिणां सर मनुभाई मेहतामहोदयानामध्यक्षतायामभूत् ।

× × × ×

---श्रूयते दशदिवसानन्तरं मुम्बई नगरे राजनीतिकसभानां समारोहो भविष्यति । कांग्रेसाधिकृतानामष्टप्रान्तानां प्रधानमन्त्रिणां सम्मेलनं, कांग्रेसकार्यसमितेः अखिलभारतीमकांग्रेससमितेश्चाधिवेशन भविता । भारतीयकांग्रेससमितेरधिवेशनं नितरां महत्वपूर्णं भविष्यति । यतस्तत्र विधानसमिते विवरणस्य ( रिपोर्ट ) उपरि विचारश्चलिष्यति । वितानमण्डपे दशसहस्रदर्शकानां कृते स्थानस्य प्रबन्धो विधीयते ।

---शिया-सुन्नी-सम्प्रदाययोः परस्परं कलहः स्थले स्थले अद्यापि चलत्येव । मौलानाआजाद प्रभृतिभिर्विधीयमानोऽपि शान्तिप्रयत्नो विफलतामेति । सुन्नीसम्प्रदायिजनाः मदहेसहावा-पठनं न परित्यजन्ति । नापि शियासम्प्रदायिनः तवरांगानम् ।

× × × ×

-----जूनमासस्य ८ मतारिकायां सम्राजो जन्मोत्सवोपलक्ष्ये उपाधिवितरणं जातम् । वर्षेऽस्मिन् संस्कृतविद्वद्भ्यो न कापि पदवी दत्ता ।

× × × ×

—दिल्लीनगरे नातिविलम्वेन अ० भा० सनातनधर्ममहासम्मेलनं भविष्यति । एतस्य सफलतायै प्रयत्नो विधीयते ॥

———

## उद्बोधनम् ।

वेदान्त-वेद-विज्ञाः ।
निद्रां त्यजन्तु सुज्ञाः ॥

परतन्त्रता नितान्तम्,
दुःखीकरोति स्वान्तम्,
दारिद्र्य-दीन-शान्तम्,
प्रजहाति नैज-प्रज्ञा ।
निद्रां त्यजन्तु सुज्ञाः ॥१॥



आधीनता-परत्वं,
जन-मानता-महत्त्वम्,
निन्द्यां श्ववृत्तितां नो ?
जानन्ति निन्दितज्ञाः ।
निद्रां त्यजन्तु सुज्ञाः ॥२॥

दीव्यन्तु देवनागयाम्,
विदुषां च राजधान्याम्,
स्वाधीनता-हिमान्याम्,
मरणं वरं, "प्रतिज्ञा" ।
निद्रां त्यजन्तु सुज्ञाः ॥३॥

ज्ञानाब्धि-रत्न-राजिम्,
अवलम्ब्य चित्त-वाजिम्,
धर्म्मे नयन्तु, पाणिम्,
कथयन्ति तत्त्व-तज्ज्ञाः ॥४॥

—विद्यार्थी रामस्वरूपः 'अमरः' मुलुण्डस्थः ।

# ब्राह्मणानां श्रेष्ठत्वं जन्मना वर्णव्यवस्था च

निबन्धकः—पं० दीनानाथशर्मा शास्त्री सारस्वतः मुलतान

( क्रमागता )

चाण्डालादयो बहुजातयो यासां यजुर्वेदादकेऽपि सङ्केत ँ प्राप्यते, वादिनो जन्मना मन्यन्ते कर्म्मणा वा एताः?। यदि जन्मना; तर्ह्यत्र गुणकर्म्म व्यवस्था कुतो न ?। यदि गुणकर्म्मणा एताः; तर्ह्यासामुत्पत्ति ँ कथम्? के के चाऽऽसां गुणकर्म्मप्रभृतयः। ते स्मृत्या साधनीयाः। स्मृतिषु प्रागेतासामुत्पत्तिर्निरूपिता, ततः कर्म्माणि—एतत् कथमुपपद्येत ?। गतेऽस्पृश्यान्दोलने यैरार्यसामाजिकादिभिर्मलापकर्षणादि कर्म्म कृतम्; ते चाण्डाला जाता नो वा ?। यदि जाताः; तर्हि किं ते तथाऽऽकारयितुं शक्याः ? तर्हि ते १०-५१-५२ इति मनुमनुसृत्य नगराद् वहि ँ कथं न क्रियन्ते ? शवगर्द्दभेषु कथं नारोप्यन्ते ? भिन्नमाण्डेषु भोजनं तेषां कुतो न भवति ? यदि ते चाण्डाला न जातास्तर्हि जन्मना वर्णव्यवस्थामण्डनं कर्मणा च जातिखण्डनं सिद्धम् । अस्तु—

प्रकृतमनुसरामः। यदि सा पूर्व्वोक्ता ब्राह्मणी तेन ( गुणकर्म्मजातशूद्रेण स्वपतिना ) न सङ्गच्छेत, तर्ह्यन्येन कर्म्मकृतब्राह्मणेन सङ्गच्छेत सा ( यदाज्ञां गुणकर्म्मकृतवर्णव्यवस्थामन्तारो दद्यु ँ कदाचित् ) तर्हि सैव ब्राह्मणी कतिपयदिवसानन्तरं कर्म्मणा शूद्रवर्णा भवेत्, तर्हि तस्या ब्राह्मणधवस्य—'शूद्रा शयनमारोप्य ब्राह्मणो यात्यधोगतिम्। जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते' मनु० ३।१७ 'दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। नाश्नन्ति पितृदेवास्तान्न च स्वर्गं स गच्छति' मनु० ३।१८ 'न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः। कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते' मनु० ३।१४ इति दुरवस्था भवेत् तत्सन्तत्याश्चाऽपि। यतस्तत्कृतं मृतकश्राद्धं तत्पितरो न भक्ष्यिष्यन्ति वर्णसंकरत्वान्मनुवचनेनाऽमुना ३।१८ जीवितश्राद्धं तादृशसन्तान ँ कर्त्तुमेव न शक्तः, पितापुत्रयोर्वर्णभेदात् । यतस्तस्य पिता तु ब्राह्मणः, स च तस्य, स्वशूद्रामातुश्चापि पुत्रोऽतो वर्णसंकरः। अथवा स पुत्रोऽपि वर्णसंकरं कमपि अन्यं पितरमन्विष्यैव तच्छ्राद्धं कुर्य्यात्। परं शूद्रासङ्गन्तुस्तत्पितुः तत्सन्तानस्य च कृते मनुवचनमपि श्रोतव्यम्—,वृषलीफेनपीतस्य निःश्वासोपहतस्य च। तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते' ३।१६

निष्कृतिः—प्रायश्चित्तम् । इत्यतीव निन्द्यता ।

एवं वर्णपरिवर्त्तने यत्र स्त्रीणां परिवर्त्तनम् . सवर्णास्त्रीनिदेशकारणात् ) तत्र पितृगुणकर्म्मविरुद्धानां पुत्त्राणामपि, आर्य्यसमाजप्रवर्त्तकाऽऽज्ञया सत्यार्थप्रकाश चतुर्थसमुल्लासस्य ५३ पृष्ठानुसारं परिवर्त्तनं कार्य्यम्भविष्यति । कस्यचिद् ब्राह्मणस्य बाल ऽ कर्म्मणा शूद्रतां शूद्रस्य स बाल ऽ कर्म्मणा ब्राह्मणतां व्रजेत् ; तद्धु भयो ऽ परिवर्त्तनं कार्य्यं भवेत् कर्म्मणा वर्णव्यवस्थाचालकानां नयेन । तर्हि 'आत्मा त्वं पुत्रनामाऽसि' गो० गृ० ।२।८।२१ 'आत्मा जज्ञे आत्मनः' ऐतरेय ब्रा० ७।१३ इतिवचनानां स्वतनुजनुःप्रेम्णश्च क्व स्थितिर्भवेत् ? । पूर्व्वरीत्या सतीद्रुममूलेऽनया रीत्या च स्नेहलतामूले कठोरकुठाराघाते जाते गृहस्थधर्म्मः, शान्तिः, सन्तोषो वा क्व स्थास्यति ? । यदि भवन्तोऽसौविध्यवशात् तादृशपुत्रस्य परिवर्त्तनमकृत्वा तं स्ववर्णे एव स्थापयेयुः, तर्हि भवतां जन्मसिद्धवर्णव्यवस्थामन्तृभ्यः सनातनधर्म्मभ्य ् को भेदः स्थितः ? । यदि परिवर्तयेयुः; तर्हीयं वर्णव्यवस्थाऽस्थिरा चलन्मूलाऽव्यवस्थिता च स्यात् ।

अथवा पुत्त्राणां परिवर्तनं नाऽपि भवेत्; तथापि कस्यचित्पिता अद्यत्वे इव सांसारिकाऽसौविध्यादिकारणाद् अधिकां विद्यां प्राप्तुमशक्तः सन् क्षत्रियपदवीं प्राप्नुयात् । वृद्धत्वेऽधिकविद्याप्राप्त्या स ब्राह्मणत्वं प्राप्तुमसमर्थो भवेत्; तदीयश्च पुत्त्र आचार्य्यकुलाद् ब्राह्मणयोग्यविद्यामधीत्य ततो ब्राह्मणत्वप्रमाणपत्रमादाय समागच्छेत्; तत ् पुत्त्रस्तु कर्म्मानुसारं ब्राह्मणः, तेन स्त्र्यपि ब्राह्मणी ग्रहीतव्या । गृहीता च गुणकर्म्मानुसारिणी । अधुना पिता क्षत्रियः, माता चाऽपि क्षत्रिया वैश्या वा । एवमवस्थायां पितापुत्त्रयो ् कीदृशः सम्बन्धः स्थास्यतीति विचार्य्यम् । शास्त्रानुचारश्च ब्राह्मणपुत्त्रः स क्षत्रियपितरं तु न, प्रत्युत क्षत्रियपिता स्वब्राह्मणपुत्त्रं स्नुषाञ्च 'ब्राह्मणं दशवर्षन्तु शतवर्षं तु भूमिपम् । पितापुत्त्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता' मनुः २।१३५ इति वचनेन तत्पुत्त्रकल्पत्वात् स्वपुत्त्रमेव प्रणन्तुं ( नमस्कर्तुं ) बाध्यो भविष्यति, स्वस्नुषाञ्च पूर्व्ववचसा मातृकल्पां ज्ञात्वा तां प्रणन्तुं कदाचिज्जङ्घादिमर्द्दनसेवां कर्तुं ञ्चाऽपि बाध्यो भविष्यति । एवं तद्ब्राह्मणपुत्त्रस्य क्षत्रियवैश्यभूताया मातुरपि कर्तव्यं भविष्यति स्वस्नुषा-(ब्राह्मणी) सेवायाः । तर्हि मातापितृभक्तिरपि सतीधर्म्म-पुत्त्रस्नेहाभ्यां सह क्वचित् पलायिष्यते इति भूयो विमर्शेनाऽन्या अप्यनर्थ-परम्पराः स्फुरेयुः ।

गुणकर्म्मणा वर्णव्यवस्थाप्रवर्त्तक आर्यसमाजनामकाऽर्वाचीनतम सम्प्रदायक प्रवर्त्तकः स्वा० दयानन्द एव। स खलु 'यथेमां वाचं ब्रह्मराजन्याभ्यां शूद्राय चाचार्याय च, इति मन्त्रेण सर्व्ववर्णानां वेदाऽध्यापनं परमात्मकर्तृकं साधयति। तस्य युक्ताऽऽयुक्तत्वमुपेक्ष्याऽस्माभिस्तन्मतेनैव जन्मना वर्णव्यवस्थां परमात्माभिमता साध्यते। तत्र प्रष्टव्यम्, यदत्र परमात्मनो ब्राह्मण शूद्रादयो जन्मना मता कर्म्मणा वा ? यदि जन्मनेति ; तदा जन्मना वर्णव्यवस्था सिद्धा। यदि कर्म्मणा ब्राह्मणशूद्रादयो ऽत्र; तर्हि परमात्मनो वेदाध्यापनारम्भात् प्रागेव तेषां ब्राह्मणक्षत्रियादि सञ्ज्ञा कुतो जाता ?। यदीयं सञ्ज्ञा प्राङ्नासीत्, तर्हि स ब्राह्मण शूद्रादिकं वेदानपाठयदिति कथं ज्ञातं स्वामिना' अथं च परमात्मा ब्राह्मणशूद्रादिकं तारतम्येन वेदमध्यापयति साम्येन वा? यदि तारतम्येनेति; तर्हि स पक्षपाती सिद्धः। अयञ्च पक्षपातो जन्मना वा गुणकर्म्मणा वा? यदि जन्मना, तर्हि जन्मना वर्णव्यवस्था सिद्धा, यतस्स ब्राह्मणमेवाऽध्यापयति न शूद्रम्। यदि गुणकर्म्मणाऽयं पक्षपातः; तर्हि वेदपाठन कर्म्म त्वधुनैव प्रारब्धं चतुर्णाम्; तर्हि तेषु कथं कर्म्मतारतम्यं जातम् यदि प्राक्तन जन्मनः कर्मतारताम्यमत्र वीजं × तर्हि ब्राह्मणक्षत्रियादयोऽपि प्राक्तन जन्मकर्म्मणा सिद्धा न त्वैहिकजन्मकर्मणा इति सनातनधर्म्मसिद्धान्त एव प्राप्तः। यदि परमात्मा साम्येन सर्वान् वेदं पाठयतीति; तर्हि तस्मिन्नेतावत्यपि न शक्तिर्यत् स सर्व्वानेव स्वशिष्यान् साम्येन पूर्णविदुषः कुर्यात्। यदि न शक्तिस्तर्हि स सर्व्वशक्तिमान् कुतः ? यदि च तस्मिञ्छक्तिरस्ति; तर्हि तच्छिष्येषु जातिचतुष्टयं कुतो जातम् ? तेन सिद्ध्यति यत् स जन्मनैव इमान् वर्णान् मत्वा तेषां पाठने तदधिकारभेदानुसारं तारतम्यं करोति।

अथ च स्वा० दयानन्द× पूर्णविद्वत्वादेव ब्राह्मणत्वं पूर्णमूर्खत्वादेव च शूद्रतां मनुते। यदि परमात्मा तदर्थानुसारं पूर्णविद्वांसमपि वेदं पाठयति; तर्हि स भ्रान्तिमान् सिध्यति। स खलु कुत पूर्णविद्वांसं पुनर्वेदं पाठयति; ? यदि स पाठयति; तर्हि प्रतीयते यत् स ब्राह्मणः पूर्णविद्वान् नासीद्, किन्त्वपूर्णविद्वानेवासीत्, अतएव तु परमात्मा तं वेदमध्यजीगपत्। यदि च सोऽपूर्णविद्वान् आसीत्; तर्हि ब्राह्मण एव कुतः स्थितः स्वामिनये ?। यदि स न ब्राह्मणः, तर्हि परमात्मा ब्राह्मणं वेदमध्यापिपदिति स्वामिकथनं मृषोद्य

× अतएव न्यायदर्शनस्य ३।२।१० सूत्रस्य भाष्ये 'उच्चाभिजननिकृष्टाऽभिजनादिरूप शरीरोत्पत्तिः पूर्वजन्मकर्म्मणाऽऽख्याता।

सिध्यति । अथवा जन्मनैव तद्-ब्राह्मणत्वस्वीकारे जन्मना वर्णव्यवस्था सिद्ध्यति अथ च स्वाभिमतानुसारमत्यन्तमूर्ख एव शूद्रपदवीमधिगच्छति तर्हि किं परमात्मा न जानाति यद्-अयमत्यन्तमूर्खः; अस्य पाठनं व्यर्थम्, कथमहमिमं पाठयामीति ? यदि स नैतज्जानाति तर्ह्यल्पज्ञः सिद्ध्यति । यदि च स ज्ञात्वाऽपि तं पाठयति; तर्हि पाठयितुं शक्यमपि तं स शूद्रं कथमाचष्टे ? एवमपूर्णं विद्वांसमपि स ब्राह्मणं कथं मन्यते ? तेनैतत्सिद्ध्यति यत् स्वा० दयानन्द कृतार्थपरतन्त्रोपि तदीय " परमात्मा वर्णव्यवस्थां जन्मनैव मन्यते । तेन ईश्वरसिद्धायां जन्मना वर्णव्यवस्थायां को विप्रतिपत्तुं शक्नुयात् । तत एव तु स्वा० दयानन्देन सत्यार्थप्रकाश २४१-२४२ पृष्ठे एतत् स्वयं स्वीकृतम् । तथाच '(प्रश्न) जातिभेद ईश्वरकृत है वा मनुष्यकृत है । (उत्तर) ईश्वर कृत और मनुष्यकृत भी जातिभेद है (प्र०) कौन सा सा ईश्वर कृत और कौन सा मनुष्यकृत । (उ०) मनुष्य पशु पक्षी वृक्ष जलजन्तु आदि जातियां, वृक्ष में पीपल वट आम्र आदि, पक्षियों में हंस काक बकादि, जल जन्तुओं में मत्स्य मकरादि जाति भेद हैं, वैसे मनुष्यों में ब्राह्मण क्षत्रिय वैश्य शूद्र अन्त्यज जातिभेद ईश्वरकृत हैं" । किमितः परं स्पष्टं प्रमाणं स्यादार्य्यसामाजिकानां कृते । ब्राह्मणादिभेदो यदि ईश्वरकृतस्तर्हि मनुष्यस्तत्परिवर्तने कथमधिकृतः ? ईश्वरश्च तत्तज्जातिजन्मद्वारा स्वयमेव भेदं करोति प्राक्तन-जन्मकर्म्मवशात् । तेन वर्णव्यवस्था जन्मनैव सिद्धा, नत्वैहिकगुणकर्म्मणा इति सिद्धम् ।

स्वा० दयानन्दः स्वभावेनापि वर्णं व्यवस्थापयति । स्वभावस्य परिभाषा तेन 'आर्योद्देश्यरत्नमालायां, निर्दिष्टा, तदुदाहरणेऽग्नेरुष्णता निर्दिष्टा । अग्नेः स्वभाव उष्णता यथा तज्जन्मकालत एव; एवं ब्राह्मणादीनां स्वभावोऽपि जन्मकालत आमरणान्तं मंस्यते । तेन स्वभावेन वर्णव्यवस्था जन्ममूलिका सिद्धा । 'स्वभावजम्' गीता १८।४२ ।

अथ च पृच्छयन्त एते गुणकर्म्मणा वर्णव्यवस्थापका यद्-यदा भवन्तो गुणकर्म्मणा एकदा एकस्य पुरुषस्य वर्णनिश्चयोद्घोषणां कुर्व्वन्ति; तर्हि वाच्यम्—तत्समयोत्तरं पुनस्तस्य पुरुषस्य कदाचिद् गुणकर्म्माणि विपरिवर्त्तन्ते ? अथवा तत्सम्भवो भवति नो वा ? न भवति तत्परिवर्त्तनमिति चेत्तर्हि जन्मना मातापितृद्वारा प्राप्तानि गुणकर्म्माणि कथं परिवर्त्तेरन् 'यथैवात्मा तथा पुत्रः' मनु० ९।१३० 'आत्मा त्वं पुत्रनामाऽसि' निरु० ३।४ इत्युक्त्या । यदि

कथ्येत—गुणकर्म्मणैकदा वर्णनिश्चयेऽपि तस्य पुरुषस्य गुणकर्म्माणि पश्चात् परिवर्त्तितुमपि शक्यन्ते; तर्ह्येतद् वाच्यं स्याद्, यत्—तदा तस्य पूर्व्वनियत-कृतवर्णं परिवर्त्तयिष्यन्ति भवन्तो नो वा ? । यदि नेत्युत्तरम्; तर्हि जन्मसिद्ध-वर्णव्यवस्थातो ( यस्यां जन्मगत ॱ परमात्मप्राप्तो वर्णो न परिवर्त्यते ) भवन्नियति-कृतवर्णव्यवस्थायां ॱ को भेदः किमयमेव यत् - पूर्व्वत्र परमात्ममुद्रा, परत्र च भवदीय—(वादि) मुद्रा ? । यद्येवं तर्हि तु धन्या भवन्त ईश्वरमतिशयानाः । यदि कथ्येत—नहि २ । गुणकर्म्मपरिवृत्तौ वयं पूर्व्वगुणकर्म्मानुसारं नियतीकृतस्य वर्णस्याऽपि परिवर्त्तनं करिष्याम इति चेत्तर्हि वाच्यम्, तदीयगुणकर्म्माणि तस्मिन्नेव जन्मनि दशकृत्व ॱ परिवर्त्तेरन् यदि; तर्हि किं तस्य वर्णं, तस्य पुत्त्रपुत्रीस्तस्य स्त्रियं, तस्य व्यवहारमपि च किं दशकृत्व ॱ परिवर्त्तयिष्यन्ति भवन्तः ? । किमेतदुदाहरणानि भवतां वयं श्रोतुं शक्नुमः ? । काचित् पञ्जिका वा तदर्थं नियतीकृता वर्त्तते ? । भवतां (वादिनां) 'बाबू पार्टी' कस्मिन् वर्णे वर्त्तते, यया वेदस्य स्पर्शमात्रमप्यकृत्वा-ऽऽङ्गलभाषामात्रमेव अधीतम् । यदि कथ्येत—क्षत्त्रियवर्णवती सा 'पार्टी' तर्हि किं स्मृत्युदितानि गुणकर्म्माणि तस्यां मिलन्ति ? । यदि न, तर्हि भवद्भिर्निजपञ्जिकायां सा 'शूद्र' पदव्या संयोजिता ? । एतदाद्युत्तरदायित्वं भवत्सु स्थितम् ।

अथ चैतदपि वाच्यं यत्—तत्तद्वर्णो जन्मतस्तत्तत् स्वस्ववर्णकर्म्म प्रारभेत ? अथवा सर्व्वे केवलब्राह्मणस्य, केवलक्षत्त्रियस्य, केवलवैश्यस्य, केवल शूद्रस्य वा कर्म्म प्रारभन्ताम् ? । आद्ये—जन्मनो वर्णव्यवस्था सिद्धा । यत ᳵ प्रत्येकवर्णो जन्मनो नियतं स्वस्वकर्म्म प्रारप्स्यते । अन्यदीयकर्म्म-करणात्तु तं तं स्मृतयो वारयन्ति; तर्हि स तत्तद्वर्णकर्म्मकरणवशात् तत्त-त्स्ववर्णे एव स्थास्यति, अन्यवर्णं गन्तुं न शक्ष्यति—इति सनातनधर्म्म-सिद्धान्तस्य विजयोऽभूत् । अत एव मनुना' स्वकर्म्मप्रच्युतानां कृते भविष्य-ज्जन्म विभीषिकेत्थं दत्ता यत्—'स्वेभ्यः स्वेभ्यस्तु कर्म्मभ्यश्च्युता वर्णा ह्यनापदि । पापान् संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु' १२।७० वान्ताश्यु-ल्कामुखः प्रेतो विप्रो धर्म्मात् स्वकाच्च्युतः । अमेध्यकुणपाशी च क्षत्रियः कटपूतनः १२।७१ मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक् । चैलाशकश्च भवति शूद्रो धर्म्मात् स्वकाच्च्युतः' १२।७२ इत्थं यदा स्वकर्म्मप्रच्युति निषेधः, परकर्म्मग्रहणस्य च निषेधः; तर्हि कथमन्योऽन्यवर्णवान् भवितुमर्हेत् ?

यदि सर्व्वो जन ᳵ केवल ब्राह्मणस्य केवलक्षत्त्रियादिवर्णस्य वा,

अथवा एको जनः सर्व्ववर्णानां वा कर्म्म प्रारभेतेति भवन्मतं स्यात् ; तर्हि किमेतत् स्मृतिषु दर्शयितुमीशते भवन्तः ? गुणानामाश्रयभूतं किञ्चिद् द्रव्यं पूर्व्वमवश्यं भवति । तद् गुणकर्म्माश्रयभूतं द्रव्यं किमिति प्रश्नः । यदि 'मनुष्य' इति कथ्येत; तर्हि किं स्मृत्यादिषु तत्तत्कर्म्म 'मनुष्य' नाम्ना दर्शयितुं शक्नुवन्ति भवन्तः ? । कदापि नैवमित्यस्माकं दृढो विश्वासः । स्मृतिषु तु तत्तत्कर्म्माश्रयभूतो मातापितृद्वारोत्पन्नो ब्राह्मणादिर्व्वर्ण एवोक्तः; स एव द्रव्यमभूत्, पश्चादेव तद्गुणकर्म्मादिकं नियमितम् अर्थात्—स्मृतिषु चत्वारोऽपि वर्णा जन्मसिद्धा एव प्राक् निरूपिताः; तेषां कर्म्मविभागस्तु तत्तज्जन्मनोऽनन्तरमेव नियमितः, तेन तत्तज्जाति जातानामेव तत कर्म्मविधानं मतम् । कर्म्मभिस्तु जातिविधानं न क्वापि मतम् । तर्हि जन्मना वर्णव्यवस्था सिद्धाऽभूत् । प्रागेव गुणा प्रारभ्येरन् पश्चादेव द्रव्यं स्यादिति तु लौकिकसंसारेऽसम्भवि। किञ्च—ब्राह्मणादिशब्दा जातिशब्दा नतु गुणवाचकशब्दा 'विद्वन्मूर्खा' दिवद् इत्यपि ज्ञेयम् । अत एव 'जात्याख्यायाम्' १।२।५८ इति सूत्रस्योदाहरणे 'ब्राह्मणाः पूज्याः' इति वैयाकरणसिद्धान्तकौमुद्यां 'पूर्व्ववयसो ब्राह्मणाः प्रत्युत्थेयाः' इति काशिकायाञ्चोदाहृतम् ।

'विद्वाँस्तु ब्राह्मणो दृष्ट्वा पूर्वोपनिहितं निधिम् । अशेषतोऽप्याददीत सर्वस्याऽधिपतिर्हि सः' मनु० ८।३७ अनेन प्रतीयते विद्वान् ब्राह्मणस्तन्निधेरधिपतिर्नत्वविद्वान् ब्राह्मणः । एतेनाऽविदुषोऽपि ब्राह्मणस्य तत्तासिद्धं जन्मना वर्णः सिद्धः ।

एवञ्चैकादशे दिने नामकरणं तेन सह ब्राह्मणादिवर्णचिह्नात्मकशर्म्मादियोजनं कर्त्तव्यं भवति मन्वादिप्रोक्तदिशा; तद्जन्मना वर्णव्यवस्थापकम् । 'तद् ब्राह्मणपुत्रस्यैव भवति' इति व्याजस्तु अधुनातनानामकिञ्चित्कर एव । मनुस्मृतौ 'शर्म्मवद् ब्राह्मणस्य स्यात्' २।३२ इति पाठदर्शनात् । अत्र 'ब्राह्मणस्य' इति शब्दो न तु 'ब्राह्मणपुत्रस्य' । अत एव स्वा० दयानन्देनाऽपि 'संस्कारविधौ' ६३ पृष्ठे 'शर्म ब्राह्मणस्य वर्म्म क्षत्रियस्य गुप्तेति वैश्यस्य' इति पारस्कर शौनक गोभिलीयगृह्यसूत्राणां पाठ उद्धृतः । तत्र 'ब्राह्मणस्य' 'क्षत्रियस्य' 'वैश्यस्य' इति शब्दाः स्फुटाः ? एतदनुवादे च स्वा०द०६५ - ६६ पृष्ठे लिखितम् 'ब्राह्मण हो तो देवशर्मा, क्षत्रिय हो तो देववर्मा, वैश्य हो तो देवगुप्त, और शूद्र हो तो देवदास इत्यादि नाम रक्खे' । कीदृशी स्पष्टताऽत्र जन्मसिद्धवर्णव्यवस्थायाः । नात्र 'ब्राह्मण पुत्र' इति लिखितम्, किन्तु 'ब्राह्मण' इति । गुणकर्म्मणा तस्याऽधुना ब्राह्मणत्वाऽभावाद् 'ब्राह्मण' इति तत्कृते लेखनं जन्मनैव ।

वर्णव्यवस्थासिद्धान्तं पिशुनयति। कर्म्मानुसारं वर्णव्यवस्थाने मते सति नामकरणेन सह ब्राह्मणत्वादि जातिसूचकशर्म्मादियोजनमेकादशे दिने नोपपद्यते जन्मतः; यतो जातस्य एकादशे दिने कुतो गुणकर्म्म ब्राह्मणादि योग्यम्। तदातु जन्मसिद्धतैव भवति वर्णानाम्। यदि ब्राह्मणक्षत्रियवैश्येति गुण कृतोपाधिमात्रमभविष्यत् प्राज्ञ विशारद शास्त्र्यचार्य, बी० ए० एम० ए० इत्यादिवत् तर्हि जन्मना तत्प्रयोगारम्भो नाऽभविष्यत् नहि जातमात्रो ब्राह्मण पुत्रः 'शास्त्री' कथ्यते। परं ब्राह्मणस्तु कथ्यते; तेन 'ब्राह्मणः' इति पदवी न, किन्तु जातिः सिद्धा। पदवीत्वे तु विद्याऽध्ययनसमाप्त्यनन्तरमेव परिणामे ब्राह्मणादित्वस्य निर्णयो भवेत; नामकरणे शर्म्मादियोजनञ्चापि पुनस्तदैवाऽऽपतेत्। (क्रमशः)



## भारतोद्बोधनम्।

प्रणायक-ज्योतिःस्वरूपशर्मा शास्त्री-ढाँढमियाविद्यालय-सूरजगढ़। (राजपूताना)

भो भो भारत! धीर! विद्धि विमलं स्वीयं स्वरूपं पुन
र्धर्मं पालय रक्ष गौरवपदं वेषं गृहाण स्वकम्।
भाषां स्वीकुरु भूतिदे कुरु रतिं स्वाभाविके कर्मणि
आदत्तां त्वरितं गतं पुनरिदं येनोन्नतिर्जायताम्॥१॥

आचारं चिनु संस्कृतिं वितनुतां स्वाभाविकीं सूज्ज्वलां
शिक्षां स्वामभिशिक्षतां सुगतिदां भव्यैश्च भावैर्युताम्।
व्यापारस्य कुरु प्रचारमधुना सर्वत्र भूमण्डले
विस्तारं विपुलं विधेहि सुखदं स्वासां कलानामथ॥२॥

मोहं मार्जय धाव चोन्नतिपथं ह्यालस्यमानाशय
स्वातन्त्र्यं भज पौर्विकं च सहजं कालो बहुः प्रागमत्।
नैर्बल्यं क्षपयाविवेकजनितं तेजोऽङ्कुरं वर्द्धय
वीक्ष्यस्वामथ दुःस्थितिं च महतीमुत्तिष्ठ भो भारत!॥३॥



# साहसं वा भ्रान्तिर्वा ?

ले०—"अन्तर्यामी"

संस्कृतज्ञपाठकानां विदितं स्याद् यद् अस्माकमवतारः परापहरणसूचनायै एव-जातः। प्रागस्माभिः 'सूर्योदये' १०।९ अङ्के कस्यचिद् 'अहो साहसम्' प्रकाशितम्। ततोऽध्ययोध्यं प्रकाश्यमाने 'संस्कृत' पत्रे ६।३९ कस्यचन 'साहसस्य परा काष्ठा' अस्माभिर्दर्शिता। ततः 'सूर्योदये' १४।४।५ अपरस्य 'साहसस्योदाहरणान्तरम्' प्रदर्शितम्। एवं 'संस्कृत' पत्रे ९।१२ श्रीसुदामद्विवेदिनामतः 'सुप्रभातस्य साहित्याङ्के यशोदादेव्याश्चौर्य्यम्' प्रकाशितम्।

यद्यपि केचित् कथयन्ति यदिदं चौर्य्यमुत्साहवर्द्धकम्, परमस्मदीयविचारे नैतद् युक्तम्। यतः प्राक्तनश्चोरश्शनैश्शनैश्चौर्यमभ्यस्यँस्ततश्चौरेन्द्रशिखामणिर्भवति। ततश्चाऽमुष्य दमनमेव कठिनञ्जायते। अत एव तु तन्निरासार्थं 'दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया। मदीयपद्यरत्नानां मञ्जूषैषा मया कृता' इति पण्डितराजेन जगन्नाथेन 'अन्यत्रार्गपरावृत्त्या बन्धचिह्ननिगूहनैः। अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते, इति श्रीयुत बाणभट्टेन 'परस्य काव्यं स्वमिति ब्रुवाणो विज्ञायते ज्ञैरिह काव्यचौरः। विलोक्य माणिक्यमयोग्यहस्ते प्रत्येति को नाम यदेतदस्य' इत्यन्येन केनचिच्च कथितम्। चौर्य्ये कृते मुख्यलेखकस्याऽसन्तोषोऽपि भवति, यतस्तन्नामनिर्देशस्तत्र न कृतो भवति। अस्तु।

अद्य वयं पाठकानामन्तिके एकं विचित्रमेतद्विषयकं वृत्तं समुपन्यस्यामः। अत्र वयं पूर्णतया निश्चेतुं न पारयामो यदिदं साहसं वा भ्रान्तिर्वेयम्? प्राक्तनैर्जनैः स्वप्रशंसार्थमेव परलेखस्थसन्दर्भः स्वलेखान्तर्निवेशितः, परमधुना निर्दिश्यमानेन तु ईषद्भेद ⌒ कृतः। सोऽयं यत् तेनाऽन्यदीयरचनायाः स्वामी स्वसम्प्रदायस्वामी कृतः कदाचित् तत्प्रशंसाऽर्थम्। पाठकान् आश्चर्य्यसागरे न प्रक्षिप्य वयमदसीयविवरणं कुर्म्महे। पाठकाः प्रणिधानेन पश्यन्त्विमां लीलाम्। तथाहि—

आर्यसमाजो नामाऽर्वाचीनसम्प्रदायः सम्प्रदायान्तरापेक्षया विशिष्य प्रसारं प्राप्नोत्। विशेषतः पञ्चनदे। तस्येदं कारणं यदत्र स्वातन्त्र्यं पर्य्याप्तं वर्त्तते

सौविध्यञ्च । कामं तत्कृत्यमार्यसमाजविरुद्धमपि कथं न भवेत्; परं यदि तत्र सनातनधर्मविरुद्धता प्रत्यक्षतया × दृश्येत, स्वैराचारिता चाखिलदृयीक्रियेत; तदा तदार्यसमाजसम्मतमेव विज्ञायते । एतस्यैकमुदाहरणं गृह्यताम्—'विधवाविवाहः सनातनधर्म्मतस्तु विरुद्ध एव; परमार्यसमाजतोपि विरुद्धः । आ० स० प्रवर्त्तकेन स्वा० दयानन्देन सत्यार्थप्रकाशसंस्कारविध्यृग्वेदादिभाष्यभूमिकासु स द्विजानां कृते गर्हितो मतः । परं तत्र सनातनधर्म्मस्य स्पष्टं विरोधः; तर्हि आर्य्यसमाजात् तस्य (विधवाविवाहस्य) ईषद्विरुद्धत्वेऽपि 'नियोगप्रवर्त्तनार्थं तस्य प्रथमसोपानत्वात् तद्विधानेनापि ❀ आर्यसमाजिकताऽन्नता ज्ञायते । अथ च स स सम्प्रदायस्तदा सम्यक् प्रचलति, यदा तत्प्रचालकस्य प्रशस्तिप्रकर्षसन्निकर्ष ˘ क्रियेत एतदेव विविच्य आर्यसमाजप्रचालकस्य स्वा० दयानन्दस्य तदनुयायिनः कदाचित् श्रीमत्परमहंसपरिव्राजकाचार्य्यतामुद्घुष्य कदाचिद्दषिमहर्षितां निर्माय, कदाचित्तदीयदेशसेवां निरुच्यैवं विविधाभिर्विधाभिस्तत्प्रशसाप्रकर्षं प्रसारयन्ति ।

अत्र वयं तेभ्यो नेर्ष्यामो यत्-ते एवं कथं कुर्व्वते, कुर्य्युः । सर्व्वैः स्वोदरदरीपूर्त्तिं ˘ कथञ्चित् कार्य्यैव । यदि ते सनातनधर्म्मणः ÷ 'पोपान्' 'पाखण्डिन उदरम्भरिणश्चामनन्ति; तर्हि तैरपि स्वोदरपूर्त्तिः कथं क्रियते विविच्य ते ❀ ईदृशा दिशाऽऽन्दोलनानि जनयन्ति यद्-जनता जानाति यन्नेमे उदरम्भरिणः । ते वेदप्रचारार्थं लक्षशो रूप्यकाणामावश्यकतोद्घोषणं कुर्व्वते । जनतापि च तद्युक्ततामवैति- अत एव ददाति । परं तत् सुन्दरप्रकारेण तेषामेवोदरं प्राप्नोति । वेदप्रचारोऽयमेव भवति यत्-सनातनधर्म्मिभ्य ˘ 'पोप' पाखण्डि-भोजनभट्टादिपदव्यो वितीर्य्यन्ते, ब्राह्मणेभ्यश्च अपशब्दा ˘ प्रदीयन्ते । य एव भजनोपदेशको वा व्याख्याता वा, यथाऽधिकमपशब्दप्रदानकुशलः, स तावत् सम्मन्यते । एवं सुन्दरप्रकारेण तत् सङ्गृहीतं धनं तेषु विनियुज्यते । तद्रूप्यकस्य च कृत्रिमप्यकृत्रिममिव प्रतीयमानं व्ययविवरणमपि सुन्दरप्रकारेण विशदीक्रियते येन जनतायाः सन्देह एव न तिष्ठेद् यद्अस्मद्रूप्यकाणां दुरुपयोगो जात इति ।

× कर्म्मणि तङ् एवमन्यत्र ।

❀ आर्यसमाजिकता । रूढिशब्दत्वादुत्तरपदस्य न वृद्धिप्राप्तिः । ÷ सनातनधर्मणः शसि रूपम् । ❀ ईदृशा । स्त्रियां क्विनि ।

अस्तु । विषयान्तरमिदमुत्सृज्य पुनः प्रकृतमनुसरामो यत्-ते स्वा० दयानन्दं देशोद्धारकं महर्षिं हिन्दीप्रचारकं जनताहितैषिणञ्च विविधाभिर्विधाभिरनेकविधाभिश्चोपपत्तिभिः साधयन्ति, तस्यैवानुयायिषु एको वर्त्तते कश्चित् श्रीसूर्यकान्तनामा लवपुरीये डी० ए० वी० कालेजे प्रोफेसरो हिन्दीविभागाध्यक्षः, विद्याभास्करवेदान्तरत्नव्याकरणतीर्थ-शास्त्रि-एम० ए० एम० ओ० एल० प्रभृतिपदवीधारी। तेन 'हिन्दीसाहित्य का विवेचनात्मक इतिहास' इति हिन्दी पुस्तकं प्रकाशितम्, यच्च पञ्चनदीयविश्वविद्यालयस्य 'प्रभाकर' हिन्दीपरीक्षायां नियतं वर्त्तते । तत्र तेन तदीये ४२९-४३० पृष्ठे हिन्दीतिहासं लिखता सता हिन्दीभाषायाः प्रवर्त्तकः प्रसारको वा स्वसम्प्रदायप्रवर्त्तकः स्वा० दयानन्द एव साधितः । वयमत्रापि न क्लिश्मो यत्-तेन कथमेवं कृतम्. यतस्सर्व्वे एव स्वस्वसम्प्रदायाचार्य्यान् विशिष्टान् साधयितुं प्रयतन्ते एव । परमग्रे यत् तेन साहसिक्यमाचरितं स्वस्वामिनं प्रशंसितुम, तद् वयं न सहामहे । न च कोप्यन्यः सहिष्यते ।

तदिदं यत्-तेन स्वस्वामिदयानन्दस्य हिन्दीप्रचारकत्वं साधयता तदीयहिन्दीभाषाया आदर्श उपस्थापितः । तत्र तस्य उचितमासीद् यत् स्वा० दयानन्दप्रणीतसत्यार्थप्रकाशसंस्कारविधिऋग्वेदादिभाष्यभूमिकाभ्यस्तदीयवेदभाष्यतो वा तदीयं किञ्चिदुद्धरणमुद्धरिष्यत् । परं तेन तथा न कृतम् । कदाचिदेतदर्थमेव एतत्कृतं स्यात्, यद्-एषु पुस्तकेषु स्वा० दयानन्दस्य या हिन्दीशैली साऽत्यन्तनिकृष्टा । तदीयादर्शोपस्थापनमेव उपहासाय भवेदिति विविच्य वाऽन्यद् वा विविच्य-इति परमात्मा जानाति सनातनधर्म्मि स्वा० दयानन्दमहोदयस्य-यो भारतधर्ममहामण्डलस्य प्राणरूप आसीत्-तस्यैव हिन्दीभाषोद्धरणं स्व स्वा० दयानन्दनाम्ना प्रकाशितम् ।

'सूर्योदय' पाठका महामण्डलपुस्तकपरिचिताः सनातनधर्म्माणश्च जानन्ति यद्-भारतधर्म्ममहामण्डलीयाः स्वा० दयानन्दाः कीदृक् कोकिलकण्ठा आसन् विज्ञानविशारदाश्च । तेषां व्याख्यानमित्थं सुन्दरं रसिकं रहस्यपूर्णञ्च भवतिस्म यत्-सभास्थले जनता सम्मात्येव न स्म । तेषाञ्च पुस्तकान्यपीदृङ्माधुरीच्छुरितानि, यत्र पदे पदे माधुरी प्रवाहः प्रवहन् दृश्यते । तैः स्वपुस्तकेषु या ज्ञानगङ्गा प्रवाहिता तदर्थं वयं गद्गदा भवामः । तेष्वेकं वैशिष्ट्यमासीत् यत्-ते कदापि परमतखण्डनमप्रियरूपेण न कुर्वन्तिस्म, प्रत्युत जनता तु एतदेव जानाति

स्म यद्-एते परमतखण्डनं कुर्वन्त्येव नहि, केवलं स्वमण्डनमेव सुन्दरप्रकारेण कुर्वन्ति। अथ च वादिभ्य ् कठोरशब्दैराक्षेपं ते कदाचिदप्यकुर्वन्नेव नहि। अतएव ते नवशिक्षितमण्डल्या अपि आदरास्पदमभूवन्। श्री पं० कालूराम-शास्त्रिमहोदयोपि वर्त्तते चिरात् सनातनधर्म्मकर्णधारः. परन्तु तदीया नीतिः 'शठे शाठ्यं समाचरेत्, इति वरीवर्त्ति। अतएव तदीयाः आलोचनाशब्दा ् कर्णकटव ् प्रतीयन्ते वादिनाम्, अत एव तदीयानि पुस्तकानि दृढसनातन-धर्म्मणोऽ विहाय नाऽन्य ् पठति। परं महामण्डलीय स्वा० दयानन्दस्य पुस्तकानि नवशिक्षिता अपि प्रेम्णा पठन्ति,* तद्युक्तीश्चाऽवधानेन पश्यन्ति। यदि वयमिदमेव कथयेम यद्-भारतधर्म्ममहामण्डलीया स्वा० दयानन्दा आर्यसमाज-प्रवर्तक स्वा० दयानन्दस्याऽपवादस्वरूपा आसन्, तर्हि नात्राऽतिशयोक्तिर्भवेद् मृषोक्तं वा। आर्यसमाजिकः स्वा दयानन्दो यत्र कटूक्तिवर्षणमकरोत्, सनातन-धर्म्मा स्वा० दयानन्दो वीणाधुरीणां मधुरवाणीमेव प्रावीवहत्। अस्तु।

उक्तपूर्वेण लेखकेन श्रीसूर्यकान्तशास्त्रिणा तस्मिन्नेव स्वकीये 'हिन्दीसाहित्य-विवेचनात्मकेतिहासे' स्व स्वा० दयानन्दस्य हिन्दीभाषोद्धरणमित्थं प्रकाशितं तदीय ४२९-४३० पृष्ठे। प्रागमुना तत्र अवतरणिका प्रारब्धा--'ऋषि ने प्रायः सभी ग्रन्थ हिन्दी गद्य में लिखे हैं, आपकी भाषा अत्यन्त ललित तथा मंजी कसी होती है। उपासनाविज्ञान के विषय में आप लिखते हैं--

'श्री भगवान् रस के सागर हैं, इसी रससिन्धु से बिन्दु लेकर जीव जगत् में अनन्तरसों का विकाश हुआ है। पिता के चित्त में जो पुत्र के लिए वात्सल्यरस, पुत्र के हृदय में जो पिता के लिए श्रद्धारूप रस, पति के चित्त में पत्नी के लिए प्रेमरस, पत्नी के हृदय में पति के लिये मधुर रस, माता के चित्त में जो पुत्र के लिये स्नेह रस, मित्र के चित्त में जो मित्र के लिये एकप्राणतारूप रस, शिष्य के चित्त में जो गुरु के लिये शुद्ध श्रद्धारूप रस, भक्त के चित्त में जो भगवान के लिए भक्तिरस, ये सभी रस, रसरूप आनन्दकन्द सच्चिदानन्द श्री भगवान् की आनन्दधारा से उत्पन्न हुए हैं' साधनचन्द्रिका।

एतदुद्धरणात् पूर्वं लेखकेनाऽस्य सन्दर्भस्य सम्बन्धः स्वस्वामिना योजितो

ऽ स० धर्मणः। शसि रूपम्।

* पु शसि। रूपम्।

यद्--'ऋषि ने प्रायः सभी ग्रन्थ हिन्दी गद्य में लिखे हैं, आपकी भाषा अत्यन्त ललित तथा मंजीकसी होती है'। 'ऋषि ने' इत्यस्य स्वसम्प्रदायप्रवर्त्तके स्वा० दयानन्दे संकेतः। प्रकरणमपि तस्यैव प्रचलद् वर्त्तते-इति तत्पुस्तके द्रष्टुं शक्यम्। ततः स लेखक एतदीयस्तुतावभिधत्ते--'उपयुक्त सन्दर्भ हिन्दी गद्य का आदर्श कहा जा सकता है। प्रत्येकरस के लिए भिन्न २ तथा समुचित शब्दों का प्रयोग किया गया है कि-सन्दर्भ में नाममात्र भी परिवर्त्तन करना उसके सौन्दर्य को नष्ट करना है' ( हिन्दी साहित्य का विवेचनात्मक इतिहास' पृ० ४२९-४३ )

यदा एतदुद्धरणम् अस्य च स्तवनमुक्तपुस्तके पठितं, तदाऽस्माकं सन्देह उत्पन्नो यद्इदमुद्धरणमार्यसमाजिकस्वा० दयानन्दस्य स्यात् किम् ? । मनसा साद्यं दत्तं यद्-नेति। यत आर्यसमाजिक स्वा० दयानन्देन परमात्मन : कृते कदापि 'श्रीभगवान्' इतिशब्दो दत्त एव न-इत्येकम्। अथ च ईदृशी मधुर भाषा तेन कदाचित् प्रयुक्तैव न। असौ तु खण्डनव्यसनमूलकप्रचण्डक्रोधधारी आसीत्; तदीया भाषापि स्वकीयरौद्ररसं पदे पदे पिशुनयति, अत एव काटव-पाटवमेव वहति। तत्र ईदृङ् माधुर्य्यं कुतः प्राप्तम्-इत्यपरम्। ततस्तृतीयं सन्देह-कारणमिदमुपनतं मस्तिष्के यत्-किं 'साधनचन्द्रिका' इति पुस्तकमपि किञ्चिद् आर्यसमाजिक स्वा० दयानन्देन प्रकाशितम् ? स्मृतिं संस्थाप्य, तदीय-पुस्तकमन्विष्य तत्पृष्ठपत्रे तत्पुस्तकानि प्रेक्षमाणोऽहं तत्र नोक्तपुस्तकमुपालप्सि*। अत्र लेखकेन 'साधनचन्द्रिका' इति नाम तु लिखितम्, परं तत्पृष्ठसंख्यापि न प्रदर्शिता न च प्रकाशकनाम-इति पाठकैः स्मर्त्तव्यम्, पुस्तकस्य नाम तु अगत्या देयत्वेना-ऽऽपतितमेव।

ततो मम स्मृतिः समायाता यद्-भारतधर्म्ममहामण्डलीयेन स्वा० दयानन्देन चन्द्रिकान्तानि बहूनि पुस्तकानि निर्म्मितानि। तत्रैव 'साधनचन्द्रिका' भवेत् कदाचित्। ततः स्वपुस्तकालये स्थितानि भारतधर्म महामण्डलीय स्वा० दयानन्द-पुस्तकान्यन्विष्य निभालितं कौतुकम्। तत्र तदीयानि यत्र 'गीतार्थ चन्द्रिका' चरित्र चन्द्रिका, शास्त्रचन्द्रिका, धर्म्मचन्द्रिका, दीनि पुस्तकानि लब्धानि; तत्र 'साधनचन्द्रिका'ऽपि लब्धा।

उक्तहिन्दीपुस्तके उपासनाविज्ञानविषयस्तु निर्दिष्ट आसीद्, न पृष्ठम्, अत

* उपालप्सि लभते लुङि उत्तम पुरुषे।

एव तस्यां स एव विषयो गवेषितः। स प्राप्तः। ततोऽग्रे प्रेक्षमाणोऽहं तस्य ५-६ पृष्ठे उक्तमविकलमेव सन्दर्भं प्रेक्षिषि व्यस्मेषि च। रहस्यं ज्ञातम्। पुस्तकं निहितम्। विचारितश्च यत् किमिदं 'साहसं' वा स्याद् 'भ्रान्ति' र्वा ?। कदाचिद् भ्रान्तिर्जाता स्यात् तस्य लेखकस्य। यत उभयोरेव स्वामिनोर्नामसादृश्यम्। यदि साहसमात्रमभविष्यत्, तर्हि स 'साधनचन्द्रिका' पुस्तकस्य नामैव नार्पयिष्यत्। परं पुनरपरोऽयं विचार ँ प्राप्तो यत्-कदाचित् साहसं स्यात् स्वाचार्य्यप्रशस्त्यै। यदि स सत्यार्थप्रकाशादिनामाऽदास्यत्; तदा रहस्यभेदे सति तदीया महती दुरवस्थाऽभविष्यत्, अधुना तु स स्वभ्रान्तिव्याजमपि कर्तुं शक्तः कथयितुञ्च शक्तो यद्-मया तु पुस्तक नाम दत्तमेव, अतो मम नामभ्रमो जातः। एवं तेन 'साधन चन्द्रिका' इति नामैतदर्थं स्याद् यद्-जनताऽनुमास्यति यद्-आर्यसमाजिक स्वा० दयानन्देनापि बहूनि पुस्तकानि प्रणीतानि; तेष्वेव एतदपि किमपि पुस्तकं स्यात्। अद्यत्वे जनता वर्तते प्रमाणानां सत्यतादर्शने कुम्भकर्णस्यापि पितामही, साऽऽर्यसमाजद्वारा लिखितानि प्रमाणानि परीक्षते एव न यत् किममुकामुकप्रमाणानि तत्तत्पुस्तके सन्त्यपि नो वा;अथवा तत्पुस्तकस्यैव सत्तापि वर्त्ततेऽथवा न। सरगङ्गारामसोसायटी' द्वारा 'विधवाविवाह प्रमाण' ट्रैक्ट प्रकाशनं सञ्जायते। तत्र ईदृशान्यपि पुस्तकान्युल्लिखितानि, येषां सत्तापि सन्दिग्धा, प्रत्युत असत्तैव निश्चिता। केवलं प्रमाणमात्रमुद्धृतं दृष्ट्वा आर्यसमाजसंस्था तद् विश्वास्यं मन्यते।

एवमत्रोक्तलेखकेनापि दूरदर्शितया विचारितं स्याद् यदस्मदीयमिदं प्रमाणं प्राक् तु केनापि परीक्ष्यतैव न; तत्र यदि कश्चिदनुसन्धाता उपालप्स्यतेऽपि यदिदमार्यसमाजिकस्वा० दयानन्दस्य नास्ति, किन्तु सनातनधर्म्मिस्वा० दयानन्दस्येति; तदा तत्रोत्तरिष्यते यदस्मद्भ्रान्तिर्जातेति।

अत्र उक्तलेखस्य नामसादृश्येन भ्रान्तिस्तु सम्भविनी न प्रतीयते, यतो य एतावदनुसन्धानविशारदो य ँ खलु तुन्दिलं हिन्दीसाहित्येतिहासं प्राणैषीद्, यश्चैतावद् दीर्घमनुसन्धानमकार्षीत, यश्च आर्यसमाजप्रसिद्धकालेजस्य 'प्रोफेसरः' शास्त्री, M. A. M. O. L. पदभूषितश्च, इतो विद्याभास्करो वेदान्तरत्नं व्याकरणतीर्थो हिन्दीविभागाध्यक्षश्च, स एतदपि न जानाति यद्-अस्मत्सम्प्रदायाचार्यस्य स्वा० दयानन्दस्य कानि पुस्तकानि, तस्य च पुस्तकानि कुत्र प्रकाश्यन्ते इत्यश्रद्धेयम्।

साधनचन्द्रिकाया अभ्यन्तरे तु स्वामिदयानन्दस्य नामैव न लिखितम्,

केवल तस्य मुखपृष्ठ एव "श्रीस्वामीदयानन्दविरचित" इति लिखितम्, तत्र च भारतधर्ममहामण्डलस्य शास्त्रप्रकाशकविभागद्वारा प्रकाशित काशी, इति स्पष्टं लिखितं वर्त्तते । किं य एतावदनुसन्धानविशारदो यद्-अन्धकारे स्थितमपि हिन्दीतिहासं प्राचकाशत्; स एतदपि न जानाति यद्-आर्यसमाजिकस्वा० दयानन्दस्य काशीस्थभारतधर्ममहामण्डलेन सह कः सम्बन्धः तस्य पुस्तकानि तु वैदिकयन्त्रालय अजमेर' द्वारा परोपकारिणीसभया प्रकाश्यन्ते । सनातनधर्म्मप्रसिद्धसंस्थाभूते काशीस्थभारतधर्ममहामण्डले तेषां प्रकाशनं * कथं भवितुमर्हेन् । इति यो न जानीते सर्व्वसाधारणीमपि वार्त्ताम्; तेन 'हिन्दीसाहित्यस्य विवेचनात्मक इतिहास एव कुतो लिखितः स्यादापातज्ञानधारिणा । तत्रत्यं सर्व्वमप्येवं प्रकारेण अविश्वास्यं वा भवेत्; परकीयनिबन्धानां कौशलेनाऽपहरणं वा भवेत् । किं पुस्तकान्यपश्यन्त्या हिन्दी जनताया व्यामोहार्थमेवेदं साहसिक्यं स्वस्वामिप्रशंसनार्थं नाऽवलम्बितं स्यात् ? अन्यथा आर्यसमाजस्वामिनस्तु हिन्दीभाषात्यन्ततुच्छा वर्त्तते इति तद्वेदिनामपरोक्षमेव ।

अथ च तेन यत्-स्वपुस्तकानि हिन्दीभाषायां प्रकाशितानीत्युच्यते, तत्र न हिन्दी प्रेमवशात्, किन्तु तत्रापि स्वार्थ आसीत्, सोऽयं यद्-जनतायां स्वमतस्यप्रसारः । यतः स गुर्जरादिदेशीय आसीत्, तद्भाषायां यदि स्वकीयविचारान् प्राकटयिष्यत्, तर्हि ते ऐकदेशिका अभविष्यन्, हिन्दीभाषिकाया हिन्दीवेदिन्याश्च जनताया बहुसंख्यावत्त्वादगत्यैव तेन स्वमतप्रचारार्थं हिन्दीभाषाऽवलम्बिता । आर्यसमाजिकास्तु मन्यन्ते यत्-तेन हिन्दीभाषा लिखितैव न स्वपुस्तकेषु, किन्तु नियुक्तैः पण्डितैरेव हिन्दीभाषायां तदीयभाषाया अनुवादः कृतः । एवं च तस्य हिन्दीभाषायाः कोऽप्यादर्शो दातुमेव न शक्यते । एतेन तस्य हिन्दीजन्मदातृत्वं प्रसारकत्वं वाऽप्यपास्तम् ।

यदाऽधुना सिद्धं यद्-उक्तगद्यं महामण्डलप्राण स्वामि-दयानन्दस्य, तदा ये आर्यसमाजिकाः प्रागिदं गद्यं स्वामिनोऽवगम्य तत्प्रशंसां कुर्व्वन्तः स्युः, अधुना त एवेदं कस्यचित् सनातनधर्म्मणो गद्यमवसाय एतस्माज्जुगुप्सिष्यन्ते कथयिष्यन्ति

---

* इतश्च 'साधनचन्द्रिका' इति पुस्तकं १९८ वैक्रमाब्दे प्रकाशितम् इतश्च तस्य प्रथमावृत्तिः । इतश्च तस्मिन् 'अवतारोपासना' दयः सनातनधर्मविषयाः सन्ति । कथं न दृष्टिः पतिताभवेदत्राऽऽलंचक्रस्य ? × प्राचकाशत् । ऋत्विादुपधाह्रस्वनिषेधः ।

च यद् साधारणं वर्तते गद्यमिदम्, काऽत्र विशेषता ? इतीयमपि तेषां साम्प्रदायिकदृष्टिर्वर्त्तते। अस्तु।

एवं यदमुष्य लेखकस्य साहसिक्यं सिद्धम्, तर्हि तु महद् भयमुपस्थितं ज्ञेयम्, तदिदं यत्—समाननामवतोर्भिन्नभिन्नयोरपि प्रणेत्रो ˘˘ प्रकाशितपुस्तकेषु महद् वैषम्यं वादविवादश्च स्याद् यद्—मदीयेयं रचना, मदीयेयं रचनेति। कदाचिद् आर्यसमाजे जैमिनि वेदव्यास वसिष्ठमनुप्रभृतिनामस्थापनस्येदमेव रहस्यं भवेद् यद् इमेऽपि स्वरचनां निर्म्मास्यन्ति प्राक्तनानामपि जैमिन्यादीनां रचना निर्म्मिताः, ततश्शताब्द्युत्तरं जना जानीयुर्यद्—जैमिनि·वेद व्यासादिमतमप्येतदेवासीद्यद् आर्यसमाजस्य। अन्यानि च तत्सदृशानां जैमिन्यादीनां यानि पुस्तकानि दृश्यन्ते, तानि सनातनधर्म्मभिरेव प्रणीतानि स्युः स्वार्थसिद्ध्यर्थम्।

एवं तु भारतधर्म्ममहामण्डलेनापि स्वस्वा० दयानन्दप्रणीतपुस्तकानि अरक्षितान्येव मन्तव्यानि। यतश्शताब्द्युत्तरमार्यसमाजिकैः यदि आर्यसमाजो जीवितः स्थास्यति अयं प्रचारोऽपि कर्तुं शक्यो यदिमान्यपि आर्यसमाजिक स्वा० दयानन्द प्रणीतान्येव पुस्तकानि। यत्रात्र उभय सम्मतोंशः, स आर्यसमाजिकस्वा० दयानन्दस्य। यश्च सनातनधर्म्मसिद्धान्तो दृश्यते, स सनातनधर्मिभिस्तत्र प्रक्षिप्तः तदा ज्ञातव्यं कीदृश्यव्यवस्थाऽऽपतेत्। एतदादिक त्रुटीनां जनतायाः समक्षं स्थापनायत्र अस्माकमवतारोऽजनि। आशासेऽन्येऽपि जना अत्राऽस्मत्साहाय्यं कुर्वन्तु, येनेयं दुष्परिपाटी संस्कृतसाहित्यतो व्यपगच्छेत्। अन्यथा महान् विवादो जायेत यदयमस्य लेखो नास्ति किन्तु मम। अधुना एतदुद्धरणस्याऽऽर्यसमाजिकस्वा० दयानन्देन सम्बन्धयोजने श्रीयुतसूर्य्यकान्त शास्त्रिणः साहसं वा स्याद् भ्रान्तिर्वा इत्यस्योत्तरपक्षे वयं पाठकानेव स्थापयामः।

[ २ ]

द्वितीय आदर्शोऽपि द्रष्टव्यः। 'सूर्य्योदये' १४।४ ५ अङ्के १०२ पृष्ठे श्रीचिरञ्जीवशास्त्रिसारस्वतमहाशयस्य 'अहोभाष्यम्' इति लेखो दृष्टः। तस्य प्रथमपृष्ठस्थोपान्तिमपङ्क्तिषु—'स्वाध्यायस्य कथा दूरापेता, यदि नाहं प्रमाद्यामि तर्ह्येतदपि कथयितुं पारयामि यदस्मासु बहुभिस्तु तस्य सम्पूर्णमहाभाष्यस्य दर्शनमपि न कृतं स्यात्। कैश्चिच्च औपरिष्टं पुस्तकबन्धनसौन्दर्य्यमात्रं दृष्ट्वा तत्पृष्ठपरिवर्तनकष्टमपि न स्वीकृतं स्यात्। कैश्चिच्च कृतेऽपि पृष्ठपरिवर्तने तत्र मस्तिष्कप्रवर्तनं तत्रापि

व्याकरणसिद्धान्तगवेषणाप्रयासश्च न कृतः स्यात्। हा! किमस्माकमयमेव शब्द-शास्त्रपाण्डित्याऽम्बरः? कैश्चन विवेकिभिस्तु महाभाष्यं भिन्नसाम्प्रदायिकानां सम्पत्तिरिति कथं वयं तत्र मस्तिष्कं प्रवर्तयेम इति - विचार्य तदुपेक्षितम्'—अयं सन्दर्भो दृष्टः।

अयं सन्दर्भः खलु संस्कृतसंसारे प्रथितयशस्केन श्रीदीनानाथशर्म्मशास्त्रि-सारस्वतमहोदयेन प्रणीताद् अयोध्यास्थ 'संस्कृत' पत्रस्य अष्टमाब्दीयत्रयोदशसं-ख्यायाम् 'एव' 'संस्कृतरत्नाकरे' ५ मवर्षीय ७-८-९ संख्यासु' प्रकाशिताद् 'वेदाध्ययनाध्यापनप्रचारः' इति निबन्धाद् गृहीतः। उक्तपङ्क्तयः 'संस्कृतपत्रस्य' ८।१३ नवमपृष्ठीय प्रथमस्तम्भस्य तृतीयपङ्क्तित आरभ्य ११ पङ्क्तिपर्य्यन्तम् उद्धृताः।

ततः 'सूर्योदय' स्य १०४ पृष्ठे 'हन्त! भारतवर्ष! त्वदीयानां पुत्राणामेषा दशा, अहह यत्र······इति डिण्डिमो जोघुष्यते स्म'····इतिपङ्क्तिः संस्कृत' पत्रस्य तस्मादेव लेखाद् अष्टमपृष्ठीय प्रथमस्तम्भस्य ६–७–८ पङ्क्तिभ्यो गृहीता।

एवमेतल्लेखान्ते १०५ पृष्ठे 'सूर्योदये' 'ये······परीक्षोत्तीर्णतामात्रेणैव यावत्कर्त्तव्यस्य समाप्तिं मत्वाऽग्रे किमपि स्वकर्त्तव्यमनाकलयन्तोऽध्यापनस्थानानां गवेषणे निरता भवन्ति। वयमत्रापि न द्विष्मो यत्तेऽध्यापनस्थानानि कथं गवेषयन्ति अवश्यं गवेषयन्तु। परं किमन्तिमपरीक्षोत्तरणमात्रेणैव कर्तव्यस्येतिश्रीर्जायते?··· ये परीक्षाग्रन्थमात्रविलोकनप्रवणास्ते कदापि न विचारयन्ति यद्—अस्माकमन्तिम-प्रतिष्ठास्पदं महाभाष्यमपि वर्त्तते, वयं तत्र प्रवृत्तिं कथं न विदध्म इति"

अयं पाठोपि उक्तलेखकलेखादेव 'संस्कृत' पत्रस्य तत्संख्यायाः सप्तमपृष्ठस्थ-द्वितीयस्तम्भस्य पं० ३३ तः, अष्टमपृष्ठस्य च १–२ पङ्क्तित उद्धृतः। अधुनाऽयं प्रश्नो यत् श्रीदीनानाथशास्त्रिसारस्वतमहोदयेन इमाः पङ्क्तयः श्रीचिरञ्जीव-शास्त्रिसारस्वतलेखादुद्धृत्य स्वलेखे निवेशिताः अथवा श्रीचिरञ्जीवशास्त्रिसारस्व-तेन उक्तसारस्वतमहोदयस्य लेखादुद्धृत्य स्वलेखे निवेशिता उक्तपङ्क्तयः?। प्रश्न एतदर्थम्, यदुभावपि शास्त्रिणौ, उभावेव च सारस्वतौ। श्रीदीनानाथशर्म्मशास्त्रि-सारस्वतमहोदयेनैव उक्तपङ्क्तयः श्रीचिरञ्जीवशास्त्रिसारस्वतलेखाद् गृहीताः, तर्हि श्रीदीनानाथशास्त्रिसारस्वता भविष्यद्-दर्शिनः सिद्ध्यन्ति, यतस्तेषां लेखः २।४।३८ तिथौ प्रकाशितः, श्रीचिरञ्जीवशास्त्रिसारस्वतस्य च लेखः २०।१।३९

तिथौ नवमासोत्तरं प्रकाशितः । प्रत्युत श्रीदीनानाथशास्त्रिमहोदयेनोक्तलेखोऽमृत-सरस्थ 'संस्कृतसाहित्यसम्मेलने' २८ १२.३७ तिथौ वाचनाय प्रेषित इति 'संस्कृत' पत्रे ८।१३, 'संस्कृतरत्नाकरे' च ५।७ तदीयटिप्पण्या प्रतीयते । इत्थं यदा नवीन-सारस्वतमहोदयस्य ध्यानेपि नासीदयं लेखः; तदापि तदीयाऽन्तस्तलमाविश्य श्रीदीनानाथशास्त्रिसारस्वतमहोदयेन कथमुक्त-पङ्क्तयो निष्कासिता इत्याश्चर्यमाभाति नः । यत ईदृशीघटना कदाचिद् योगिजनसमये स्यात् सम्भविनी । परमद्यत्वे तु पञ्चकलाऽग्रे भाविवृत्तमपि ज्ञातुं न शक्यते ? ।

यदि श्रीचिरञ्जीवशास्त्रिसारस्वतेनैव उक्त सारस्वतमहोदयलेखादुद्धृता पङ्क्तयो विना तन्नामनिर्देशम्, तर्ह्येतदपहरणं सिध्यति । कदाचिद् नवीनसा-रस्वतस्य प्राचीनसारस्वतवाक्यसम्पत्तावपि उत्तराधिकारत्वाधिकारः स्याद्, अत्राहं किमपि वक्तुं नोत्सहे ।

प्रसक्तानुप्रसक्तं श्रीचिरञ्जीवशास्त्रिणोऽन्यदप्येकं वचनं विविच्यते । उक्तमहोदयेन लिखितम्—"तत्राऽस्माभिः 'कौमुदीकण्ठलग्ना चेद् वृथा भाष्ये परिश्रमः' इत्यादयोऽनर्गलप्रलापाः क्रियन्ते" इति ।

अत्राऽस्माकमीषदापत्तिर्वर्त्तते, सा खल्वियं यद्-अयं प्रलापो नास्ति, नचाऽर्थवादः, किन्तु वास्तविकी वार्त्ता । श्रूयतां सारस्वतमहोदयेन । अस्य श्लोकस्य पाठ इत्थम्—

'कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः ।
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः' ॥

अत्र लाटानुप्रासः, शब्दार्थयोः पौनरुक्त्ये सति तात्पर्य्यमात्रभेदात् । अस्येदं तात्पर्य्यं यद्—यदि कौमुदी कण्ठस्था वर्त्तते; ततो भाष्ये परिश्रमकरणस्या-ऽऽवश्यकता न भविष्यति; तत्खलु शीघ्रमेव ज्ञाने प्राप्यते । यदि कौमुदी कण्ठस्था न वर्त्तते; तर्हि भाष्ये कृतोपि परिश्रमो व्यर्थो भविष्यति, यतस्तदा भाष्यस्य ज्ञानं न भविष्यति । तस्य कारणमेतद् यन्महाभाष्यं प्रथमं सोपानन्तु नास्ति, इदं वर्त्तते-ऽन्तिमसोपानम्—इति प्राचीनसारस्वतपङ्क्त्याऽमुना नवीनसारस्वतेनापि स्वीकृतम् । प्रथमं सोपानं लघुकौमुदी, द्वितीयं सोपानं मध्यकौमुदी, तृतीयं सोपानं वर्तते सिद्धान्तकौमुदी, अन्तिमं सोपानं महाभाष्यम् । यदा कौमुद्याः पूर्णज्ञानं भविष्यति, ततो महाभाष्ये कापि कठिनता न भविष्यति, यतो हि कौमुदीद्वारा व्याकरणविषयकं

साधारणज्ञानं तु जायते एव, ततो विशिष्टज्ञानं महाभाष्येण भवति। नहि विशिष्टज्ञानं साधारणज्ञानं विना भवितुमर्हति कदाचित्।

महाभाष्यलब्धप्रवेशानां × ज्ञातं स्याद् यत्–तस्य प्रत्येकसूत्रे वार्त्तिके वाऽग्रिमाण्यपि वहूनि सूत्राणि पूर्व्वपक्षोत्तरपक्षेषु समुपस्थाप्यन्ते। येन प्राक् कौमुद्येव न पठिता, स महाभाष्यं पठन्नपि अग्रिमसूत्राणां ज्ञानाऽभावात् तत्र तत्र किं ज्ञानं कर्त्तुं शक्नुयात्?। आद्यमाह्निकद्वयमेव दृश्यताम्, तत्र प्रथमं तु पस्पशाह्निकं भूमिकामात्रमेव। द्वितीयञ्च प्रत्याहाराह्निकम्। अष्टाध्यायीसूत्राणां व्याख्यानन्तु तृतीयाह्निकादेवाऽऽरभ्यते। इतश्च प्रथमनवाह्निके अष्टाध्याय्याः प्रथमाध्यायस्य प्रथमपाद एव केवलमुपनिवद्धः, अग्रिमे च नवाह्निके प्रथमाध्यायस्य द्वितीय तृतीयचतुर्थपादमात्रमेव सन्दब्धम्। तथापि आद्ये आह्निकद्वये, इतश्चाऽग्रे प्रथमाध्यायमात्रेऽपि दूरदूरस्थान्यपि सूत्राणि दर्शितान्येव। तत्र प्रत्याहाराह्निके एव वर्णैकदेशग्रहणाग्रहणपक्षशास्त्रार्थे हकारद्विरुपदेशाधिकरणे, अण्प्रत्याहारावधिप्रतिपादकाधिकरणे एवमन्यत्र चेद्रष्टुं शक्यम्।

यदि तत्र कौमुद्याः पूर्णज्ञानं प्रत्युतकण्ठस्थताऽपि च न स्यात्; तदा तन्महाभाष्यस्थलं कथमधिगन्तुं शक्येत?। यद्येवं सिद्धा प्रयोजनीयता कौमुद्याः, तर्हि 'कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः' अयं कथमनर्गलालापः स्यात्। ईदृशस्य लाटानुप्रासस्याऽन्यदुदाहरणं गृह्यताम्––'पूत कुपूत तो क्या धनसञ्चय। पूत सुपूत तो क्या धनसञ्चय' तर्हि किं श्रीमानेतदादिकमनर्गलप्रलापं मंस्यते?।

कौमुद्या तु स लाभो जायते य ्ँ काशिकादिभिरपि न भवति। तत्र कारणं यत्–कौमुद्यां प्रक्रियाक्रमेग व्याकृतिर्निर्दिष्टा, काशिकादिपु चाऽष्टाध्यायीक्रमेण। यावत् संस्कृतभापा जनानां मातृभापा न भवति, तावत् काशिकादिभिर्व्याकरणज्ञानं न भवितुमर्हति सुगमतया। काशिकयाऽष्टाध्याय्या वा महाभाष्येण वा तदा भवति लाभो यदा संस्कृतभापाऽस्मन्मातृभापा स्यात्; तदा लक्ष्यस्य ज्ञानवशादस्माभिरपेक्षितं लक्षणमष्टाध्याय्या महाभाष्येण वा प्राप्तव्यम्। परं यावत् संस्कृतभापाऽस्मन्मातृभापा नास्ति, अस्मत्पार्श्वे लक्ष्यभूताश्शब्दा एव न सन्ति; तावदष्टाध्यायीमहाभाष्यैर्लाभस्तु शशविपाणायित एवाऽद्यतनकाले। तत्र तु लक्ष्यलक्षणोभयप्रदर्शिनी प्रक्रियानुसारिणी कौमुद्येव लाभदायिनी भवितुमर्हति। अत एव

× प्रवेशानाम्, अत्र षष्ठ्यर्थं न भवति।

कौमुदीनिन्दकेनाप्यार्यसमाजिक स्वा० दयानन्देन कौमुदीसरण्यां लाभान् विभाव्य आख्यातिकनामिक-सन्धिविषयकारकीय–सामासिकसौवराऽव्ययार्थपारिभाषिकादयो भिन्ना भिन्नाः कौमुदीसरण्यनुगता भागा निर्म्मातुमापतिता । अष्टाध्यायीमहाभाष्यप्रशंसकेनापि ।

कौमुद्या च व्याकृतेः सामान्यज्ञाने जाते पुनः को निषेधति युष्मान् यद्-महाभाष्यं पठनीयमेव न । यदि भवन्तो विशिष्टज्ञानञ्चिकीर्षवः; तर्हि अवश्यं महाभाष्यादिकं पठन्त्वेव । परमद्यत्वे जनास्तु व्याकृतेः सामान्यज्ञानमपि वृत्तावन्तरायं मन्यन्ते । व्याकृत्यारम्भिकज्ञाने तेऽल्पसमयव्ययमपि महतीमापदमिव पश्यन्ति, का कथा खलु बहुसमयसाध्यमहाभाष्यपठने तेषाम् । तेन श्रीमता ज्ञेयमिदं यद्–महाभष्यज्ञानाद् ऋतेऽपि ( ऋतेयोगे पञ्चम्येव त्रिमुनिस्वीकृता, न द्वितीया ) संस्कृतभाषा तत्त्वविमर्शको भवितुमर्हति जनः कौमुदीद्वारा । महाभाष्याद्यधिकज्ञाने त्वधिकमेव फलमित्यत्र तु न कस्यापि विसंवादः । परं महाभाष्यस्थाऽपेक्षित-लोकौपयिकव्याकृतिं दुग्धवानेव दीक्षितः संक्षिप्य, अत एतावन्मात्रेणापि पर्य्याप्तं कार्य्यं निर्व्वोढुं शक्यते । अधिकज्ञानमपेक्षितञ्चेत् कामं महाभाष्यपञ्चाशीत्याह्निकसञ्चरणं क्रियतां नाम । परं तत्प्रथमसोपानानां निन्दा ⁂ मा कारि । अधिकं विस्तरभियाऽनिवेद्यात्रैव विरम्यते ॥

## शारदाऽऽवाहनम् ।

भगवति शारदे ! द्रुतमेहि ।
दुरित–दुर्ग-विनाशि दर्शनमभय दायिनि ! देहि ॥
द्वेष–दैन्य–दरिद्रताया द्वारमाशु पिधेहि ।
शिल्प-शास्त्र–कलासु कौशलमीशि ! जननि ! विधेहि ॥
चरण मूलमुपेतमीश्वरि ! मामशरणवेहि ।
एहि वाणि ! "विनोत" चेतसि वसतिमाशु विधेहि ॥

—सहित्याचार्य श्रीवासुदेवद्विवेदिनो "विनीतस्य"

⁂ माकारि । माङि कर्मणि लुङ्, अटोऽभावः ।

# आयुर्वैदिकदृष्ट्या गङ्गाजलस्य महत्त्वम्।

अनु० ईश्वरशर्म्मा 'मोहनः'

वैज्ञानिकेन आयुर्वेदिकेन वा दृष्टिकोणेन यदा गङ्गोदकं निरीक्षामहे, तर्हि ज्ञायते यत् तस्मिंस्तथा तदीयमृत्तिकायां शरीरपोषणस्य स्वस्थीकरणस्य चाऽपूर्व्वशक्तिर्वर्व्वर्ति। बृहतां विज्ञानवेत्तॄणां तथा पाश्चात्यविदुषाञ्च मतं यद्—गङ्गाजले शारीरकशक्तिवर्द्धनस्य अद्भुता क्षमता। रोगिणां × तथा दुर्वलपुरुषाणां 'टानिक' भेषजपानस्य नास्त्यावश्यकता। केवलं गङ्गाजलपानेन तत्स्नानेन वा शरीरे पूर्णबलं प्राप्नोति। गाङ्गजलपानेन अजीर्णरोगः, अजीर्णाज्वरस्तथा संग्रहणी, राजयक्ष्मा, चिरन्तनः श्वासरोग एतदादिकाः सर्व्वे रोगा नश्यन्ति। गाङ्गजलेन स्नानाच्च मस्तकस्य समस्तरोगाणां तथा चर्म्मरोगाणामपि नाशो भवति।

उक्तकथनस्य सत्यता महाविदुषां सुप्रसिद्धायुर्वेदाचार्य्याणां तथा ख्यातनाम्नां डाक्तराणां स्वास्थ्यनिरीक्षकाणाञ्च रासायनिकपरीक्षणेन सिद्धा। ये जना अद्यापि गङ्गाया जलमविश्वासदृशा पश्यन्ति स्म, तेऽपीदानीमदसीयजलस्य विलक्षणशक्तौ नतमूर्धानः संवृत्ताः। ग्रन्थिक (प्लेग) विसूचिका (हैजा) दुर्वात (मलेरिया) प्रभृतयः कठिनाः सांक्रामिकरोगाः कुत्सितस्थानस्य कुत्सितस्य जलस्य च सेवनेन भवन्ति। परन्तु गांगवारिसेवनादिमे सर्व्वे रोगा अल्पेनैव कालेन अदृश्यतां यान्ति, यतो गाङ्गजलं कदापि न दुष्यति ❋। न चापि गंगाजलेन कदापि किंविधाः कीटा उत्पद्यन्ते, प्रत्युत गङ्गाजले रोगकीटत्यागात् ते सर्वेऽपि म्रियन्ते, गंगाजले ईदृशी अद्भुतशक्तिः। एतदर्थमेव महर्षय एवमायुर्वेदशास्त्रविदो गंगाजलं तुष्टुवुः। गंगाजले माधुरी तथा मनोहारिता विद्यते। रोगकीटाणूनां नाशनशक्तिः स्वच्छता, मेध्यतापवित्रतादयोऽनेकगुणाश्च सन्ति, येन वैज्ञानिकविद्वांसो गङ्गाजलस्य चमत्कारं दृष्ट्वा तत्र मुग्धा भवन्ति।

डा० हैकिन्सेन गंगाजलं सम्यक् परीक्षितम्, स्वकीयानुभवे च तेन विसूचि-

× रोगिणाम्, नकारान्तत्वान्नाम्र परकत्वाभावाच्च दोषो न भवति।

❋ दुष्यति। दुषधातुर्दैवादिकः।

काया * कृमयो गंगाजले क्षिप्ताः, ते च षड्होराभ्यन्तरे एव मृताः। परं यदा तादृक्षा एव कीटाः साधारणजले क्षिप्ताः, तर्हि ते आशातीतसङ्ख्यायां परिवृद्धाः। एतादृशानुभवेन ते एतत्परिणामं प्राप्ता यद्-वस्तुतो गङ्गाजले विलक्षणा रोगनाशनी शक्तिरस्ति।

कियल्लेलिख्येत + अमेरिकायाः सुप्रसिद्धद्राक्तरैरपि सम्बन्धेऽस्मिन् बहुतरं लिखितम्। सर्व्वस्य संसारस्य प्रसिद्धो यात्रिको 'मार्कट्वहनः' स्व 'संसारयात्रायाम्' अलिखद् यद् गङ्गाजलं मया स्वयं परीक्षितम्। अस्मिन् रोगकीटानां नाशनी महती शक्तिः। इदं जलमत्यन्तशुद्धं पवित्रञ्च। एतदेव कारणं यत्-तत्पानेन तत्स्नानेन च अत्यधिकरुग्णमनुष्याणां विविधा रोगा नश्यन्ति। पाश्चात्यवैज्ञानिकातिरिक्तानामायुर्वेदविदामपि च मतं यत्-सर्व्वरोगेषु गङ्गाजलसेवनमतिलाभकृत्। यतो गंगाजले कठिनादपि कठिनरोगाणां हरणे विलक्षणा क्षमतास्ति। एको रोगी य * खलु क्षयश्वासयोर्लक्ष्यमभवन् निराशो भूत्वा हरिद्वारमागात्। तेन केवलं गंगाजलस्यैव दैनिकं पानं तथा समये समये तेन स्नानं कृतम्, यत्कारणात् स स्वोक्त्या सपादमासद्वयेनैव स्वास्थ्यमशिश्रियत्।

जना इदं ज्ञात्वा चित्रीयिष्यन्तेऽवश्यम्, परन्तु एवमेकं नहि, अत्र बहून्युदाहरणानि जाग्रति × यैर्गंगाजलस्य कौतूहलपूर्णशक्तिरनुभूयते। गंगाजलस्य पवित्रताऽप्यनुपमेया। गंगाजलविषये एकेन फ्रांसस्थवैज्ञानिकेन डा० डेरेलेन वैज्ञानिकप्रयोगद्वारा एतत्साधितं यद्-गांगजले विसूचिकाऽतिसार-सङ्ग्रहणीक्षयादि कीटाणूनां नाशनस्य भयङ्करस्फोटक-पूरणस्य च सफलशक्तिर्विद्यते। तेन स्वकीयनूतनाविष्कारे एतदपि प्रतिपादितं यद्-विसूचिकाक्षयादिरोगिणां × कृते गङ्गाजलमत्युत्तमौषधिः। तेन गङ्गाजलीय—कीटाणूनां साहाय्येन एकाऽद्भुतौषधिर्निर्म्मिता यदीयं 'वैक्टीरियो फैज' इति नाम निहितम्। यस्य च वर्त्तमानसमये ईदृक्षाणामेव रोगाणां चिकित्सायै प्रयोग * क्रियते।

गङ्गाजलस्य पवित्रता तथोपयोगिता केवलं धार्म्मिकदृष्ट्यैव नैव; प्रत्युत आधुनिक चिकित्साशास्त्रीयदृशाऽपि तन्मननमनिवार्य्यम्। यत्प्रमाणस्वरूपे 'गुडहेल्थ' नामके आङ्गलभाषिकपत्रे मिस्टर सी० ई० नेलशनस्य लेखोऽस्ति। आंगलिके

× लेलिख्येत, यङि लिङि तङि। * जाग्रतीति बहुवचनम्। × रोगिणाम्, अत्र दीर्घस्य न प्राप्तिः।

'स्टेट्समैन' नामके प्रसिद्धपत्रे 'लीडर' पत्रेऽपि च स प्रकाशितो यद् गंगाया जलस्य पवित्रता सर्वमान्याऽस्ति। अदसीयजले विसूचिकाया दुष्टरोगाणाञ्च नाशनेऽपूर्वशक्तिरस्ति । रोशनलाल वैरिस्टरेण लिखितं यद्–अस्मत्समक्षे एकेन अमेरिकनद्राक्तरेण काश्यां कुत्सितप्रणालीतो द्वित्रबिन्दुमितं कुजलं निष्कासितम्, यस्मिन् शतशो विसूचिकाकीटा आसन् । तच्च जलं गङ्गाजले क्षिप्त्वा दृष्टं यत्–ते समस्ताः कीटाणवो मृताः । अर्थात् गाङ्गजलस्य एकैकेन परमाणुना मलस्य सहस्रशः परमाणून् भक्षयित्वा तत्कालं शोधनं कृतम् । प्रयागस्य एकेन डा० करोलीनामकेन लिखितं यद्मदीयकासश्वासयोश्चिरन्तनो + व्याधिरस्य गङ्गा जलस्यैव प्रतापेन नष्टः ।

गङ्गानदी गङ्गोत्तरीतो निष्क्रम्य मन्दाकिनीपश्चालकनन्दादि ❀ स्वसहयोगिनीर्नदीर्गृहीत्वा विविधासु शिलाजतुप्रभृत्योषधिषु † प्रवहन्ती, तद्गुणाँश्चाऽऽददती × बदरीनाथ–केदारनाथ –देवप्रयाग लक्ष्मणान्दोलिका–हृषीकेशमध्यतो गच्छन्ती हरद्वारस्य सुविस्तृतसमतलभूमिं प्रविशति । एतत्स्थानपर्य्यन्तमस्यां बहवो गुणास्तिष्ठन्ति, ( येऽस्थनां कारणाद् गंगायां गुणान् मन्यन्ते, ते भ्रान्ताः सन्ति, तेषां केवलं खण्डने ध्यानं तिष्ठति ) । अग्रे गत्वा ते गुणा अल्पतामाप्नुवन्ति, यतोऽग्रेऽस्यां सर्व्वप्रकारमलं विष्ठायुक्तप्रणाल्यश्चोत्तरोत्तरमाधिक्येन पतन्ति । अग्रेऽग्रे एतत्संख्या एधते । एतदादिका गंगोदकगुणेषु व्यवधानं कुर्व्वन्ति । एवं तु गंगाजले समुद्रपतनपर्य्यन्तं विशिष्टताऽन्तपर्य्यन्तं यत् किञ्चित्तिष्ठत्येव नद्यन्तरजलापेक्षया, परन्तु ये चामत्कारिका गुणा वास्तविकता च तस्मिँस्तदादिकौषधीनां सम्मिश्रणेनोत्पद्यन्ते; ते प्रायो हरद्वारपर्य्यन्तं सीमिताः । उक्तपूर्व्वाभिः सर्व्वाभिरोषधिभिर्मिश्रीभूय गंगोदकं क्षयसंग्रहणीप्रभृत्यसाध्यरोगान् क्रमशो हर्त्तुं समर्थं भवति । यदीयं प्रत्यक्षप्रमाणं स एव विज्ञो रोगी दातुं शक्तो येन हरिद्वारहृषीकेशादिषु नित्यं गंगाजलपानसौभाग्यं प्राप्तं स्यात् ।

यदि गंगाजले ईदृशी रोगनिवारिणी स्थूलशक्तिर्नाभविष्यत्; तर्हि कः खल्विदं जलं महत्त्वापूर्णममंस्यत × ? एतावन्त ऋषिमुनयो वैद्या द्राक्तरा वैज्ञानिका विद्वांसो देशिका वैदेशिकाश्च गंगाजलस्य अलौकिकगुणान पुस्तकद्वारा

+ व्याधिः पुंसि । ❀ नदीः. शसि । † ओषधिशब्दो भवति, नतु औषधिः। × आददतो । अत्र नुमो न प्राप्तिः । × अमंस्यत । अत्र तकारो न हलन्तः ।

लेखद्वारा भाषणद्वारा च संसारसमक्षं प्रदर्श्य स्वाऽमूल्यसमयं कथमनाशयिष्यन् ? । एतत्कृते प्रसिद्धमेतद्–'गांगं वारि मनोहारि मुरारिचरणच्युतम् । संसारभयसंहारि-पापहारि पुनातु माम् ।' 'औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः' । यदि गंगाजले-काऽप्यायुर्वेदिकसत्ता नाभविष्यत्; तर्हि जना " कथं विफलप्रयासं कृत्वा स्वकीय-धनममूल्यसमयञ्च व्यर्थमकरिष्यन् । 'नह्यमूला जनश्रुति' रित्याभाणक " प्रसिद्ध एव । परीक्षणेण च प्रत्यक्षं स्पष्टं जातम्; प्रत्यक्षे च किं प्रमाणान्तरेण । गुणा एव भवन्ति पूजास्थानम्, अतएव यदि हिन्दवो गंगां पूजयन्ति; तां मुक्तिदायिनीं मन्यन्ते, अमूं × पूतां मम्मन्यन्ते; तर्हि तत् स्थाने कुर्व्वन्ति, काऽऽवश्यकता तेषामिदं विश्वासदूरीकरणस्य, खण्डनमात्रं कृत्वा च स्वाऽऽहोपुरुषिकामात्रप्रदर्श-नस्य । आशासे जानानामिह प्रणिधानं प्राप्नुयात् ।। शम् ।।



## पथिक–गीतम् ।

वीक्ष्य मदति मम श्रान्तं स्वान्तम् ।
निर्झर 'झर्–झर्' ध्वनि-रव-रम्ये,
कोकिल--कलरव---गुंजित---वन्ये,
प्रकृति--नटीनां वेषं शान्तम् ।
वीक्ष्य मदति मम श्रान्तं स्वान्तम् ।
प्रवहति मधुभर--मन्द--समीरे,
हिमकर--शीतल--निर्झर - तीरे,
अलिकुल–संकुल–वञ्जुल–प्रान्तम् ।
वीक्ष्य मदति मम श्रान्तं स्वान्तम् ।
पवनान्दोलित–तर–वानीरे,
पतित–पराग–परागित–नीरे,
शकुलि–सुतानां नृत्यं कान्तम् ।
वीक्ष्य मदति मम श्रान्तं स्वान्तम् ।

—श्रीप्रभातमिश्रः, प्रयागस्थः ।

× अमूम् । स्त्रीलिङ्गस्य अमि

नन्तु निरस्ताज्ञानदशायां कीदृशी प्रतीतिरित्यत्राह--

कार्यकारणयोरनन्यत्वम् ॥१७॥

कारणस्य ब्रह्मणः कार्यस्योपाध्यादेश्चाभिन्नत्वेनैक्याद् एकत्वप्रतीतिः। यद्यप्यज्ञानदशायां जीवाः कारणब्रह्मरूपेणात्मना कार्यब्रह्मरूपस्य परिदृश्यमान-जगतः पृथक्त्वं पश्यन्ति। तथाप्यात्मज्ञानलाभानन्तरं तत्त्वदर्शिनामित्थं बोधः समुपजायते यत्कारण-कार्यरूपयोरात्मजगतोरैक्यमेव। अज्ञानजनन्यविद्या, ज्ञान-जननी च विद्या। विकसति तमोगुणेनाज्ञानं सत्त्वगुणेन तु ज्ञानमिति। द्वैत-प्रतीतौ बन्धने चाज्ञानमेव कारणम्। ज्ञानेनाद्वैतब्रह्मसद्भावसमुदयानन्तरं लभ्यते च परमपुरुषार्थः। धर्म-साहाय्येन संस्कारशुद्धिं क्रियाशुद्धिञ्च विदधतः साधकाः क्रमशश्चित्तशुद्धिं लभमाना आत्मज्ञानं प्राप्नुवन्ति। तदानीमेव जीव-न्मुक्ता अभेदं प्रतियन्ति, अनुभवन्ति च कारणब्रह्मकार्यब्रह्मणोरैक्यम्। यद्यपि घटं पश्यतामज्ञानां तत्स्वतन्त्रत्वे बोधः समुपजायते, तथापि पदार्थज्ञानलाभा-नन्तरं पदार्थज्ञानव्युत्पन्नानां मृत्तिका कः पदार्थः? ततो घटोत्पत्तिः केन प्रका-रेणेति बोधवतां नैव विचिकित्सा मृत्तिकाघटयोरैक्ये। तथा तत्त्वज्ञानिनां जीव-न्मुक्तानामनुभवे कारणब्रह्म कार्यब्रह्म वाभिन्नत्वेनैव विषयो भवतीति॥

यथा च श्रुतौ—

सर्वं ब्रह्ममयं प्रोक्तं सर्वं ब्रह्ममयं जगत्।
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम्॥

नित्य-निर्मलरूपात्मा ह्यात्मनोऽन्यन्न किञ्चन।
अणुमात्रलसद्रूपमणुमात्रमिदं जगत्॥

अणुमात्रं शरीरं वा ह्यणुमात्रमसत्यकम्।
अणुमात्रमचिन्त्यं वा चिन्त्यं वा ह्यणुमात्रकम्॥

ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत्-त्रयम्।
आनन्दं परमानन्दमृते किञ्चिन्न किञ्चन॥

चैतन्यमात्रमोंकारो ब्रह्मैव सकलं स्वयम्।
आत्मनोऽन्यत्तु यन्नास्ति सर्वमात्ममयं जगत्॥

ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमसन्नहि।
ब्रह्मणोऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्न च॥
ब्रह्मणोऽन्यत् तृणं नास्ति ब्रह्मणोऽन्यत् पदं नहि॥ १७॥

कार्यस्वरूपं किमित्यत्राह—

## कार्यं कार्यत्वात् ॥ १८ ॥

कार्यसम्बन्धात् कार्यं ब्रह्मेति व्याह्रियते । व्यक्तावस्थापन्नं परिदृश्यमानमेतज्जगदेव कार्यं ब्रह्म । तत्त्वज्ञानां दृष्टौ तु कारणब्रह्मगताः सच्चिदानन्दभावाः कार्यब्रह्मण्यपि अनुस्यूताः प्रतीयन्ते । तत्रैतावानेव भेदो यत् सच्चिदानन्दात्मकभावत्रयस्य कारणब्रह्मण्यद्वैतरूपेण, कार्यब्रह्मणि त्वविद्याप्रभावादनेकरूपेण तारतम्यत उच्चावचा प्रतीतिः । अतो भावत्रयस्य हेतुत्वेन कारणब्रह्मणि विद्यमानत्वात् कार्यब्रह्मरूपे जगत्यपि भावतारतम्यरूपेण वर्तमानत्वात् तत् कार्यब्रह्मेति गीयते । स्थितिश्च तस्य भावत्रयस्य कारणब्रह्मणि समत्वेनाद्वैतरूपेण च । यद्यपि समष्टिदृष्ट्या कार्यब्रह्मण्यपि भावत्रयस्य तस्य तथैवास्तित्वप्रतीतिः, परन्तु अविद्याप्रभावादद्वैतभावस्य व्यष्टिदृश्ये समत्वेन प्रतीयमानत्वाभावात् कारणब्रह्मणि कार्यब्रह्मणि च भेदप्रतीतिः । वस्तुतस्तु तत्त्वज्ञानदशायामज्ञानविनाशेनोभयत्रापि जीवन्मुक्ताः समत्वेनैव सच्चिदानन्दभावमनुभवन्तीति ॥ १८ ॥

ननु कार्यब्रह्मनियामिकायाः शक्तेः किं स्वरूपमित्यत्राह—

## नियन्तृत्वात् तत्त्वं धर्मस्य ॥ १९ ॥

धर्मस्य विश्वनियामकत्वाद् भगवद्रूपत्वम् । विश्वस्य सृष्टिस्थितिलयानां यथावत् क्रमरक्षार्थं धर्म एव प्रधानं निदानम् । महाप्रलयानन्तरं कारणवारिणि ब्रह्माण्डगोलकोत्पत्तिस्तत्र च ब्रह्मविष्णुमहेशानामाविर्भावेन विश्वसर्गस्ततश्च प्रजापतीनां मानसिकी सृष्टिस्तदनु जीवानां वैजी सृष्टिः । सर्वाणि चैतानि कर्माणि कारणवारिण्यन्तर्निहितसमष्टिसंस्कारस्य धर्मशक्त्यैव सम्पद्यन्ते । तदनन्तरं सृष्टिक्रियातः प्रलयं यावत् तत्सुरक्षा ब्रह्माण्डपिण्डयोः स्थितिश्च धर्मेणैव सम्पाद्येते । तेनैव चाखिलेष्वपि ब्रह्माण्डरूपसौरजगत्सु सूर्यस्य मध्याकर्षणम्, तत्रैव चाखिलग्रहोपग्रहाणां च सूर्यलोकेन सहाकर्षणविकर्षणशक्तिसमता च संसिध्यतः । सूर्यग्रहोपग्रहादिषु आकर्षण-विकर्षण नाम्ना द्वे शक्ती विद्येते । यथाकर्षणशक्तेः प्राधान्ये ह्येको ग्रहो ग्रहान्तरे प्रविश्य विनश्येत्, तथैव विकर्षणशक्तेः प्राधान्ये ग्रहाः स्वस्वस्थानतश्च्युता विनाशमुपगच्छेयुः । तयोः साम्यं सम्पादयन्त्या धर्मशक्तेरेवाऽयं प्रभावो यन्नैवं कदापि जायते । ब्रह्माण्डस्य स्थितिक्रमो यथावत् यथानियमञ्च सततं संसरन्नेवास्ते । यथा समष्टिब्रह्माण्डे स्वधर्मरक्षाबलेन ऋषयो देवताः पितरश्च ब्रह्माण्डं गोपायन्ति, तथैव व्यष्टिस्वरूपदेहपिण्डे जीवानां क्रमोन्नतिः, मुक्तिश्च धर्मेणैव

संजायेते। सृष्टिधर्ममनुसृत्य ब्रह्माण्डस्य प्रकृतिनियमतो जीवानाम्—उद्भिज्जस्वेदजाण्डजादियोनितो जरायुजयोनिं यावत्, जरायुजेष्वपि समुन्नतपशुयोनितो मनुष्ययोनिपर्यन्तं समेधमाना क्रमोन्नतिः समष्टिसृष्टेः धर्मप्रभावाद् एव सम्पद्यते। धर्मस्य सत्त्वगुणवर्द्धकत्वात् जीवानां सदैव क्रमोन्नत्या सत्त्वगुण उत्तरोत्तरं विकासमापद्यते। मनुष्येष्वप्यन्त्यज-शूद्र-वैश्य-क्षत्रिय-ब्राह्मण-कुटीचर-बहूदक-हंस-परमहंसादिस्वरूपतो जीवानां क्रमोन्नतिं सम्पादयतस्तस्य परमपुरुषार्थसाधकत्वम्। समष्टिव्यष्टिसृष्ट्यो र्नियन्तृत्वात् धर्मस्य भगवत्स्वरूपत्वम्। कार्यब्रह्मरूपस्य जगतो भगवद्रूपत्वे तन्नियामकस्यापि तथात्वं स्पष्टमेवेति ॥ १६ ॥

ब्रह्माण्ड-पिण्डधारक-धर्मप्रादुर्भावविज्ञानं परिदर्शयति—

**तमोरजःसाम्ये तद्विकाशः स्थितिमूलकत्वात् ॥ २० ॥**

स्थितिमूलकत्वात् तमोरजसोः साम्ये धर्मप्रादुर्भावो भवतीत्यर्थः। पूर्वमेव धर्मस्य सत्त्वमूलकत्वं सिद्धान्तितम्। अतस्तमोरजसी समत्वेन ह्रासमुपगच्छतः, सत्त्वं च यदा प्रवर्द्धते तदैव सत्त्वमूलकस्य धर्मस्योदयः। स्मर्यते च—

आकर्षण-विशिष्टा या शक्तिः सा राजसी मता।
विकर्षणेन सम्पृक्ता शक्तिर्मे तामसी तथा॥
सामञ्जस्यं विकुर्वाणा तयोः शक्त्यो र्द्वयोरिह।
सात्त्विकी सैव धर्मोऽस्ति शक्ति र्मे नात्र संशयः॥ इति ॥ २० ॥

उपसंहरति—

**तस्माद् ब्रह्माण्डधारकः ॥ २१ ॥**

धर्मस्य स्थितिमूलत्वात् तमोरजसोः साम्य एव तद्विकाशाद् ब्रह्माण्डधारकत्वम्। पूर्वव्याहृतविज्ञानतः परमाणुमारभ्य ब्रह्माण्डं यावद् अखिलमेव वस्तुजातं धर्मस्य नियन्त्र्या शक्त्यैव धार्य्यते। धर्मेणैव परमाणुद्वयसंयोगतः सर्गारम्भस्तद्रक्षा, पिण्डब्रह्माण्डयोर्यथावत् स्थितिः, सर्वेषां प्राणिनां क्रमोन्नतिश्च सम्पादिता भवन्ति। स्मर्यते च—

ब्राह्मणाः! नयते नूनं सर्वलोक-हितावहः।
ब्रह्माण्ड-पिण्डरूपायाः सृष्टेर्यो धारको महान्॥
मानवान् धर्म एवायं कैवल्याभ्युदयप्रदः।
संरुद्ध्याज्ञानभूमिभ्यो ज्ञानभूमिं निरन्तरम्॥

ददत्त्वाभ्युदयं सम्यक् संप्रापय्य शान्तिमां क्रमात् ।
ज्ञानभूमिं ततो दत्ते निःश्रेयसमहो ? परम् ॥
अहमेवास्मि धर्मस्य स्थितिस्थानं द्विजर्षभाः !
धर्माकृतिर्ममैवास्ते शक्तिरेव सनातनी ॥
विराट्सृष्टेः प्रवाहस्य धारणं कुर्वत्यहो ।
परिव्याप्नोति धर्मस्य शक्तिरेषैव धारिका ॥
परमाणुभ्य आ नूनं पूर्णां ब्रह्माण्डविस्तृतिम् ॥
शक्तेः संधारिकाया मे धर्मस्यैव प्रभावतः ।
सूर्येन्द्वादिग्रहाः सर्वे तथा नक्षत्रमण्डलम् ॥
उपग्रहादयोऽप्येवं विराड्देहे ममानिशम् ।
स्व-स्वकक्षामुपाश्रित्य भ्रमन्तेऽत्र समन्ततः ॥
सृष्टे रक्षाश्च कुर्वन्ति साहाय्यं ददतो मिथः ।
दैवासुरेण युद्धेन दैव्याः सृष्टेः पवित्रताम् ॥
सम्पादयन्ती धर्मस्य धारिका शक्तिरुत्तमा ।
प्रतिष्ठापयते देवान् स्वस्वलोकेऽसुराँस्तथा ॥
निश्चितं मातृभावेन विप्राः ! धर्ममयेण मे ।
प्रकृतेः पालिता जीवाः पोषिताश्च निरन्तरम् ॥
उद्भिज्जात्स्वेदजं गत्वा स्वेदजादण्डजं तथा ।
ततो गच्छन्त्यहो विप्राः ! अण्डजाच्च जरायुजम् ॥
जरायुजेषु क्रमशो मर्त्ययोनिं गताः पुनः ।
भवन्ति मोक्षमार्गस्य नूनमेतेऽधिकारिणः ॥
धारिका शक्तिरेवासौ धर्मस्य विप्रपुङ्गवाः ! ।
क्रमादुन्नमयन्ती वै मानवानुत्तरोत्तरम् ॥
कृत्वाधिकारिणो ज्ञानभूमेरन्ते च तानहो ।
कैवल्यपदवीं तेभ्यः प्रददाति शनैः शनैः ॥
सर्वेषां रक्षको धर्मः सर्वजीवहितप्रदः ।
निखिलव्यापकश्चास्ति सर्वेभ्योऽभ्युदयप्रदः ॥ इति ॥ २१ ॥

सम्प्रति मानवधर्मं विभजते—

मानवधर्मश्चतुर्विधो विशेषासाधारणापत्साधारणभेदात् ॥ २२ ॥

विशेषासाधारणापत्साधारणभेदेन मानवधर्मश्चतुर्विधो विज्ञेयः । यस्या-

साधारणया शक्त्योद्भिज्जादेः स्वहजपिण्डसमूहस्य कोटिग्रहोपग्रहपरिपूर्णस्यानन्तब्रह्माण्डसंघस्य च भवति सुरक्षणम्, तस्य विश्वविधारकधर्मस्य विज्ञानवर्णनं पूर्वसूत्रे विधाय साम्प्रतं मनुष्यपिण्डोपयोगिधर्ममनेन सूत्रेण निर्दिशति भगवान् सूत्रकारः ।

तत्सनातनधर्मस्य पादाश्चत्वार आसते ।
साधारणविशेषौ हि तथाऽसाधारणापदौ ॥

इति स्मरणाद् विशेष-धर्मोऽसाधारणधर्म आपद्धर्मः साधारणधर्मश्चेति चतुर्धा विभक्तो मानवधर्म इति ॥ २२ ॥

तत्र विशेषधर्मं निरूपयति—

अधिकारप्राधान्यहेतुको विशेषधर्मः ॥२३॥

अधिकारस्य प्राधान्यं, तत् हेतुर्यस्य स अधिकारप्राधान्यमूलक इति यावत् विशेषधर्मोऽवगन्तव्यः । यो हि अधिकारिविशेषमधिकृत्य निर्णीयतेऽसौ विशेषधर्म इति भावः। आर्यधर्मोऽनार्यधर्मश्च विशेषधर्मौ, वर्णाश्रमधर्मस्य लोकत्रयपवित्रकर आचारसमूहो विशेषधर्मविज्ञानमनुसृत्यैव निर्दिष्टः, पुरुषधर्मो नारीधर्मः प्रवृत्तिधर्मो निवृत्तिधर्मो राजधर्मः प्रजाधर्मश्चेत्यादयो विशेषधर्म एवान्तर्भवन्ति । स्मर्यते चात्र—

ब्रह्मचर्य्यञ्च दाम्पत्यं निवासो निर्जने वने ।
त्यागो ह्यध्यापनञ्चैव याजनञ्च प्रतिग्रहः ॥
धर्मयुद्धं प्रजारक्षा वाणिज्यं सेवनादयः ।
विशेषस्यापि धर्मस्य सन्तीमाः खलु वृत्तयः ॥

तत्तदधिकारिव्यतिरिक्तानामनुष्ठानायोग्यत्वात् सार्वजनिकहिताधायको न भवति विशेषधर्मः। यथा हि कामिनीकाञ्चनात्यन्तराहित्यरूपः संन्यासधर्मो गृहस्थकृतेऽधर्मः, एवं गृहस्थधर्मोऽपि संन्यासिकृते तथैवेति निर्गलितोऽर्थः ॥२३॥

द्वितीयं वर्णयति—

शक्तिप्राधान्यनिमित्तोऽसाधारणधर्मः ॥ २४ ॥

असाधारण-धर्मो हि धार्मिकशक्तिप्राधान्यकारणको भवति। शक्तेः प्राधान्यं निमित्तं यस्य स इत्यर्थः । अत्र तु पूर्वजन्मसंस्कारोऽसाधारणतपोयोगबलादीनि वा निदानम्, अतो व्यक्तिविशेष एवाधिकारी भवत्यसाधारणधर्मस्य,—

"यदा कश्चिद् विशेषस्तु धर्मः शक्तिमवाप्नुयात् ।
अधिकां भावसंशुद्ध्या कोटिं साधारणस्य सः ॥
असाधारणधर्मस्याधिकारं लभते वहन् ।"

इति स्मरणात् । विशेषतो ह्यसाधारणधर्मे दैवशक्तेरावश्यकत्वमभ्युपगन्तव्यम् । यथा च महर्षिविश्वामित्रस्यासाधारणतपःप्रभावेण तस्मिन्नेव जन्मनि क्षत्रियत्वमपहाय ब्राह्मणत्वाधिगमो द्रौपद्याः पञ्चपतित्वेऽपि महामहिममनोबलेन स्वसतीत्वसंरक्षणम् । नन्दो-कुन्ती-गण्डकीप्रभृतयश्चाप्यत्रोदाहृताश्चेति ॥ २४ ॥

तृतीयं निर्णयति—

आपन्मूलक आपद्धर्मः ॥ २५ ॥

आपद्धर्मो हि विपत्तिमूलको भवति । स चापद्येव विधीयते । अत्र भावशुद्धिमुद्दिश्याधर्मकार्यमपि धर्मकार्यवद्विधेयत्वेन प्रतिपादितम् । स्मृतौ यथा—

"आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ।
स नाऽप्नोति फलं तस्य परत्रेति विचारितम् ॥
देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि ।
रक्षेदेव स्वदेहं वै पश्चाद्धर्मं समाचरेत् ॥
येन केन च धर्मेण मृदुना दारुणेन च ।
उद्धरेद्दीनमात्मानं पश्चाद्धर्मं समाचरेत् ॥
आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तयेत् ।
स्वयं समुद्धरेत् पश्चात् स्वस्थो धर्मं समाचरेत् ॥इति ॥ २५ ॥

प्रसङ्गोपात्तां शङ्कां समाधत्ते—

तत्राधर्मोऽपि धर्मो भावशुद्धेः ॥ २६ ॥

आपद्धर्मो हि बाह्यरूपेणाधर्मवत् प्रतीयते । ननु अधर्मप्रतीतिजनकापद्धर्मस्य कथं धर्मसंज्ञकत्वमिति चेन्मैवं, धर्मो हि भावशुद्धिमपेक्षते, तदानीञ्च तस्या जागरूकत्वान्न काऽप्यनुपपत्तिः । तदेव समाहितं महर्षिणा सूत्रकारेण सूत्रमिदमाविर्भाव्य । स्मर्य्यतेऽप्यत्र—

भावतत्त्वस्य विज्ञानं पूर्णरूपेण वेदितुम् ।
अन्तःकरण-विज्ञान-स्वरूपं वच्मि वोऽग्रतः ॥
मनो बुद्धिरहङ्कारश्चित्तमेतच्चतुर्विधम् ।

अन्तःकरणमस्तीति वित्त यूयं पितृव्रजाः!॥
मनसोऽन्तर्विभागोऽस्ति चित्तञ्चाहंकृतिर्धियः।
मायापाशैर्दृढैर्बध्वा योषित् संसारगोचरम्॥
यथा संसारिभिर्जीवैः कार्यं कारयतेऽनिशम्।
तथा चित्तं मनोबुद्धिमहङ्कारो नियम्य च॥
कार्यं कारयते शश्वन्नानावैचित्र्यसंकुलम्।
संस्कारानुचरा जीवा वर्त्तन्ते सर्वथा खलु॥
वासनोत्पन्नसंस्कारा अभिवध्नन्ति प्राणिनः।
आसक्तिरेव साक्षात्स्याद् बन्धस्यास्य तु कारणम्॥
संस्कारो वासनाजन्यः संस्कारात् कर्म जायते।
वासनोत्पद्यते भूयः कर्मणो नाऽत्र संशयः॥
वासनातः पुनर्विज्ञाः! संस्कारो जायते ध्रुवम्।
सदैवं वासनाचक्रं जीवानाञ्च गतागतम्॥
घूर्णायमानमस्तीह चक्रनेमिर्यथा रथे।
पूर्वजन्मार्जिता यादृक् कर्मसंस्कारसंततिः॥
एतज्जन्मकृतानां वा कर्मणां यादृशी स्मृतिः।
अङ्किता जीवचित्ते स्यादासक्तिरपि तादृशी॥
तदासक्त्यनुरूपेषु विषयेषु निरन्तरम्।
प्रसज्जन्तेऽभितो जीवास्तदासक्त्यनुसारतः॥
आसक्तिश्चित्तसाहाय्यान्मनस्युत्पद्यते ध्रुवम्।
दम्पत्योः संगमाल्लोके मनश्चित्तस्वरूपयोः॥
आसक्तेर्जायते जन्म नात्र कार्या विचारणा।
प्रजातन्तुं यथा पुत्रः संतर्दॅल्लभते पितुः॥
सर्वाधिकारमासक्ति बिभ्राणा विषयाँस्तथा।
सृष्टिं बर्द्धयते शश्वदिह दैवीं च मानवीम्॥
बुद्धिसृष्टेस्तु सिद्धान्तमपरं वित्त साम्प्रतम्।
बुद्ध्यहङ्कारसंयोगाद् भावतत्त्वोदयो भवेत॥
भावोऽपि द्विविधो ज्ञेयः शुद्धाशुद्धप्रभेदतः।
भावोऽशुद्धस्तत्र बुद्धिं विधत्ते विषयाकृतिम्॥
शुद्धो भावः क्रमाच्चित्तं कुर्वाणो निर्मलं तथा।
बुद्धिं ब्रह्मपदं नूनं नयञ्छान्तिं प्रयच्छति॥

आसक्तिवशगा जीवा अथवा भाव-नोदिताः ।
एतत्तत्त्वद्वयस्यैव साहाय्यात् कर्म कुर्वते ॥
कायिकं वाचिकं चैव तथा मानसमेव च ।
आसक्तौ किन्तु वैवश्यं भावे स्वातन्त्र्यमस्ति ह ॥
आनन्त्याद्विषयाणां तु बहुशाखासमन्विता ।
आसक्तिर्विद्यते नूनं शुद्धो भावो न तादृशः ॥
अतोऽद्वैतदशां नेतुमीष्टेऽसौ नाऽत्र संशयः ।
यतो ब्रह्मपदं विज्ञाः ! विद्यतेऽद्वैतमेव हि ॥
आसक्त्या कार्यकर्त्तारो जीवाः प्रारब्धयोगतः ।
श्रीगुरोर्दैवतानां वा प्रसादादेव सर्वथा ॥
पाशतुल्याद्धि विषयात् स्वान् निवर्तयितुं क्षमाः ।
अन्यथा विषये तेषां प्रसक्तिस्तत्र निश्चिता ॥
किन्तु शुद्धस्य भावस्य साहाय्यात् कार्यकारिणः ।
भाग्यवन्तो न सज्जन्ते विषयेषु कदाचन ॥
उत्तरोत्तरमेतेषां सर्वथोर्ध्वगतिर्भवेत् ।
संगृहीता हि संस्काराः पूर्वजन्मनि यादृशाः ।
आसक्तिस्तादृशी जीवे प्रादुर्भवति निश्चिता ॥
तस्या एवानुसारेण जीववर्गो जनिष्यते ॥
हेयोपादेयताज्ञानं नास्ति कोऽप्यत्र संशयः ।
असत्यमपि सत्यं स्यात् प्रोक्तं जीवहिताय वै ॥
अधर्मो जायते धर्मः पशुहिंसा यथाऽध्वरे ।
यात्येवं भावसम्बन्धाच्चैतन्यं जडतामिह ॥
सत्यं मिथ्या भवेद्धर्मो जायतेऽधर्मरूपभाक् ।
भावशुद्धिसमायुक्तमसत् कर्माप्यतो ध्रुवम् ॥
आपद्धर्मे भजत्येव सद्धर्मत्वं न संशयः ॥
विधत्तेऽदश्च जीवानां मङ्गलं परमं सदा ।
गतिः सूक्ष्मास्ति धर्मस्य भवन्तोऽतः पितृव्रजाः ।
कुर्य्युश्चेत् कर्म मच्चित्ता भावशुद्धिपुरःसरम् ।
अधिकुर्य्युस्तदावश्यं पूर्णं धर्म्मं सनातनम् ॥
मन्त्राणां प्रणवः सेतुर्यथा मन्त्रच्युतिं किल ।
अपनोद्याशु सम्पूर्णां दत्ते मन्त्राधिकारिताम् ॥

तथैव भावसंशुद्ध्या, शक्ति धर्मस्य धारिका ।
सन्तिष्ठते सदाऽक्षुण्णा नितरामूर्ध्वगामिनी ॥
कदाचिदत एवात्मापद्धर्मस्य निर्णये
अधर्मेणापि धर्मस्य स्वरूपे परिणस्यते ॥ २६ ॥

कदायमाश्रयणीय इत्याह—

**अयमाश्रेयः कालाऽन्यथाभावे ॥ २७ ॥**

नन्वापत्कालेऽधर्मस्य धर्मत्वे निश्चिते ऽपि कथमस्योपयोगावसर इति शङ्कामपनेतुं सूत्रमिदमवतारयति भगवान् सूत्रकारः—

कालस्य अन्यथाभावे वैपरित्ये अयं आपद्धर्मः, आश्रीयते इत्याश्रय-आश्रयणीय इत्यर्थः ।

आपत्काले ह्युपस्थिते सङ्कटापन्नस्य पुंसः सर्वथा विशेषधर्मसाधनासम्भवेऽस्य धर्मस्याश्रयणावसरो ज्ञेयः । केवलमापत्कालाश्रयणीयत्वादेवायमापद्धर्मो निगद्यते नास्त्यवसरोऽस्यानापत्काले । अनुकूले देशकालेऽनुकूलायां वा परिस्थितौ सर्वेषामपि विशिष्टधर्माणां पालनं सुशक्यमेव । विरुद्धे हि देशकाले तत्रापि च विशेषतः कालसङ्कटे ह्युपस्थिते धर्मभीरुरपि साधकः सर्वथा धर्मसङ्कटेपतितोऽसमर्थो धर्ममिममाश्रयतीति प्रागपि विस्तरशो विवेचितमेव । स्मृतिष्वपि बहुश उपलभ्यते, तद्यथा—

तस्मिन् प्रतिभये काले क्षते धर्मे युधिष्ठिर !
बभ्रमुः क्षुधिता मर्त्याः खादमानाः परस्परम् ॥
विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः ।
क्षुधापरिगतो धीमान् समन्तात् पर्यधावत ॥
स कदाचित् परिपतन् श्वपचानां निवेशनम् ।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित् ॥
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः ॥
पपात भूमौ दौर्बल्यात् तस्मिन् चाण्डालपक्कणे ।
स चिन्तयामास मुनिः किन्नु मे सुकृतं भवेत् ॥
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ! ॥
स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः ।
चाण्डालस्य गृहे राजन् ! सद्यः शस्त्रहतस्य वै ॥
स चिन्तयामास तदा स्तैन्यं कार्यमितो मया ।
न हीदानीमुपायो मे विद्यते प्राणधारणे ॥

आपत्सु विहितं स्तैन्यं विशिष्टं च महीयसः ॥
विप्रेण प्राणरक्षार्थं कर्तव्यमिति निश्चयः ।
हीनादादेयमादौ स्यात् समानात्तदनन्तरम् ।
असम्भवे वाऽऽददीत विशिष्टादपि धार्मिकात् ॥
सोऽहमन्त्यावसायिनां हराम्येनां प्रतिग्रहात् ।
न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम् ॥

इत्येवं विचिन्त्य महर्षिविश्वामित्रो रात्रौ तथैव सुष्वाप । अनन्तरञ्च निशीथे निद्रितेषु चाण्डालपरिवारेषु शनैः श्वमांसापहरणकाम्यया पक्कणं प्रविष्टं पुरुषमवलोक्य अवबुद्धश्चाण्डालो जगर्ज । कोऽयमपजिहीर्षया मद्गृहं प्रविष्टो मद्धस्तेन स्वप्राणान् परिहातुं पर्युत्सुक इति । तच्छ्रुत्वा भीतभीतोऽतिह्रीणो मुनिरुवाच । अहं विश्वामित्रो मुनिः क्षुधार्तस्तव गृहं प्रविष्टः । साधुदर्शी त्वं कथम्मां हन्तुमुद्यतः । विश्वामित्रस्य वचो निशम्य त्रस्तोऽवसन्नचेताश्चाण्डालः शय्यां त्यक्त्वा भूमिं परिगतो बद्धाञ्जलि वेपमानः सगद्गदमुवाच । भगवन्नस्मिन् सूचीभेद्ये तमसि निशीथे किमत्रागमनकारणम् ? विश्वामित्र उवाच—

क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ।
क्षुधितः कलुषं जातो नास्ति ह्रीरशनार्थिनः ॥
अटन् भैक्ष्यं न विन्दामि यदा युष्माकमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥
अग्निर्मुखं पुरोधाश्च देवानां शुचिषद्विभुः ।
यथा वै सर्वभुग् ब्रह्मा तथा मां विद्धि धर्मतः ॥

ततश्चाण्डालोऽवदत्—

शृगालादधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशः शरीरस्य श्वजाघनी ॥
नेदं सम्यम् व्यवसितं महर्षे ! धर्मगर्हितम् ।
चाण्डालस्य स्वहरणमभक्ष्यस्य विशेषतः ॥
साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे ।
न मांसलोभात्तपसो नाशस्ते स्यान्महामुने !
जानता विहितं धर्मं न कार्य्यो धर्मसङ्करः ।
मास्म धर्मं परित्याक्षीस्त्वं हि धर्मभृतां वर !
बह्वेवं प्रलपन्तन्तं विश्वामित्रोऽब्रवीन्मुनिः ॥
निराहारस्य सुमहान् मम कालोऽभिधावतः ।

न विद्यतेऽप्युपायश्च कश्चिन्मे प्राणधारणे ॥
येन येन विशेषेण कर्मणा येन केनचित् ।
अभ्युज्जीवेत् साद्यमानः समर्थो धर्ममाचरेत् ॥
ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।
ब्रह्मवह्नि र्मम बलं भक्ष्यामि शमयन् क्षुधाम् ॥
यथा तथैव जीवेद्धि तत्कर्तव्यमहेलया ।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात् ॥
सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥
बलवन्तं करिष्यामि प्रणोत्स्याम्यशुभानि च ।
तपोभि र्विद्यया चैव ज्योतींषीव महत्तमः ॥

ततः पुनः पुल्कसो जगाद—

नैतत् खादन् प्राप्नुते दीर्घमायु-
नैंष प्राणान्नामृतस्येव तृप्तिः ।
भिक्षामन्यां भिक्ष मा ते मनोऽस्तु
श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ॥

पुनरुवाच मुनिः—

न दुर्भिक्षे सुलभं मांसमन्यत् ।
श्वपाक ! मन्ये न च मेऽस्ति वित्तम् ॥
क्षुधार्तश्चाहमगति र्निराशः ।
श्वमांसे चास्मिन् षड्रसान् साधु मन्ये ॥
स्थाने भवेत् स यशः प्रेत्यभावे
निःसंशयः कर्मणां वै विनाशः ।
अहं पुनर्व्रतनित्यः शमात्मा
मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यम् ।
बुद्धात्मके व्यक्तमस्तीति पुण्यम् ॥
मोहात्मके यत्र तथा श्वभक्ष्ये ।
यद्यप्येतत् संशयात्मा चरामि ॥
नाहं भविष्यामि यथा त्वमेव ।

एवमभिधायापहृतश्वमांसो मुनिः स्वकुटजमागत्य कृतनित्यक्रियोऽचिन्तयत्—

अथास्य बुद्धिरभवत् विधिनाहं श्वजाघनीम्

भक्षयामि यथाकामं पूर्वं सन्तर्प्य देवताः ।
ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः ।
ऐन्द्राग्नेयेन विधिना चरुमश्रपयत् स्वयम् ॥
ततः समारभत् कर्म दैवं पित्र्यञ्च भारत !
आहूय देवान् इन्द्रादीन् भागं भागं विधिक्रमात् ।
एतस्मिन्नेव काले तु प्रववर्ष स वासवः ॥
सञ्जीवयन् प्रजाः सर्वा जनयामास चौषधीः ।
विश्वामित्रोऽपि भगवान् तपसा दग्धकिल्विषः ॥
कालेन महता सिद्धिमवाप परमाद्भुताम् ।
स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः ॥
तोषयामास देवांश्च पितॄंश्च द्विजसत्तम ! ॥ इति ॥ २७ ॥

चतुर्थं विविनक्ति—

## सर्वकल्याणसाधकः साधारणधर्मः ॥ २८ ॥

साधारणधर्मः सर्वेषां कल्याणकारको भवति। स हि उक्तलक्षणस्य मनुष्यधर्मस्य चतुर्षु भेदेषु अन्तिमो मानवमात्रहिताधायक इति भावः। स्मृतावस्य लक्षणं यथा—

"धीर्विद्या सत्यमक्रोध औदार्य्यं समदर्शिता ।
परोपकार-निष्कामभावप्रभृतयः शुभाः ॥
साधारणस्य धर्मस्य विद्यन्ते वृत्तयो ध्रुवम् ।"
"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥" इति ।

एष साधारणो धर्मः सर्वैरेवोच्चावचाधिकारनिरतैरार्य्यानार्यस्त्रीपुरुष-गृहस्थसंन्यासिप्रभृतिभि र्निर्विशेषं निर्वाधमेवानुष्ठेय इति ॥ २८ ॥

धर्माङ्गं निरूपयति—

## तदङ्गत्रैविध्यं त्रिभेदवत् ॥ २९ ॥

सृष्टेस्त्रैविध्यमिव धर्मस्यापि त्रयो भेदा अवगन्तव्याः। अनन्तप्रवाहात्मकसर्गसंघातस्य त्रिगुण-त्रिभाव-त्रिदेवादि-त्रिभेदवत् साधारणस्यापि धर्मस्य दानतपोयज्ञात्मकं भेदत्रयमस्ति। तथा हि।

"यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्त्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥"
"अङ्गानां त्रिविधं रूपं युष्माभिरवधार्य्यताम्।
यज्ञो दानं तपश्चेति धर्माङ्गानि प्रधानतः ॥"

इत्यादिस्मरणात्। ननु के ते सर्गस्य त्रयो भेदा इत्युच्यते—अध्यात्ममधिदैवमधिभूतमिति। तत्राद्यस्य ज्ञानरूपस्य महर्षयो, द्वितीयस्य क्रियात्मकस्य देवाः, तृतीयस्य च स्थूलपाञ्चभौतिकस्वरूपस्य पितरश्चालका भवन्ति। इत्थं कार्यब्रह्मरूपिण्याः सृष्टेस्त्रिभेदवत् तन्नियन्तुर्धर्मस्याप्युक्तप्रकारतस्त्रिभेदत्वमिति ॥ २६ ॥

तत्र प्रथमाङ्गं यज्ञमुदाहरति—

**अभ्युदयनिःश्रेयसकरो व्यापारविशेषो यज्ञः ॥ ३० ॥**

अभ्युदयापवर्गप्रदो वेदशास्त्रविहितो व्यापार एव यज्ञपदेनाभिधीयते। स च त्रिष्वपि मानवधर्माङ्गेषु श्रेष्ठतमोऽपेक्षणीयश्च। तस्यैव विभागत्रयानुरूपं भगवतो वेदस्यापि काण्डत्रयात्मकत्वं प्रसिद्धम्। ईदृग् हि यज्ञस्वरूपं विस्तीर्णं यत् क्वापि शास्त्रे धर्माणां समेषामपि यज्ञशब्दाभिधेयत्वम्। तथा हि गीतोपनिषदि—

"द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥"

एवं सत्यपि निखिलधर्माणामेव यज्ञशब्दवाच्यत्वे अत्र महर्षिसूत्रकारः साधारणधर्मस्य त्रिष्वङ्गेषु प्रथमं यज्ञरूपमेवाङ्गमभिप्रैति ॥ ३० ॥

तद्भेदं व्याचष्टे—

**स त्रिविधः काण्डत्रयबोध्यत्वात् ॥ ३१ ॥**

यज्ञोऽसौ काण्डत्रयप्रतिपाद्यत्वात् त्रिविधो भवति। यथा कर्मोपासनाज्ञानरूपास्त्रयो भेदास्तथैव यज्ञस्यापीति बोध्यम्। स्मर्य्यते चात्र—

तेषु यज्ञः प्रधानं स्यात्तस्य भेदास्त्रिधा मताः।
ज्ञानोपासनकर्माणि यदुक्तानि मनीषिभिः ॥
यज्ञधर्मविभेदास्तु मुनीनां बहवो मताः।
कर्मज्ञानोपासनाख्या भेदा मुख्यास्त्रयस्स्मृताः ॥ ३१ ॥

तत्र कस्य प्राधान्यमिति निर्दिशति—

**मानसो गरीयान् संस्कार-प्राधान्यात् ॥ ३२ ॥**

संस्कार-प्रधानतया मानसो यागः सर्वश्रेष्ठो भवति । जगतः सर्गस्थिति-प्रलयकारणं मन एव । "मन एव मनुष्याणां कारणम्बन्धमोक्षयो" रिति स्मरणात् । अन्यच्च "तदैक्षत बहुस्यां प्रजायेयेतिश्रुतेः । "सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्यभिध्यानपूर्विकां सृष्टिं वदतो मनोश्चापि मनस एव सर्गनिदानत्वमभिप्रेतम् । अपरतश्च संस्कारस्यापि सर्वमुख्यत्वाद्बलीयस्त्वाच्च तत्र मनसोऽतिशयसम्बन्धः तदित्थमुभयोः सातिशयसम्बन्धयुक्तत्वात् "उत्तमो मानसो यागो मध्यमो बहिरर्चनमिति" स्मरणाच्च मानसो यागो गरीयान् इति ॥ ३२ ॥

सम्प्रति प्रसङ्गात् संकल्पप्राधान्यं दर्शयति—

अतो धर्म्मे प्राधान्यं संकल्पस्य ॥ ३३ ॥

उक्तकारणात् धर्मे संकल्पस्य प्राधान्यं विज्ञेयम् । पूर्वसूत्रे संस्कारजन्य-मानसयज्ञप्रधानतासिद्धौ धर्मे संकल्पस्यैव प्राधान्यं सिध्यति संस्कारजनक-त्वात् । कर्मोपासनाज्ञानयज्ञेषु दानाद्यनन्तधर्म्माङ्गेषु च कर्तुः यथासंकल्पं तमोरजःसत्त्वात्मकविविधफलोपलब्धिः । निष्कामं कर्म तु चरमपुरुषार्थाय निःश्रेयसायैव परिकल्पते । अत एव वैदिकतान्त्रिकाद्यः सर्वेऽपि यागाः संकल्प-पूर्वकमारभ्यन्त इति ॥ ३३ ॥

प्रसङ्गसङ्गत्या शपथादीन्निर्दिशति—

शपथोपयोगित्वमतः ॥ ३४ ॥

हेतुनाऽनेन शपथस्योपयोगिता प्रतीयते । यज्ञोपवीतधारणानन्तरं ब्रह्मचर्योद्वाहवानप्रस्थेषु कुटीचक-बहूदकादिसंन्यासभेदेषु विविधभेदगुरुदीक्षा-प्रभृतिषु च शपथपूर्वकमेव मानवोऽधिक्रियते । धर्मे तदङ्गेषु संकल्पस्य प्रधान-तया संस्कारोत्पादकशपथस्योपयोगित्वमपि स्वतः सिद्धम् । अनेनैवान्तःकर-णाङ्किताः सूक्ष्मबीजभावमापन्नाः संस्काराः साधकस्य धर्मोन्नतिरूपं फलमुत्पाद-यन्ति इति ॥ ३४ ॥

कर्मयज्ञस्य प्रथमभेदं निरूपयति—

नित्यनैमित्तिककाम्यभेदात् त्रिविधं कर्म ॥ ३५ ॥

नित्यनैमित्तिककाम्यभेदेन त्रिधा भिद्यते कर्म । यस्य च विहितस्य कर्मणोऽनुष्ठानेन न विशेषपुण्योपलब्धिरपित्वननुष्ठानेन पापं भवति तन्नित्यं, यथा सन्ध्योपासनादि । तद्धि नैमित्तिकं विहितस्य यस्याकरणे नास्ति पापं, अनुष्ठानेन विशेषपुण्योपलब्धि र्यथा देवमन्दिरप्रतिष्ठादि । यस्य च विहितस्य साधनेन साधकानां समीहितं सिध्यति तच्च काम्यं, यथा-पुत्रेष्टियज्ञादि । एतेषां हि नित्य-

नैमित्तिककाम्यकर्मणां सविस्तरवर्णनं वेद-स्मृति-पुराण-तन्त्रादिषु सर्वत्रैव दृश्यते। स्मृतौ तद् यथाः—

निरूपितास्त्रयो भेदाः शास्त्रेष्वेतस्य कर्मणः।
नित्यं नैमित्तिकं काम्यमिति वक्ष्यथ लक्षणम्॥
विशिष्टं यदनुष्ठाने पुण्यं नाप्नोति मानवः।
तन्नित्यं प्रत्यवायश्चाकरणे यस्य निश्चितः॥
यथा सन्ध्योपासनादावकृते प्रत्यवायिता।
कृतेऽपि नियमेनैव पुण्यं किञ्चिन्न लभ्यते॥
कृते यस्मिन् फलप्राप्तिरकृते तु न पातकम्।
एतन्नैमित्तिकं प्रोक्तं यथा तीर्थादि-सेवनम्॥
काम्यं तत् कार्यसिध्यर्थं सकामो विदधाति यत्।
यथाऽनपत्यः पुत्रेष्टि यागादीननुतिष्ठति॥ इति॥ ३५॥

विभागं व्याकुरुते—

भावत्रयसम्बन्धाच्च॥ ३६॥

पूर्वोक्तं कर्माऽध्यात्माधिदैवाधिभूतभेदेनाऽपि त्रिविधं भवति। अखिला एव सृष्टिपदार्था उपर्युक्तभावत्रितयसम्बन्धेन त्रिधा विभज्यन्ते। तद्धि मध्यमीमांसाऽपरनामक-दैवीमीमांसायां सविस्तरं वर्णितमास्ते। एवं कर्मयज्ञमपि भावत्रयानुकूलं त्रिधा विभक्तं विदन्ति। तद्यथा आत्म-ज्ञानजनकं पुस्तकप्रणयनादि कर्म अध्यात्मयज्ञं, शास्त्राचार्यानुमोदितमरिष्टादिशान्त्यर्थमनुष्ठानादि दैवशक्ति-प्रकाशकमधिदैवयज्ञम्, भूतान्तर-तृप्तिजन्यापूर्वफलोत्पत्ति-साधकं विहितं ब्राह्मणभोजनादि चाधिभूतयज्ञमाहुरिति—

स्मृत्यन्तरेऽपि—

आध्यात्मिकं तथा चाधिदैविकञ्चाधिभौतिकम्।
कर्मयज्ञं त्रिधा प्राहुर्बुधास्तत्त्वविमर्शिनः॥
क्रियते यत् स्वधर्मस्य स्वदेशस्योपकारकम्।
ज्ञानानुशीलनं यत्र ज्ञेयमाध्यात्मिकं हि तत्।
देवानां कार्यमुद्दिश्य यत्र यागादिकं भवेत्।
तादृशं सकलं कर्म विज्ञेयं ह्याधिदैविकम्।
तच्चाधिभौतिकं कर्म सर्वभूतार्थमेव यत्।
दीयतेऽत्रातिथिभ्योऽन्नं भोज्यन्ते ब्राह्मणादयः॥ ३६॥

इदानीं यज्ञस्याङ्गान्तरं प्रतिपादयति—

**बहुविधे ज्ञानोपासने ॥ ३७ ॥**

उपासनायज्ञज्ञानयज्ञयोर्बहुविधा भेदाः । दर्शनेऽत्र कर्मणो विशेषसम्बन्धात् कर्मयज्ञं, तदङ्गानि चोपवर्ण्य सूत्रेणानेनोपासनाज्ञानभेदानां दिग्मात्रं निर्दिशति । मध्यमीमांसानुसारत उपासनायज्ञस्य सन्त्यनेके भेदाः । तथा हि-क्रियासिद्धांशानुरूपं मन्त्रहठ-लय-राजयोगाख्याश्चत्वारो भेदाः; उपास्यभेदानुसारम् आसुरशक्त्युपासना, ऋषिदेवतापित्रुपासना, लीलाविग्रहोपासना ( अवतारोपासना ), सगुणब्रह्मोपासना, निर्गुणब्रह्मोपासना चेति पञ्चभेदाः; उत्तरमीमांसाऽपरनामकब्रह्ममीमांसानुसारं ज्ञानयज्ञस्य च श्रवण-मनन-निदिध्यासनात्मकं भेदत्रयमवगन्तव्यमिति ॥ ३७ ॥

साधारणधर्मस्याङ्गान्तरं व्याहरति—

**द्वन्द्वराहित्यहेतु र्व्यापारविशेषस्तपः ॥ ३८ ॥**

द्वन्द्वविनाशनिदानं व्यापारविशेषो हि तपःशब्देन व्यवह्रियते । शीतोष्णादि सुखदुःखरूपद्वन्द्वसहिष्णुत्वजन्यविशेषशक्तिप्राप्तिस्तपः । शीतोष्णत्वादिशारीरिक-वाचालत्वतुष्णीम्भावादिवाचनिक सुखदुःखादिमानसिकद्वन्द्ववृत्तीः सहित्वा विशेषसंस्कारशक्ति-समुपार्जनं वा तपः । यथा हि मृगयाशक्तिशून्यः श्वा मृगयुना बद्धस्तच्छक्तिमासादयति । एवमेव निरुद्धतत्तद् द्वन्द्वभोगवेगः साधकः तत्तद्विषयिणीं प्रचुरशक्तिमधिगच्छति, तादृशशक्तिसंग्राहककर्मैव तपः ।

स्मर्य्यते चाऽत्र—

> शरीरचित्तवचसां सौख्यं त्यक्त्वा शनैः शनैः ।
> तेषाञ्चिर्द्वन्द्वधर्मित्वापादनं तप उच्यते ॥
> यथैकत्र दृढैः पाशैः पशो र्बद्धस्य सन्ततम् ।
> प्रवर्द्धन्तेऽधिकं कायवेगविक्रमशक्तयः ॥
> एवं कायमनोऽक्षाणां वर्द्धते नितरां बलम् ।
> तपसि स्थापनादेव सुखभोग विवर्जनात् ॥ इति ॥ ३८ ॥

तद्भेदानाह—

**त्रिविधं तत् ॥ ३९ ॥**

प्राग्धर्माङ्गस्य यज्ञस्याङ्गप्रत्यङ्गानि निरूप्य तपसश्च लक्षणमभिधाय महर्षिर्भरद्वाजोऽधुना जगत्पावनस्य तपोधर्मस्य भेदानाह—

तत् पूर्वोक्तं तपः शारीरिकवाचनिकमानसिकभेदेन त्रिधा भिद्यते ।

कुटिला—( अग्रतो गत्वा ) एहिं एदं मंडव दुआरं ( निरूप्य ) हद्धी हद्धी संजुत्तमिहुणभावो दाणीं इमाणं विजुत्तो, होदु, जं वट्टइ तं पेक्ख ( प्रदेशिन्या निर्दिश्य ) अब्भंदरे पुप्फलदाप्पदाणमज्झ-तप्पे कह्णो पुरो अ तहिं सतिण्ण-णअणा दुट्टा वहू चिट्ठदि ।

[ एहि एतत् मण्डपद्वारं हा धिक् धिक् संयुक्तमिथुनभाव इदानीम् अनयोः वियुक्तः, भवतु यद् वर्तते तत् पश्य । अभ्यन्तरे पुष्पलताप्रतान मध्यतल्पे कृष्णः पुरश्च तस्मिन् सतृष्णनयना दुष्टा वधूस्तिष्ठति ] ।

रायाणः—( श्रीराधां विलोक्य सक्राधावेगम् ) किम् इतो दर्शनेन यावदेतौ निगृह्णामि । ( इत्यभ्यन्तरं प्रवेष्टुं पादमुद्यच्छति )

वृन्दा—( द्वारं बाहुभ्यामवरुध्य ) मा एव्वं भट्टिदारिआ पूएदि, ताए अणुमदिं विणा इध पवेसो ण हुविस्सदि । [ मैवं भर्तृदारिका पूजयति, तस्या अनुमतिं विना इह प्रवेशो न भविष्यति ]

रायाणः—( सक्रोधम् ) आः ! पापे कुट्टिनि ! विदितस्ते भर्तृदारिकायाः पूजाऽव्यपदेशः ।

यस्यान्नेन विवर्द्धितासि, कृपया यस्यासि मान्या जनैः
कन्यायाः प्रथमा कृतासि च सखीगोष्ठीषु येनादरात् ।
तस्य त्वं वृषभानुमानुषपतेस्तामेव कन्यां प्रियाम्
जारस्योत्सृजती कृतघ्नकुसृतिग्रस्तापि नो लज्जसे ॥१९॥

रे परिहरणीयमुखदर्शने ! दूरमपसर ।

वृन्दा—सुसिदि-पराअण एक्कदो अवलाए मे जीवणं अण्णदो तुह इध पवेसो । [ सुस्मृतिपरायण एकतो अबलाया मे जीवनम्, अन्यतः तव इह प्रवेशः ]

रायाणः—( सरोषं भ्रुकुटिमाबध्य ) रे कुट्टिनि ! मुञ्च द्वारम् अन्यथा—

दुष्टा सुन्दवधूरिवासि सुकृतध्वंसाय नक्तंचरी
तस्यास्ते हननं न शिष्टविमतं रामोऽत्र दृष्टक्रमः ॥
चण्डो मद्भुजदण्ड एष निशितं निस्त्रिंशमालम्बते
राधानिग्रहरुद्रयागविततावेधि त्वमाद्यः पशुः ॥२०॥

( इति कोषात् खड्गमुत्कर्षति )

श्रीराधा—( अभ्यन्तरतः संस्कृतमाश्रित्य ) सखि !

दीयताम् स्वामिनः पन्थाः सौभाग्यादयमागतः ।
प्रतिषिद्धप्रवेशोऽन्यः, पूजायां न महागुरुः ॥२१॥

वृन्दा—जं आणवेदि भट्टिदारिआ (इति द्वारं मुञ्चति) [यदाज्ञापयति भर्तृदारिका] ।

रायाणः—( त्वरितमभ्यन्तरं प्रविशति ) ।

कुटिला—ता अहं वि अज्जं अणुसरह्मि ( इत्यग्रे सरति )। [ तदहमपि आर्यमनुसरामि ]।

वृन्दा—मा एव्वं सामिणो गमणे दिण्णा अणुमदी, ण तुह। ( इति निवारयति ) [ मैवं स्वामिनो गमने दत्ता अनुमतिः, न तव ]

कुटिला—अज्ज एसा दुट्टा पवेसं मे णिवारेदि। [ आर्य एषा दुष्टा प्रवेशं मे निवारयति ]

रायाणः ( अशृण्वन् ) धिक् वञ्चनां—रे असितवल्लभे !

न खलु मृदुगिरा ते मार्दवं यामि भूयः,
कपटपटुचरित्रैर्नापि मोहं भजामि।
अयमसिरसितस्ते जारसंहारपूर्वम्
मदनमदनिदानं कर्णनासं लुनाति ॥२२॥

( इत्युद्यतखड्गो धावति )

कुटिला—( सहर्षम् ) भोदु इदो ज्जेव कह्णस्स वहं दुट्टाए वहुए कण्णनासकप्पणं अ पेक्खिस्सं।

[ भवतु इत एव कृष्णस्य वधं दुष्टाया वध्वाः कर्णनासकल्पनं च द्रक्ष्यामि ]

सख्यः—( सभयम् ) हा किं हुविस्सदि [ हा ! किम् भविष्यति ]

वृन्दा—कुसलं ज्जेव सुमरद सव्वविवद्वारणं महुसुअणं [ कुशलमेव स्मरत सर्वविपद्वारणं मधुसूदनम् ]

रायाणः—( सक्रोधमग्रतो गत्वा, विलोक्य ससंभ्रमम् खड्गमुत्सृज्य सविस्मयम् )

नासौ कृष्णः पुष्पवल्लीप्रताने
मेघश्यामा मातुरर्चा चकास्ति।
पूजाव्याजो नैष मे धर्मपत्न्याः,
सत्यं पूजा ! मातराद्ये नमस्ते ॥२३॥ (इति साष्टाङ्गं प्रणमति)

कुटिला—( विलोक्य सविषादविस्मयम् ) अह्मो किंण्णेदं अज्जो पणमदि कह्णं [ अहो किम् एतत्, आर्यः प्रणमति कृष्णम् ]

रायाणः—( उत्थाय ) अहो श्रीमतीयमनन्यचेतसाभीष्टदेवतामर्चयति।

क चेष्टदेवता पूजा क च जारेण सङ्गमः।
क दिनं क तमिस्रा वा दुष्टैरन्धः प्रतार्यते ॥२४॥

अहह ! दुर्जनानां रसना ! अहो ननान्दॄणां प्रजावतीविद्वेषः !! दिष्ट्या तावदकृताबलाप्रहारो निवृत्तोऽस्मि। तत् कृतापराधस्तावदेनां प्रसादयामि। ( उपसृत्य कृताञ्जलिः ) देवि ! एष किल नराधमः—

उन्मत्तवद् यदतिरोषवशाददुष्टां
त्वां दूषयन्ननुचितेन वचोविषेण।
उत्कर्त्तनं श्रुतिनसस्तव कर्तुकामः
पापं चकार तदये दयया क्षमस्व ॥२५॥

श्रीराधा—( स्वयं कृताञ्जलिः। संकेतेन रायाणस्य अञ्जलिबन्धं प्रतिषिध्य देवी-चरणनिहितदृष्टिः )

* सर्गादौ मधुकैटभक्षपणकृद् वर्गाद्यरेफान्तभाक्-
तुर्याव्यञ्जनवर्णविन्दुविलसद्बीजात्मनावस्थिते।
दृप्यद्-दानववर्ग-तानवकराविर्भावसंभाविते
श्यामेऽस्तु त्वयि मे स्थिरा शिवहृदि न्यस्ताऽङ्घ्रिपद्मे रतिः ॥२६॥

श्रीकृष्णः—( स्वगतम् ) अनेन हि पद्येन श्रीमती कामवीजात्मके मयि स्थिरां रतिं प्रार्थयते। रायाणस्तु मां द्विषन् एकाक्षरीमन्त्रात्मिकायामाद्यायां रतिस्थैर्य-प्रार्थनमवगच्छति। तत् पृथग्दर्शिनं खलु इममद्य वोधयामि। ( इति मृदु नृत्यति )

रायाणः—( निरूप्य सविस्मयम् ) अहो नृत्यन्तीव दृश्यते देवी प्रतिमा। किं सत्यमेतत्? अथवा निशीथस्वप्नः, चिन्तासंभवो भ्रमो वा। ( विमृश्य ) न स्वप्नो नापि भ्रमः, अयमहमस्मि, इयं मे जाया, इमानि पूजोपकरणानि, अयं बल्लीप्रतानः। अयं स्फीतश्चालोकः सर्वं यथायथमुद्भासयति। तथापि पश्यामि—

चपलचरणयुग्मं वक्षसि न्यस्य शम्भोः
सुरसरिति समुद्यन्नीलपङ्केरुहश्रि।

---

* अयं श्लोको द्व्यर्थः—तत्र श्रीराधाया अभिप्रेतार्थपक्षे मधुकैटभक्षपणकृत्—इत्येकं सम्बोधनपदम्। वर्गाद्येति—द्वितीयचरणं तृतीयचरणं, श्याम इति पद्म इत्यन्तं पदं च सप्तमीविभक्त्यन्तम्। हे मधुकैटभक्षपणकृत् शिवहृदि शिवचेतसि न्यस्ताङ्घ्रिपद्मे अर्पितचरणकमले, शिवध्येयचरणकमले, इत्यर्थः। श्यामे कृष्णे त्वयि मे मम स्थिरा रतिरस्तु। त्वयि कीदृशे वर्गाद्य··· ··· ···स्थिते = वर्गाद्यः ककारः, रेफान्तः रेफस्य अन्तः, अव्यवहितपरवर्तिवर्णः लकार इत्यर्थः तं भजते, तुर्यः चतुर्थः अव्यञ्जनवर्णः स्वरवर्णः, ईकारः, विन्दुः अनुस्वारः। तथा च ककारः, लकारः, ईकारः, विन्दुश्च तैर्विलसत्, शोभमानं यत् तत्समुदायात्मकं वीजं कामवीजमित्यर्थः। तदात्मनावस्थिते तत्स्वरूपेण स्थिते। दृप्यतो दर्पयुक्तस्य दानववर्गस्य तानवकरो यः आविर्भावः तेन सम्भाविते पूजिते। तानवं तनुता क्षय इति यावत्।

कालीपक्षे तु—मधुकैटभक्षपणकृत् इत्यादि सम्बोधनपदचतुष्टयं विशेषणभूतम्, श्यामे इति—सम्बोधन-पदं विशेष्यवाचकम्, वर्गाद्यः ककारः रेफः, तयोरन्तः अवसानस्थानं भजते यः, तुर्याव्यञ्जनवर्णः, ईकारः, विन्दुश्च ताभ्यां विलसत् यद् वीजं ककार—रेफ—ईकार-विन्दु-समुदायात्मकं यद् बीजं तदात्मना तत्स्वरूपेण अवस्थिते एतेन आद्याया वीजं दर्शितम्, देवीमाहात्म्ये महाकालीमोहितमधुकैटभौ विष्णुना निहताविति-दयोरेव मधुकैटभवधकर्तृत्वं कथ्यते। शिवहृदि—शिवस्य उरसि न्यस्ताङ्घ्रिपद्मे स्थापितचरणकमले हे श्यामे कालि त्वयि मे स्थिरा रतिरस्तु। दृप्यद् इत्यादि विशेषणपदार्थस्तु पक्षद्वये तुल्यः।

तरणिशशिकृशानुज्योतिरक्षित्रयेण
स्थिरतडिदुपमेन भ्राजते कालिकेव ॥२७॥

नहि नहि, कालिकैव—कालिकैव—( क्षणं स्थित्वा ) असंभाव्यमिदम्, तत्—किमुन्मादोऽयं मे । ( इति चिन्तयति )

कालीरूपः श्रीकृष्णः—( सादरम् ) वत्स रायाण कथं दुःखायसे । सत्यमेव ते दर्शनम् ।

* तव वधूरवधूनितकल्मषा
मदनुराग-सुधामयमानसा ।
सुभग, मामवतारयति स्म सा
तदिह कुञ्जवने मदुपस्थितिः ॥२८॥

श्रीराधा—( स्वगतम् ) सावहदा क्खणं उब्बोहिदह्मि इमिणा वअणेण [ शापहृता क्षणं उद्बोधितास्मि अनेन वचनेन ] †

रायाणः—( सनृत्यम् ) मातर्मातः, धन्या मे जाया । यस्यामेवं प्रसन्ना भगवती । तत् सम्पर्कादेव कृतार्थीकृतोऽयं तत्पतित्वाभिमानी पामरजनः । तदेवमभ्यर्थये—

मृदुलममलगन्धं मन्यसे मे मनश्चे-
दिह निवस निकुञ्जप्रीतिमालम्बमानम् ।
पितृवनमिति बुद्ध्या तिष्ठ चेदन्यथा स्या-
न्न पुनरधमदासं मां त्यजेः श्याममूर्त्ते ॥ २९ ॥

इति साष्टाङ्गं प्रणमति ।

श्रीकृष्णः—एवमस्तु—

राधया राधिता मूर्त्तिरियं नवघनोपमा ।
सुस्निग्धां प्रावृषमिव त्वत्स्थितिं नैव मोक्ष्यति ॥३०॥

रायाणः—अनुगृहीतोऽस्मि ।

श्रीराधा—( स्वगतम् ) मं उद्दिशिअ एव्वं भणंतेण अज्ज उत्तेन दढ़ं आसासिदह्मि । [ मामुद्दिश्य एवं भणता आर्यपुत्रेण दृढं आश्वासितास्मि ] ।

---

* अस्य श्रीकृष्णवचनस्यार्थं रायाणो बुबुधे । यथा कालीभक्ति सुधापूर्णहृदया निरस्तपापा रायाणवधूः श्रीमती कैलासभवनाद् भक्तिवलेन कालिकामवातारयत् । तदर्थमेव अवतीर्णाया स्तस्याः कुञ्जवने उपस्थितिर्भवति । प्रकृतार्थस्तु श्रीकृष्णानुरागामृतपूर्णमानसा कल्मषशून्या श्रीराधा मदवतारणे हेतुरभूत् । अत एव इह कुञ्जवने श्रीकृष्णस्य मम उपस्थिति र्जाता । श्रीदामशापेन श्रीराधाया मर्त्यभूमौ- अवतरणे तदर्थमेव गोलोकविहारी श्रीकृष्णोऽहं गोकुलेऽवतीर्णः । ततश्च श्रीराधाप्रेम्णा अस्मिन् कुञ्जवने उपस्थितोऽस्मीति ॥२८॥

† श्रीदामशापकथा प्रथमाङ्कविष्कम्भके कथिता । शापप्रभावाच्च मर्त्यभावमापन्ना श्रीराधिका प्रायेण स्वरूपं व्यस्मरत् । उद्बोधकत्वाद् अन्तरा अन्तरा स्मरणमपि जायते । तदुक्तं उद्बोधितास्मीति ।

रायाणः—( राधां प्रति ) देवि ! दिव्यानुभावे,

मूढं मां पतनान्निवारितवती पत्नी यथार्थाभिधा
प्राप्तोऽहं नवजन्म ते करुणया तेनासि जाया मम ।
काली संलपति त्वयेति पुरतो दृष्टप्रभावा मया
साध्वी सा त्वमपोदिताऽपि कुजनैर्मान्यैव मे सर्वथा ॥३१॥

श्रीराधा—( साञ्जलिबन्धम् ) मादुणो अअं पसादो जं भवं एव्वं मे किद-णुग्गहो होदि । [ मातुरयं प्रसादो* यद् भवान् एवं मे कृतानुग्रहो भवति ]

श्रीकृष्णः—वत्स रायाण ! गच्छ त्वं निर्विकल्पं समाराधय मन्त्रमचिरेण सिद्धिं लप्स्यसे । नितरां गोपनीयश्चायं मदाविर्भाववृत्तान्तः ।

रायाणः—( साञ्जलिबन्धम् )—

मातस्ते कृपयैव दैवतमिव प्राप्तं कलत्रं मया,
यस्मिन् पापविधित्सुनाप्यधिगतं त्वद्दर्शनं दुर्लभम् ।
तेनाऽहं विनिवृत्तसर्वदुरितो ज्ञानप्रदां ते गिरम्,
श्रुत्वा कृत्यविनिर्णयेन सुखितो वन्दे तवाङ्घ्रिद्वयम् ॥३२॥

( इति प्रणम्य बहिर्निःसरति )

कुटिला—अज्ज वहूए पेक्खिअ जारसंगं किदप्पणामसहस्सो तुमं पसण्ण मुहो पडिणिउत्तोति महंतं अच्चरिअं [ आर्य वध्वा दृष्ट्वा जारसङ्गं कृतप्रणाम-सहस्रस्त्वं प्रसन्नमुखः प्रतिनिवृत्त इति, महदाश्चर्यम् ]

रायाणः—( कर्णौ पिधाय ) शान्तं पापम्, एहि कुटिले अनुवर्तस्व माम्, मा परिवादीर्दिव्यप्रभावां ते गुर्वीम् । यावदहं साधयामि ।

कुटिला—( सविषादम् ) हद्धी हद्धी सेरिणीणं वसीअरणमंतो एरिसो ( साशङ्कम् ) उम्मत्तो वा किदो अज्जो सेरिणीए । ( सरोषम् ) पेक्खिस्सं केरिसी सेरिणी, दाणीं अणुस्सरह्मि अज्जं । ( इति निष्क्रान्ता )

[ हा धिक् हा धिक् स्वैरिणीनां वशीकरणमन्त्र ईदृशः, उन्मत्तो वा कृत आर्यः स्वैरिण्या । द्रक्ष्यामि कीदृशी स्वैरिणी, इदानीमनुसरामि आर्यम् ]

श्रीकृष्णः—प्रिये निर्वृतासि ( इति कालीरूपमपहाय स्वरूपेण तिष्ठति )

श्रीराधा—इमस्सिं क्खणे [ अस्मिन् क्षणे ] ।†

सख्यः—अंतिए पेक्खिदा अपूव्वलीला अह्मेहिं सामसुंदरस्स, अच्चरिअं इध ट्ठिदाए वि कुडिलाए पुण ण पेक्खिदा ।

* मातुः = प्रमातुः श्रीकृष्णस्येति श्रीराधाभिमतोऽर्थः । † श्रीकृष्णरूपदर्शनान्तरमित्यर्थः ।

[ अन्तिके ! दृष्टा अपूर्वलीला अस्माभिः श्यामसुन्दरस्य, आश्चर्यम् इह स्थितयापि कुटिलया पुनर्न प्रेक्षिता ] ।

वृन्दा—भट्टिदारिआए असूअंती कधं पेक्खदु दुट्टा। रहस्सं उण एदं ण पआसणिज्जं। जं भोदु अह्मे उच्छवजणणवंचिदाओ किंत्ति चिट्ठह्म, ता उपसप्पह्म जण्णेस्सरम्।

[ भर्तृदारिकायै असूयमाना कथं पश्यतु दुष्टा रहस्यं पुनरेतत् न प्रकाशनीयम्। यद् भवतु वयं उत्सवयज्ञवञ्चिताः किमिति तिष्ठामः, तद् उपसर्पाम यज्ञेश्वरम् ]

( इति सर्वाः श्रीराधाकृष्णान्तिकमुपसर्पन्ति )

सख्यः—उत्तिण्णा अह्मे महाभआदो । [ उत्तीर्णा वयं महाभयात् ] ।

( सखी रंगुलिसंङ्केतं दत्वा )*

वृन्दा—णिउट्टो उप्पाद मेहो हसइ पुण्णचंदो कोमुदीए।

( निवृत्त उत्पातमेघः, हसति पूर्णचन्द्रः कौमुद्या । )

श्रीकृष्णः—सखि वृन्दे ! तिष्ठतु कथान्तरं दिष्ट्या सर्वा एव वः प्रसन्ननयनाः पश्यामि । प्रियायास्तु—

† आनन्दोत्सवनिर्भरप्रणयिनी स्मेरा दृगम्भोजिनी
पक्ष्मस्थानमतर्किताक्रमपटौ स्वापे हठात् चुम्बति ।
संत्रस्ता च विलज्जिता च कुपिता तद्भापनाय ध्रुवं
स्वायामं द्विगुणीकरोति स पुनश्छन्नोऽस्ति रन्ध्रोत्सुकः ॥३३॥

वृन्दा—( स्वगतम् ) चउरस्स एसो उवदेसो पिओ क्खु अह्माणं। ( प्रकाशम् ) णिद्दआ गहीदा भट्टिदारिआ णेह्म वीसामकुंज-मंडवं जुअलं संवेसइदुं । [ चतुरस्य एष उपदेशः प्रियः खलु अस्माकम्, निद्रया गृहीता भर्तृदारिका नयाम विश्रामकुञ्जमण्डपं युगलं संवेशयितुम् ]

---

* इदानीं श्रीकृष्णसमीपे 'उत्तिण्णा' इत्यनेन रहस्यप्रकाश सूचनमत्वा निवारितवती इत्यर्थः ।

† आनन्दोत्सवे पुष्पदोलोत्सवे निर्भरप्रणयिनी अत्याकाङ्क्षावती अत एव स्मेरा विकसिता दृगम्भोजिनी, नेत्रकमलिनी ( कर्त्री ) अतर्किताक्रमपटौ, अतर्कितः यः आक्रमः आक्रमणं तत्र पटुः कुशलः तस्मिन् स्वापे निद्रायां पक्ष्मस्थानं नेत्रपत्रं हठात् सहसा चुम्बति स्पृशति सति संत्रस्ता भयचकिता विलक्षिता—लज्जितभावप्रकाशिका च सती तद्भापनाय तस्य स्वापस्य भापनाय भयप्रदर्शनाय स्वस्य आयामं विस्तारं कुरुते। स स्वापस्तु रन्ध्रोत्सुकः, अनवधानताप्रतीक्षः सन् छन्नः अलक्ष्यस्तिष्ठति । आनन्दोत्सवदर्शनार्थं सतताभिलाषि चक्षुः सहसागतया निद्रया क्षणं निमीलितं सखीजनाद् भिया लज्जया च क्षणात् सकोपमिव निद्रामपसारयितुं यत्नतोविस्तार्यते । तथापि निद्रा पुनराक्रमणाय अन्तःशरीरं तिष्ठतीत्ययं भावः श्लोकेन प्रकाशितः । अथ च स्वापे हठकामुकत्वमारोपितम् । अतर्किताक्रमणेन कामपि नायिकां चुम्बति सति सा भीता हीणा च तं च भीषयितुं स्वशक्तिं प्रकाशयति, तथापि हठकामुकः प्रच्छन्नः तिष्ठतीति ॥३३॥

श्रीराधा—( सलज्जं ससंभ्रमश्च ) हला मा एव्वं मह किदे तुह्माणं उच्छव रसभंगो ण मे रोअदि । [ सखि मैवं मम कृते युष्माकं उत्सवरसभङ्गो न मे रोचते ]

वृन्दा—अअं ज्जेव अह्माणं उच्छओ परमो, ललिदे गेह्न इमाइं पुप्फाइं, इमेहिं मंडअंतिओ जुअलं संवेसेह्म । [ अयमेव अस्माकमुत्सवः परमः, ललिते गृहाण इमानि पुष्पाणि, एभिर्मण्डयन्त्यो युगलं संवेशयामः ]

ललिता—तह [ तथा ] ( इति गृह्णाति )

श्रीकृष्णः—प्रिये अनतिक्रमणीया सखीजनकाम्या। अपि च—यतस्तत्र—

विशदकुसुमराशिन्यासहासप्रकाशः
परिमल-गुण-योगान्नीयमानालिमालः ।
मृदु-सुरभि-समीर-स्निग्ध-सञ्चार-मुग्धो
वरतनु ! तव सङ्गं याचते पुष्पतल्पः ॥३४॥

वृन्दा—एद बहिणीओ तुवरदि पुप्फतप्पो वरदणु मिलिदं एणं कोदुअ घरप्पवेस गीदेण णेह्म [ भगिन्यः त्वरते पुष्पतल्पो वरतनु मिलितम् एनं कौतुकगृहप्रवेश-गीतेन नयामः । ]

सख्यः—एव्वं ( एवं ) ( इति गायन्ति )

एदु एदु रअण जुअल भत्त कामपालअ
दुज्जण किद विग्घ तिमिर हरण किरण जालअ
जअ जअ जअ, विंदा वण धण गुणगणभूसण,
पेम दुद्ध सिंधु मथण जाद अमिअ तोसण ।
हेम मिलिद मरकद रुइ विजइ कांति सुंदर,
तडिदुज्जल जलहरसममेरु जडिदमंदर ।
[ एतु एतु रत्नयुगल भक्त कामपालक,
दुर्जन कृतविघ्नतिमिर हरण किरण जालक ।
जय जय जय वृन्दावन धन गुण-गणभूषण ।
प्रेमदुग्धसिन्धुमथन जातअमृततोषण ।
हेममिलित-मरकत रुचिविजयिकान्ति सुन्दर ।
तडिदुज्ज्वलजलधरसम मेरुजड़ितमन्दर । ]

( वृन्दा पुष्पहस्ता ललिता च समं अन्या सर्वाः सख्यश्च श्रीराधाकृष्णौ मध्ये कृत्वा सनृत्यगीतं निष्क्रान्ताः ) । ( इति निष्क्रान्ताः सर्वे )

समाप्तस्तृतीयोऽङ्कः ।

# चतुर्थाङ्कः ।

( विष्कम्भकः )

ततः प्रविशति आश्रमस्थः सशिष्यो महामुनिर्गर्गः ।

गर्गः—वत्स ! कथितमेव पूर्वम्—

कंसाद्युद्धतराजकासुरपरीवारातिभारातुरा
प्राग् गोरूपधरा धरा सह सुरैः प्राप्ता शरण्यं हरिम् ।
तत्खेदप्रतिकारकारणसमाश्वासानुरूपं चरन्,
सोऽत्र क्रीडति बालवल्लववपुर्गोरक्षणैकव्रतः ॥ १ ॥

बौधायनः—सर्वस्यैव स्मरामि भगवत्पादपद्मोपदेशस्य तस्मात्—

शमयत्यासुरभावं श्रीकृष्णसमर्पितः परो रागः ।
तज्जननी व्रजलीला लीला चान्याऽसुरान् हन्तुम् ॥२॥

इत्यस्यापि स्मरामि ।

गर्गः—साधु वत्स ! साधु, तत् कस्ते प्रश्नः ?

बौधायनः—अद्य तावद् यज्वनामपि परिषदि श्रीराधायाः परिवादविशेषं तदीयननान्दुस्तत्संसर्गप्रायश्चित्तं चावगम्य दूनचेताः साञ्जलिबद्धं पृच्छामि, व्रजलीलया वर्द्धत एव आसुरो भावो लोकस्य । यतः—

दुष्टैरासुरभावेन सतां निन्दा वितन्यते ।
ग्रस्तैरेकान्तमेतेन सत्तमस्य हरेः पुनः ॥३॥

तदेष कथं प्रशममुपैष्यतीति ?

गर्गः—आपातमात्रेण युज्यत एवैष प्रश्नः, न तु विचारोत्तरम् । यतः—

आदरादपि रुषाथ हेलया पातितं कतकचूर्णमम्भसि ।
आविलत्वमपहन्ति सर्वथा तत्समा मनसि कृष्णभावना ॥४॥

बौधायनः—भगवन् ! व्याख्यानमस्य कृपयानुशिष्य कृतार्थीक्रियतामयं दासः ।

गर्गः—वत्स श्रीकृष्णे द्रवीभवच्चेतसो यः प्रयत्नानपनेयः संश्लेषः स एव परो रागः, भक्तिरित्याख्यायते । सच वैरानुबन्धेनापि घटते—

प्रेम्णा भिया द्वेषवशेन किं वा,
कृष्णे समावेशितचित्तवृत्तिः ।
मृतस्तदात्मत्वमुपैति मर्त्यो
न पूर्ववृत्त्यासुरभावमेति ॥५॥

बौधायनः—भगवन् ! तत् किं श्रीकृष्णनिन्दा न पापाय भवति ?

गर्गः—या हि निन्दा द्रवीभवतो निन्दकचेतसः श्रीकृष्णे संश्लेष नापादयति, सा पापायैव, यथा त्वदुक्ताया यज्वपरिषदः। श्रीराधा ननान्दुस्तु साम्प्रतं नैवंविधा। सततं श्रीकृष्णामर्षानुबन्धसन्तप्तं हि तस्याश्चेतो वह्नितप्तायःपिण्डवद् द्रवीभवत् श्रीकृष्णमेव संश्लिष्य सदावतिष्ठते।

बौधायनः—तर्हि यज्वपरिषदः का गतिः ?

गर्गः—वत्स, तदनुग्राहको हि भगवान् श्रीकृष्णः, यज्ञकर्मण्यवश्यापेक्षणीयस्य ज्योतिःशास्त्रस्य सविशेषोपदेशदानेन तामभिमुखीकर्तुं मामेवादिशत्, अभिमुखीभूतां तां भक्तिमार्गमुपग्राहयितुं च, येन सापि चरितार्था भविष्यतीति परमं रहस्यम्।

बौधायनः—भगवन्,

ये ब्राह्मणाः श्रुतिषु दत्तधियोऽपि यत्नान्-
नो कृष्णतत्त्वमधिगन्तुमलं भवन्ति।
निन्दन्ति तं च परमेश्वरभक्तिहीनां-
स्तानन्वशोचमभिमन्त्रणशक्तिसारान् ॥ ६ ॥

अद्य तु परमकारुणिकस्य भगवतः श्रीकृष्णस्य तदुद्धारणप्रसादमुपगच्छतो विनष्टोऽसौ मे शोकः।

गर्गः—वत्स,

एवं जगन्मङ्गलमूलमूर्तिः श्रीकृष्णचन्द्रः करुणामृतांशुः।
स्वस्योदयेनासुरभावनैशध्वान्तं नृणां मोहनमाशु हन्ति ॥७॥

इदानीं प्रत्यासीदति सायंतनी स्नानवेला तदेहि यमुनामभिगच्छामः। यत्र प्रतिपदमेव श्रीकृष्णलीलारसप्रस्पन्दो मूर्तः प्रवर्त्तते। ( इति निष्क्रान्तौ )

( इति विष्कम्भकः )

ततः प्रविशतो गोष्ठानतिदूरवर्तिमाधवीकुञ्जमध्यस्थौ श्रीराधाकृष्णौ पल्लवासने समासीनौ, अदूरभूभौ वृन्दा च।

श्रीकृष्णः—( श्रीराधायाः करं धृत्वा ) प्रिये,

नूनं तुषारकरसारविनिर्मितस्ते कायः कुरङ्गनयने कथमन्यथैवम्।
तत्स्पर्शमात्रमधिगम्य ममाङ्गजातं रोमाञ्चकञ्चुकवृतं समुपैति कम्पम् ॥८॥

श्रीराधा—अहं उण आणंदमअस्स तुह पुरदो ण किंपि पडिवज्जह्मि। [अहं पुनः आनन्दमयस्य तव पुरतो न किमपि प्रतिपद्ये] ( संस्कृतमाश्रित्य )—

असुखसुख-विवेकत्रासलज्जाविहीनम्,
वचनपथमतीतं स्वानुभूतिप्रकाशम्।
निरवधिरसरूपं निर्विकल्पानुकल्पम्,
कमपि विमलभावं यामि नान्यत् स्मरामि ॥९॥

वृन्दा—(स्वगतम्) भट्टिदारिआए किं भणिदु इध आअमणे संकेदो मे दिण्णो, किं अ पत्तुदं अथवा सामदंसणेण भट्टिदारिआए एव्वं ज्जेव होदि, ता समअं पडिपालेह्मि। [भर्तृदारिकया किं भणितुम् इहागमने संकेतो मे दत्तः, किं च प्रस्तुतम्, अथवा श्यामदर्शनेन भर्तृदारिकाया एवमेव भवति। तत् समयं प्रतिपालयामि ]

श्रीकृष्णः—प्रिये, निरवधिरसो हि ते स्वरूपम्। किन्त्वद्य मुखच्छायायां ते मालिन्यमिव लक्ष्यते।

वृन्दा—( स्वगतम् ) सुठ्ठु लक्खिदं सामसुंदरेण। [ सुष्ठु लक्षितं श्यामसुन्दरेण ]।

श्रीकृष्णः—किं कदर्थितासि पुनरपि विपर्यस्तमतिना रायाणेन ?

श्रीराधा—णहि णहि, सो दावो साधणमेत्तरदो देअदं विअ मं पेक्खदि [ नहि नहि, स तावत् साधनमात्ररतो देवतामिव मां पश्यति। ]

श्रीकृष्णः—तत् किं कुटिलया ?

श्रीराधा—( दीर्घं निःश्वस्य तूष्णीं तिष्ठति )।

श्रीकृष्णः—प्रिये,

नो भाषसे कथमधो वदनेन सद्यो
वातावघूर्णकमलभ्रममर्पयन्ती।
दीर्घञ्च निःश्वसिसि मानिनि कम्पमान-
पीनस्तनच्छदनिचोलविलोलनान्तम् ॥१०॥

श्रीराधा—( अश्रु मुञ्चति )

श्रीकृष्णः—प्रिये किमेतत् ?

हृदयनिहिततापेनेव संश्लिष्टमुष्णम्
सृजसि नयनयुग्मादाकुलादश्रुपूरम्।
करकिसलयबद्धप्रेम्णि पाणौ मदीये
हुतवहवदसह्यो यस्य सम्पात एषः ॥११॥

( इति श्रीराधाया नयने परिमार्ष्टि )

श्रीराधा—( सवाष्पगद्गदम् ) हला विंदे भण तुमं जं णिवेअणिज्जं।
[ सखि ! वृन्दे भण त्वं यत् निवेदनीयम् ]

वृन्दा—सुणादु सामसुंदरो तुए अणुग्गहिदो राआणो दाणीं कुडिलाए वअणं ण सुणादि। भट्टिदारिअं देवीं चिंतेदि, भादुणो एव्वं भावं पेक्खिअ अधिअदरं कुविदा कुडिला।

[ शृणोतु श्यामसुन्दरः, त्वया अनुगृहीतो रायाणः, इदानीं कुटिलाया वचनं न शृणोति। भर्तृदारिकां देवीं चिन्तयति। भ्रातुः एवं भावं दृष्ट्वा अधिकतरं कुपिता कुटिला ]

श्रीकृष्णः—अथ कुपितया त्वया किं कृतम् ?

वृन्दा—ताए बह्मणाणं णादिकुडुम्बाणं अ सविहे भट्टिदारिआए जारेण तुए संबंधो उग्घोसिदो।

[ तया ब्राह्मणानां ज्ञातिकुटुम्बानां च सविधे भर्तृदारिकायाः जारेण त्वया संबन्धः उद्घोषितः ]

श्रीकृष्णः—स्थाने खलु प्रियाया दुःखातिरेकः।

श्रीराधा—एदं क्खु मे सुहअरं, सुणादु अज्जउत्तो हला अग्गदो भण।

[ एतत् खलु मे सुखकरं, शृणोतु आर्यपुत्रः, सखि अग्रतो भण ]

वृन्दा—कुडिलाए जडिलाए अ बह्मणपरिसदाणं मदेण पाअच्छित्तं किद भट्टिदारिआससग्गपादअस्स।

[ कुटिलया जटिलया च ब्राह्मणपरिषदां मतेन प्रायश्चित्तं कृतम् भर्तृदारिका-संसर्गपातकस्य ]

श्रीकृष्णः—( सस्मितम् ) अहो मौर्ख्य-विलसितम्। ततस्ततः ?

वृन्दा—तदो जड़िलाकुड़िलाहिं भट्टिदारिआए फंसो आलावो अ परिच्चत्तो।

[ ततः जटिला-कुटिलाभ्यां भर्तृदारिकायाः स्पर्शः आलापश्च परित्यक्तः ]

श्रीकृष्णः—रायाणः किमत्रोदासीनः ?

वृन्दा—ण उदासिणो सोक्खु पसंसदि भट्टिदारिअं, वहिणिए कज्जं णिंदेदि, मादरं पडिवोधेदि ण उण तेण ताणं उवसमो।

[ न उदासीनः, स खलु प्रशंसति भर्तृदारिकां, भगिन्याः कार्यं निन्दति, मातरं प्रतिबोधयति न पुनस्तेन तयोरुपशमः ]

श्रीकृष्णः—यद्येवं समाश्वसिमः, नहि पत्युर्बहुमतायाः श्वश्रूननान्दृकृतः परिवादः सामाजिकानां विश्वास्यो भवति।

वृन्दा—सामसुन्दर भट्टिदारिआए किदे से पदी जारेण तुए उम्मत्तो किदोत्ति जडिलाकुड़िलाणं वहुजणवड्ढिदा घोसणा।

[ श्यामसुन्दर भर्तृदारिकायाः कृते अस्याः पतिः जारेण त्वया उन्मत्तीकृत इति जटिला-कुटिलयोः बहुजनवर्द्धिता घोषणा ]

श्रीराधा—एदं वअणं मे असहणिज्जं। [ एतद् वचनं मे असहनीयम् ] ( संस्कृतमाश्रित्य )—यतः,

> श्रीकृष्णप्रणयः सुधेव नितरां मत्ता तया राधिका,
> तस्मिन् सिन्धुसमे कलङ्कलहरीलोले निमग्नाऽथवा।
> इत्येवं व्रजमण्डले यदि परीवादः सुखायैव मे,
> हन्ताहं परगेहिनीति वचनं दन्दह्यते तु श्रवः॥ १२॥

श्रीकृष्णः—प्रिये पित्रा ते रायाणाय प्रतिपादितासीति कथं परवचनायासूयसे ।

वृन्दा—माआमअ ! पढमं तुए णिहुदं परिणीदा एसा, अजाणंतेण से पिहुणा रायाणस्स दिण्णा, एदं तुमं जाणासि मए वि ण विसुमरिदं ता किं माअं दंसेसि ।

[ मायामय ! प्रथमं त्वया निभृतं परिणीता एषा, अजानता अस्याः पित्रा रायाणाय दत्ता, एतत् त्वं जानासि, मयापि न विस्मृतम्, तत् किं मायां दर्शयसि )

श्रीराधा—( संस्कृतमाश्रित्य ) आर्यपुत्र ! अलं तावदिदं सखीवचनमाकर्ण्य यदि भवानेव सहनीयमिदं मन्यते सोढव्यमेव तन्मया । किन्तु—

त्रिभुवनैकपतिं परमां गतिम्
ननु भवन्तमबोधतमोहताः,
उपपतिं कथयन्ति यदुच्चकै
स्तदिह ते न सहेऽनृतकुत्सनम् ॥१३॥

( इति दीर्घं निःश्वसिति )

वृन्दा—इदो अधिअं जं तं वि भणेमि, जधा परवहूलाहेण तुए णिरवराहो राआणो उम्मत्तीकिदो एव्वं तुए कामुएण परस्स वहोवि अरिहदि होदुं त्ति तुह णिंदणं जहिं तहिं उग्घोसीअदि, सुणीअदि महाराअकंससभाए बि अअं परिवादो गहीदो ।

[ इतोऽधिकं यत् तदपि भणामि, यथा परवधूलोभेन त्वया निरपराधो रायाण उन्मत्तीकृतः, एवं त्वया कामुकेन परस्य वधोऽपि अर्हति भवितुमिति तव निन्दनं यत्र तत्र उद्घोष्यते । श्रूयते महाराजकंससभयापि अयं परिवादो गृहीतः ]

श्रीकृष्णः—( विहस्य )—

कृष्णस्य मे मलिनता वद निन्दया का
स्तुत्या च का विमलता ननु संघटेत ।
गूढस्य गाढतिमिरैर्गिरिकन्दरस्य,
मस्याथ कुन्दकुसुमैश्च समा खलु श्रीः ॥१४॥

श्रीराधा—हला विंदे जइ णाम इमिणा अज्जउत्तस्स ण दुक्खं होदि ता किदं अह्माणं दुक्खेण ।

[ सखि वृन्दे ! यदि नाम अनेन आर्यपुत्रस्य न दुःखं भवति तत् कृतम् अस्माकं दुःखेन ]

वृन्दा—भट्टिदारिए तुह संतणस्स किदे अप्पणो दुक्खं णिगूहिदुं जाणाति रसराओ ।

[ भर्तृदारिके तव सान्त्वनस्य कृते आत्मनो दुःखं निगूहितुं जानाति रसराजः ]

श्रीकृष्णः—

त्वयि यदि मृदुगात्रि क्लेशलेशोऽप्युपेयान्
मम मनसि स एव प्राज्यरूपो विभाति।
उदयति खलु वर्णः कुण्डलिन्यानुबद्धः
प्रतनुरनभिलक्ष्यः स्थूलतां चैति वक्त्रे ॥१५॥

श्रीराधा—अज्ज उत्त, एदं तुह वअणं सुणंती जअणेण वि ण पारेमि तुह णिंदणेण अप्पणो दुक्खं वारेदुं—सुमरणेण वि तस्स सतधारं मे अस्सु पडइ ता एत्थ को पडिआरो ( इत्यश्रूणि मुञ्चति )

[ आर्य्यपुत्र, एतत् तव वचनं शृण्वन्ती यत्नेनापि न पारयामि तव निन्दनेन आत्मनो दुःखं वारयितुम्, स्मरणेनापि तस्य शतधारं मे अश्रु पतति तदत्र कः प्रतिकारः ]

श्रीकृष्णः—प्रिये,

मुक्ताज्योत्स्ने न्यञ्चयन्ती दशनस्मितसम्पदा।
उदञ्चयसि मुक्तास्तु दृग्भ्यामित्येतदद्भुतम् ॥१६॥

( त्वरितमश्रूणि प्रमार्ज्य )—

पुनः पुनस्ते नयनाम्बुवर्ष-संप्लाविता चित्तनदी ममाद्य।
निपातयन्ती दृढधैर्यकूलं प्रसह्य रोषाविलतां दधाति ॥१७॥

श्रीराधा—( सभयम् ) मरिसदु मरिसदु मे अपराहं अज्जउत्तो अवसं मे दुल्ललिदं अस्सु एदं णिवारेदुं ण पारेमि।

[ मृष्यतु मृष्यतु मे अपराधम् आर्यपुत्रः, अवशं मे दुर्ललितं अश्रु, एतन्निवारयितुं न पारयामि ]

श्रीकृष्णः—( श्रीराधायाश्चिबुकं धृत्वा ) अयि अकारणभीते न मे चेतस्त्वयि रोषमावहति, किन्तु यतस्ते दुःखमुत्पन्नं तत्रैव। अतः प्रतिजाने—

कुर्वे तव प्रकटदुःखविलोपलीलां
लीलामयि त्वदनुभावितशक्तिपूर्णः।
यस्ते ननान्दुरहमस्मि सतीति दर्प-
स्तं चूर्णयन्नुपलभे त्वदविघ्नसङ्गम् ॥१८॥

( नेपथ्ये )

धावत गोपाः रक्षत वत्सान् धेनूश्च। यतः—

पश्चादुद्वर्त्तिताङ्घ्रिप्रखरखुरपरिक्षेपसंक्षीयमाण-
क्षोणिक्षोदान्धकारक्षपित-दिनकरद्योतसंच्छादिताशः।

क्रांकाराकारकर्णज्वरकरविसरस्फारनिर्घोषघोरो
भ्राम्यत्संसक्तनेत्रः प्रविशति विषमो रासभो गोप्रचारे ॥१९॥

श्रीकृष्णः—प्रिये, क्षणं सहस्व, एष वयस्यः श्रीदामा, संभ्रमप्रचलितचरणो विपदमासन्नामवबोधयन् गोपान् इत एवाभिवर्तते, यावदेनं सम्भावयामि । ( इति कुञ्जाद् बहिर्निःसरति )

( ततः प्रविशति सम्भ्रान्तः श्रीदामा । )

अहो ! आपतिता प्रत्यग्रविपत्तिः, तत् अनतिक्रमणीयकालोऽस्मि यावद् वयस्यमन्विष्यामि । ( परिक्रम्य विलोक्य ) एष मां आह्वयन्निव तिष्ठति यावदुपसर्पामि ।

श्रीकृष्णः—वयस्य श्रीदामन् ! रासभाक्रमणेन संभ्रान्तः प्रस्थितोऽसि ?

श्रीदामा—वयस्य ! आदिष्टोऽस्मि तत्र भवता नन्दमहाराजेन 'दुर्निमित्तदर्शनाद् भीता वयं वत्सं दिदृक्षामहे' इति ते निवेदयितुम् । इहागच्छंश्च रासभाक्रमणप्रत्यग्रविपत्तिसंभावनाचकितः प्रवर्तयन्नपि गोपान् प्रकामसाकुलोऽस्मि ।

श्रीकृष्णः—( स्वगतम् ) वात्सल्यसिद्धौ हि पितरौ एतयोः साधनानुगुणां सिद्धिमचिरेण दास्यामि । ( प्रकाशम् ) वयस्य त्वमिदानीमेव गत्वा पितृचरणेषु मत्कुशलमावेदय । अहं तु रासभमिमं निरस्यन्ननुपदमागत एव ।

श्रीदामा—अस्त्वेवम् ( इति निष्क्रान्तः )

( पुनर्नेपथ्ये कलकलानन्तरम् )

भो वृन्दावनपालक श्रीकृष्ण !

उत्पुच्छा दीनरावक्षुभितदशदिशो गर्भपातावशीर्णा
दीर्णाः कीर्णोपकीर्णप्रमृदितविलत्तर्णकास्तब्धकर्णाः ।
गावो धावन्ति भीतिस्खलितकुलपथाः कांदिशीकाः समन्ताद्
हन्यन्ते हन्त ! गोपास्तदनुगतहृदस्तूर्णमेह्येहि रक्ष ॥२०॥

श्रीकृष्णः—( अत्युच्चैः ) भो गोपाः ! न भेतव्यं न भेतव्यम्, अयमहमागत एव । ( माधवीकुञ्जस्थां श्रीराधां प्रति ) प्रिये अकृतविसर्जनसमुदाचारेणैव मया गोगोपत्राणाय गम्यते, त्वमपि वृन्दामनुवर्त्तमाना विपरीतमार्गेण सावधाना निवर्तस्व, अचिरेण पुनर्दर्शनं भविष्यति, यत्र वो दुःखमपनेष्यामि । ( इति त्वरितं परिक्रामति ) ।

श्रीराधा—हला विंदे वेपदि मे हिअअं ( इति निरीक्षते ) [ सखि वृन्दे वेपते मे हृदयम् ] ।

वृन्दा—अलं संकाए गोवद्धणधरो हि साम सुंदरो ता एहि गच्छह्म ।
[ अलं शङ्कया, गोवर्द्धनधरो हि श्यामसुन्दरः तदेहि गच्छाव ] ( इति श्रीकृष्णप्रहितदृष्टिं श्रीराधामादाय निष्क्रान्ता ) ।

श्रीकृष्णः—( विलोक्य ) अये अतिभीतिविपर्यस्तेयं गोप्रचारभूमिः, कदन-प्रवृत्तश्चायं कंसप्रहितो धेनुकनामासुरापसदः, यः खलु—

निर्यत्स्फुर्ज्जथुवज्रवीर्यविजितप्राज्यद्विषद्विक्रमः
शक्रो दीप्रसहस्रचक्षुरपि नो यस्यास्ति शङ्कास्पदम् ।
सोऽयं लोहकपाटपाटनपटुप्रोद्यत्खुरास्फालन-
क्षुण्णक्षोणिरभिद्रवन् खरतनुर्धूनाति सर्वा दिशः ॥२१॥

इत्यतो दर्पेणोद्धतः स्वसंकल्पसदृशमाचरति ( परिक्रम्य विहस्य ) यश्चाभि-मन्यते—

दुष्टं कृष्णमपोदिते परवधूविध्वंसनादौ रतं,
द्वेष्यं राजकमौलिलालितपदः कंसस्य हंसद्युतेः ।
अन्विष्यन् नगसङ्घलङ्घनघनोद्घोषाङ्घ्रिसंघट्टन-
त्रुट्यद्घ्राणकपोलदन्तविधुरं हन्तास्मि शान्तौजसम् ॥२२॥

तमेनं—

उद्दामादभ्रदर्पद्रविणमदभरोद्धूतदीनार्तजन्तुं
संक्रुद्धश्राद्धदेवप्रतिभयचरितं मर्दकं मामकानाम् ।
एतद्दोर्दण्डचण्डाक्रमण-विघटित-स्यन्दनाङ्घ्रिप्रलम्बि-
व्यात्तास्योद्वृत्तजिह्वं भ्रमिरयविगलत्प्राणमद्योत्सृजामि ॥२३॥

( इति निष्क्रान्तः )

इति चतुर्थोऽङ्कः ।



## पञ्चमोऽङ्कः ।

विष्कम्भकः ।

( ततः प्रविशति गृहीतगोष्ठवेशः सुबलः )

सुबलः—अहो प्रभाता रजनी—

दिनकरकररक्ता दृश्यते दिङ्मुखश्री
स्वसितनवनीतोन्मन्थना गोपकन्या ।
अनुयमुनमुपेताः स्नातु कामाः पुरन्ध्र्यः
शयनतलनिषण्णो नीरुजो नास्ति कश्चित् ॥१॥

( सचिन्तम् ) तत् कथमधुनापि सख्युर्मे मुरलीरवो न श्रूयते । ( विमृश्य ) मन्ये धेनुकवधश्रमेण गाढसुप्तो नाद्यापि प्राबोधि । तद्यावत् तदाकारणाय नन्दराजभवनं गच्छामि । ( परिक्रम्य विलोक्य ) अयं राजभवनप्रतिहारः । इमाश्च चारणाय मुक्तबन्धना धेनवो निरुद्धमार्गास्तिष्ठन्ति । आगच्छत्येव क्षणेन वयस्य इति मन्ये । तथापि संत्वरयन्नित एवाह्वयामि ।

सखे श्रीकृष्ण अतिवर्त्तते गोचारणयात्रासमयः तूर्णमेहि, पश्य—

न खलु चलति धेनुश्रेणिरप्राप्तवेणु-
स्वरलहरिवितीर्णत्वत्समाह्वानसंज्ञा ।
परिहृतनववत्सा रुद्धरोमन्थबन्धा
श्रवणनयनभङ्ग्या लक्ष्यते त्वत्समुत्का ॥२॥

अये भवनमध्यादागच्छन्ती कुटिला दृश्यते । प्रातरद्यानिष्टदर्शनं जातं न जाने किं भविष्यतीति । ( श्रुतिमभिनीय ) कथयति येयं सखायमाह्वयन्तं मामुद्दिश्य किमपि । भवतु, पृच्छामि ।

( आकाशे ) कुटिले किं तावद् भणसि ( पुनश्च श्रुतिमभिनीय ) किं ब्रवीषि सख्युस्ते वर्तते संयमनीयात्रासमय इति । ( सक्रोधम् ) आः पापे !

पापं शंससि विश्वजीवनधने वृन्दावनैकाश्रये
हन्त ! ह्योऽपि दुरन्तधेनुकखुराद् येन व्रजो रक्षितः ।
केशिक्रुद्धमहेन्द्रकालियवकाहङ्कारसंहारकः
स द्वेष्यस्तव दुर्भगेऽतिसुभगो जीव्यात् सहस्रं समाः ॥३॥

( सोद्वेगं ) कथं कुवदुरुक्तिरेषा प्रस्थिता ( दुर्निमित्तदर्शनमभिनीय ) स्फुरति मे वामनयनम् । किं करोमि, न खलु मे चरणौ अग्रतः प्रसरतः । (विलोक्य) एष वयस्यः सुदामा भवनाभ्यन्तरादितोऽभिवर्त्तते लब्धवार्तश्च प्राप्तकालमाचरिष्यामि ।

( ततः प्रविशति विषण्णः सुदामा । )

सुदामा—( चिन्त्यमानं श्रीकृष्णमुद्दिश्य ) सखे ! श्री कृष्ण,

याभिर्दितुसितमेव ते यदभवद् वाचा निषिद्धोऽपि सन्
तासां वस्तु तदात्मसात् प्रकुरुषे दानानपेक्षः स्वयम्।
अस्माकं दयितः सखा, स्मररुजाच्छेदी प्रियो योषिताम्,
पित्रोः प्राणसमः शिशुश्च स कथं विस्मृत्य हार्दं स्थितः ॥४॥

वयस्य, मथ्यत इव नश्चेतः, यतः—

आहूतोऽपि न यच्छसि प्रतिवचो नोन्मीलयस्यक्षिणी
मक्षीकाकुलसंकुलेऽपि वदने प्रेक्षोदयो नास्ति ते।
वीर्यं भूधरभारधारणपटु स्वाङ्गेजनेऽप्यक्षमं
हा ! धातुः किमिवास्ति नाम हृदये येन त्वमीदृक् कृतः ॥५॥

सुबलः—( साशङ्कम् ) यथेममालोकयामि तन्न कल्याणमाशंसे भवतूपसर्पामि। ( उपसृत्य ) सखे सुदामन् , अपि कुशलमस्माकं प्राणसखस्य ?

सुदामा—( सवैक्लव्यम् ) भ्रातः, कुतः कुशलम्।

आहूतोऽपि न यच्छति प्रतिवचो नोन्मीलयत्यक्षिणी
मक्षीकाकुलसंकुलेऽपि वदने न स्पृश्यते संज्ञया।
नैवासौ क्षमतेऽवसन्नवपुषः स्पन्दाय मन्दाय च
प्राणै र्नो यदि जीवति प्रियसखो भाग्यं तदाशास्महे ॥६॥

( इति रोदिति। )

सुबलः—( सावेगम् ) सखे, सम्यगविदितवृत्तान्तस्य मे दत्तसूचनो भव।

सुदामा—भ्रातः सुबल, अद्यारुणोदये जनन्या प्रसाध्यमानो गोष्ठसज्जया सहसैव मूर्च्छामापन्नो वयस्यो यथा निवेदितावस्थो वर्त्तते। किमन्यद् द्रक्ष्यामि—

ज्ञानं बलं कर्म्म च बालकेऽपि लोकोत्तरं यत्र निसर्गसिद्धम्।
स तैर्विहीनः श्वसितावशेषः प्राणैः किमस्माकमतुल्यदुःखैः ॥७॥

( इति तूष्णीमश्रु मुञ्चति )

सुबलः—वयस्य, कथं रोदिषि ? डाकिनीकृत्यमिदं मन्ये। एतत्प्रतिकर्त्तारः शतं मान्त्रिकाः सन्ति।

सुदामा—तदपसारकमान्त्रिकादिचिकित्सा विफलेति महदाशंकास्थानम्।

सुबलः—( सोद्वेगम् ) तदेवमवस्थमपहाय वयस्यं क्व प्रस्थितोऽसि।

सुदामा—नन्दमहाराजस्यादेशेन महर्षिगर्गमुपस्थातुं प्रस्थितोऽस्मि, दैवं भैषज्यं च तस्यैव भगवतो निदेशेन कर्त्तव्यमिति।

सुबलः—सम्यग् विमृष्टं महाराजेन,

पूर्वापरपरिज्ञानकुशलो भगवानृषिः।
तत्प्रसादेन पोतेन तरामो विपदर्णवम् ॥८॥

तदहं वयस्यावलोकनाय प्रविशाम्यभ्यन्तरम्, त्वमपि यथारब्धमनुतिष्ठ ।
( इति निष्क्रान्तौ । )

( विष्कम्भकः )

( ततः प्रविशति अङ्कस्थमूर्च्छितश्रीकृष्णा रोहिणी सैरिन्ध्र्या परिसान्त्वमाना यशोदा नन्दश्च । )

यशोदा—( सकरुणम् ) जाद, गेह्ण एदं णोणीदं वुभुक्खाए कादरोसि गेह्ण ।
[ तात, गृहाण एतत नवनीतं बुभुक्षया कातरोऽसि गृहाण ]

रोहिणी—( श्रीकृष्णं वीजयन्ती स्वगतम् ) बहुजणसमागमं परिहरिअ णिहूदं आणीदा वि वच्छो तहज्जेव दीसदि । अप्पाणं धारेदुं ण पारेह्मि पुत्तो मे रामो उम्मत्तो विअ कहिं पत्थिदो । ता बहिणीं किं भणामि ता होदु एव्वं । ( प्रकाशम् ) मा दाव करिअदु णिद्दाभंगो वच्छस्स ।

[ बहुजनसमागमं परिहृत्य निभृतमानीतोऽपि वत्सः तथैव दृश्यते । आत्मानं धारयितुं न पारयामि पुत्रो मे राम उन्मत्त इव कुत्र प्रस्थितः । तद् भगिनीं किं भणामि, तद् भवतु एवम् । मा तावत् क्रियतां निद्राभङ्गो वत्सस्य ]

नन्दः—( साशङ्कम् ) उत्तिष्ठ जीवनधन त्यज गाढनिद्रां,
भुक्त्वा नवीननवनीतमुपेहि भूषाम् ।
एते त्वदीयसुहृदस्त्वदपेक्षयैव,
तिष्ठन्ति धेनुचयचारणबद्धभावाः ॥९॥

यशोदा—( सास्रम् ) अज्जे गोबालो णिद्दिदोत्ति, किं मं आस्सासेसि !
[ आर्ये गोपालो निद्रित इति किं माम् आश्वासयसि ]

सैरिन्ध्री—देवि रोओ सव्वस्स होदि, पसमो वि होदि, ता एव्वं मा उत्तम्म ।
[ देवि रोगः सर्वस्य भवति, प्रशमोऽपि भवति, तत् एवं मा उत्ताम्य ]

नन्दः—हा वत्स ! हा गुणनिधे विधुकोटिरम्य वृन्दावनद्रविणसार मदेकसूनो ।
तातेति वाङ्मयसुधां किर वारमेकमापीय कर्णयुगलं मम शीतमस्तु ॥१०॥

यशोदा—जाद, तुह मुहादो माद त्ति वअणं असुणंतीए फुडदि मे हिअअं, ता एक्कवारं कधेहि माद त्ति ।

[ तात, तव मुखात् मातरिति वचनं अशृण्वन्त्या स्फुटति मे हृदयम्, तत् एकवारं कथय मातरिति ]

नन्दः—वत्स, सखिवत्सलोऽसि—
कथमपि यदि पित्रोरावयोस्तेऽभिमानः
स न सहचरवर्गे युज्यते प्राणतुल्ये ।

इह रुवति सुदाम्नि, ज्यायसि भ्रष्टधैर्य्ये,
रुदति च सुबलादौ दृष्टिपातो न तेऽभूत् ?॥११॥

रोहिणी—रामो मे विणा कह्णं ण किंवि जाणादि दावग्गिपरिवुदस्स मिअस्स विअ अज्ज तस्स अवत्था—

[ रामो से विना कृष्णं न किमपि जानाति दावाग्निपरिवृतस्य मृगस्य इव अद्य तस्य अवस्था ]

यशोदा—किदो मए एत्तिओ अणुणओ लोअस्स ण केणवि किंपि कादुं पारिदं। अज्जे पाएसुं दे पड़ेमि सच्चं कधेहि णं जीविस्सदि मे गोवालो ?

[ कृतो मया एतावाननुनयो लोकस्य न केनापि किमपि कर्तुं पारितम्। आर्ये पादयोस्ते पतामि सत्यं कथय ननु जीविष्यति मे गोपालः ]

नन्दः—वत्स, किं न पश्यसि स्वमातुरवस्थाम् ?

हन्त ! त्वदीयजननीयमनभ्रवज्र-
पातावदीर्णतनुचूतलतावभासा।
उन्मादिनीव गलदंशुककेशपाशा,
त्वज्जीवनाय कुरुतेऽञ्जलिमागतेषु ॥१२॥

रोहिणी—देअर तुमं वि जइ एव्वं होसि ता वहिणीं जसोदं कोउण पवोधइस्सदि।

[ देवर त्वमपि यदि एवं भवसि, तत् भगिनीं यशोदां कः पुनः प्रवोधयिष्यति ]

नन्दः—वत्स, आर्य्यया रोहिण्यानुयुक्तोऽपि कथमहं ते मातरं प्रवोधयामि, यतः स्वयमहं विमृशामि—

दिष्ट्या त्वामधिगम्य नन्दनतया नन्दाह्वयं वास्तवं
प्राप्तोऽहं गतचेतने त्वयि पुनस्तच्च प्रतीपार्थकम्।
एवं वृत्तिविरोधविप्लुतसमाख्यानेन लोकोत्तरः
प्राणान् हन्त बिभर्म्मि विस्मृतपदः किं सर्व्वसाधारणान् ॥१३॥

रोहिणी—देअर, अदिभूमिं गदा दे संका, पेसिदो भवदा महेसिणो गग्गस्स उवट्ठाणाय सुदामा। तं पडिपालअन्तो धीरत्तणं ओलम्बहि हिअअं।

[ देवर अतिभूमिं गता ते शङ्का, प्रेषितो भवता महर्षेः गर्गस्य उपस्थानाय, तं परिपालयन् धीरताम् अवलम्बय हृदयम् ]

यशोदा—अज्जे खणं अहं गेह्णामि गोवालं उच्छंगे। [ आर्ये क्षणम् अहं गृह्णामि गोपालम् उत्सङ्गे ]

रोहिणी—वहिणी जधा पुव्वं ते मुच्छा तधा दाणीं ण हुविस्सदित्ति को पच्चओ

[ भगिनि, यथा पूर्वं ते मूर्च्छा तथा इदानीं न भविष्यतीति कः प्रत्ययः ]

यशोदा—( सवाष्पम् ) पासाणी क्खु अहं ता गोवालं एव्वं पेक्खिअ सुन्नुच्छंगावि जीवह्मि । ( श्रीकृष्णाङ्गे हस्तं परामृशति ) [ पाषाणी खल्वहं तत् गोपालं एवं दृष्ट्वा शून्योत्सङ्गापि जीवामि ]

रोहिणी—संतं पापं उच्छंगो दे पुण्णोज्जेव चिरं चिट्ठदु । ( शान्तं पापम्, उत् सङ्गस्ते पूर्ण एव चिरं तिष्ठतु )

नन्दः—( सचिन्तम् ) अहो विलम्बते सुदामा, न च हृदयं मे धृतिमावहति ।

( नेपथ्ये )

आयुर्वेदगभीरतत्त्वविदुषां चूडामणिः सज्जनै-
र्मान्यो मन्त्रविधिप्रयोगनिपुण स्तन्त्रस्वतन्त्रस्थितिः ।
सर्वव्याधिविमोचनो गुणनिधिः कर्त्तौषधानामयं
प्राप्तो गर्गमुनीन्द्रकीर्तितकथो धन्वन्तरिश्रीहरिः ॥१४॥

नन्दः—( श्रुतिमभिनीय ) महर्षिगर्गाचार्य्योपदेशेनैकं वैद्यमुपानयन् सुदामा बहिस्थैरुपनन्दादिभिः परिचाययति ( विलोक्य ) हन्तागच्छति चायम् ।

( ततः प्रविशति त्वरितपदः सुदामा तद्दर्शितमार्गो वैद्यश्च )

सुदामा—त्वरा बाधते किमादर्शयामि ? प्रत्यक्षपथपतितमेतावन्मात्रमालोकयतु वैद्यराजः—

विगलितगिरः क्रीडारागोज्झिताः शुकसारिका
मुनिजन इव ध्यायन्नास्ते कपोतसमुच्चयः ।
परिजनकुलं वाष्पग्लानं किमन्यदिहोच्यते,
शुचमिव दधत्यन्तर्द्वाराजिराणि जडान्यपि ॥१५॥

वैद्य०—( स्वगतम् )

मम लीलास्थलीमेतां सदानन्दसमुज्ज्वलाम् ।
क्षणादेव विपर्य्यस्तां पश्यन्नार्त्त इवास्म्यहम् ॥१६॥

( प्रकाशम् ) अहो मूर्तिमानिव शोकोऽयं शुद्धान्तः )

सुदामा—वैद्यराज, इतो निवर्त्य सजलनयनमागम्यतामितः शतगुणशोकसङ्कुविद्धान् पितृनुपसर्पावः । ते हि भवदागमनं प्रतिपालयन्तः कथमप्यासते ।

वैद्यः—( स्वगतम् ) अद्य तदनुग्रहोऽपि मे कार्यान्तरम् । ( प्रकाशम् ) एवमस्तु ।

( इत्युभावुपसर्पतः )

सुदामा—तात, एष खलु वैद्यराजो मया निवेदितवृत्तान्तेन भगवता गर्गेणोपवर्णितगुणः प्रेषितः, कथितञ्च भगवता भो सुदामन्, मद्वचनादुच्यतां गोपराजः अलमुद्वेगेन दैवादद्य मदाश्रममापन्नो वैद्यराजो वत्सगोपालमगदं करिष्यति । अहमपि यथावसरमागमिष्यामीति ।

नन्दः—( साञ्जलिबद्धम् ) वत्स, कृतार्थोऽस्मि भगवतो मूर्त्तेनैवानुग्रहेणानेन वैद्यराजेन अभयवचसा च ।

सुदामा—तात, भगवता यथोपवर्णितगुणस्तथा निवेद्यते—
आयुर्वेदगभीरतत्त्वविदुषाम् ( इत्यर्द्धोक्ते ) ।

नन्दः—सुदामन्, अलमनेन वचसा । वैद्यराज इदमासनमध्यास्यताम् । भगवता गर्गेण महर्षिणा प्रेरितो भवान्, इत्येव पर्याप्तम् ।

वैद्य०—( उपविश्य ) देव शुश्रूषुरस्मि व्याधिविवरणम् ।

नन्दः—वैद्यराज ! आकस्मिकोऽयमद्यारुणोदयकालोपक्रमोऽस्य मूर्च्छाज्वरः । बहुधा कृते प्रतिकारोपायेऽपि न शाम्यति, इयन्मात्रमस्मदवगतम् ।

यशोदा—( सास्रम् ) डाइणी चिइच्छावि जादा । [ डाकिनीचिकित्सापि जाता ]

वैद्य०—तर्हि गणनापेक्ष्यचिकित्स्योऽयं व्याधिः । तत् पृच्छामि किमस्य बालकस्य नाम ?

नन्दः—वैद्यराज, अतीतवयसोरावयोरेकपुत्र इत्यादरेण बहुभिर्नामभिरयं व्यपदिश्यते । गोपाल इति हरिरिति कृष्ण इति चैवमादिभिः ।

वैद्य०—( सस्मितम् ) यद्येवं हरिरिति मे समानं नामैवाहमस्य व्यवहरामि ।

नन्दः—वैद्यराज, यद्येवं पुत्रसनामतया परमप्रेमस्थानमसि, किं वा कथयामि-
एनं यदि प्रशमितामयमद्य कुर्याः प्रत्यर्पयामि बहुजीवनदाय किं ते ।
स्वीकर्तुमर्हसि तदर्हणरूपमेव सर्वस्वमस्ति मम यन्नवलक्षधेनु ॥१७॥
( इति करौ गृह्णाति )

यशोदा—जाद, जीवावेहि मे गोवालं ( इति पादयोः पतति ) [ तात, जीवय मे गोपालम् ] ।

वैद्य०—( अपसृत्य ) तात अम्ब, मातापितृविहीनस्य मे भवन्तावेव मातापितरौ तत्कथमकल्याणं मे कुरुतः । गणयित्वा परीक्ष्य च गोपालं, सर्वमेव कथयिष्यामि ।

यशोदा—वच्छ पेक्ख, तुमं पेक्खिअ पंदुत्तपओहरह्मि, अहं सच्चं ते मादा मादुणोच्छंगे पदण्णासे बालअस्स ण होदि अकल्लाणं । ता तुमं मे अग्गओ बालओ दुदीओ गोवालो । एणं जीवावेहि सोअरं पेक्ख णं ।
[ वत्स त्वां दृष्ट्वा प्रस्तुतपयोधरास्मि, अहं सत्यं ते माता । मातुरुत्सङ्गे पदन्यासे बालकस्य न भवति अकल्याणम्, त्वं मे अग्रजो बालको द्वितीयो गोपालः । तद् जीवय सोदरं पश्यैनम् ]

वैद्य०—यथाज्ञापयति माता—( गणनमभिनीय गोपालं परीक्ष्य च सचिन्तमिव ) विषमोऽयं आधिदैविको व्याधिः ।

नन्दः—( सास्रम् ) वत्स, तत्किमयमचिकित्स्यः ?

वैद्य०—नहि नहि, ।

यशोदा—( अश्रु परित्यजन्ती ) जाद, चिरं जीअ । [ वत्स, चिरं जीव ]

वैद्य०—अम्ब, समाननामा प्राणभूतो बन्धुरयं गोपाल इत्यहं मन्ये, समाश्व-

सिहि, किन्तु सतीसमाहृतयामुनसलिलस्पर्शमात्रसाध्योऽयं व्याधिरिति किञ्चित् चिन्ताकारणमस्ति ।

यशोदा—वच्छ, अहंज्जेव सअं यमुनाए जलं आणइस्सं ता किं एत्थ चिंताकारणम् ।

[ वत्स, अहमेव स्वयं यमुनाया जलं आनेष्यामि तत् किमत्र चिन्ताकारणम् ]

वैद्य०—अम्ब,

आद्वादशाब्दादुपयाति यावद्
द्वात्रिंशवर्षं वयसा सती या ।
समाहरेद् यामुनवारि सा चेत्
तदेव शक्त्या शमनं रुजोऽस्याः ॥१८॥

( सर्वे चिन्तां नाटयन्ति )

रोहिणी—वट्टदि एव एरिसी सदी इत्थिया कुडिला [ वर्त्तत एव ईदृशी सती स्त्री कुटिला ]

सुदामा—सा हि सख्युर्मे सततमशुभमभिलषति ।

वैद्य०—किं तेन, प्रसिद्धो हि वस्तुतन्त्रः शक्तिभेदः—

अशुभमपि स्पृहयन्त्याः सत्यास्तदम्बु रुजं हरत्येव ।
शार्दूलस्यापि नखः कण्ठधृतः शिशुहितं कुरुते ॥१९॥

अपि च—

शुष्के दारुणि संश्लिष्टः क्षिप्रं वह्निः प्रदीप्यते ।
आहृतेऽप्यातपार्तेन वह्निदीप्तिमनिच्छता ॥२०॥

नन्दः—तदेवं यदि सा मे गोपालं द्विष्यात् यमुनाया जलमेव नाहरिष्यति । अतस्तामनुनयादिना कथमपि संग्रहीतुं स्वयमहं तदालयं गमिष्यामि ।

सुदामा—तिष्ठतु भवान्, अहमेव तदानयनाय पर्याप्तः । आगमने सतीयशोलाभः, अनागमने चासतीति परीवादः, इत्यन्वयव्यतिरेकप्रदर्शनं तत्रोपायः ।

नन्दः—यदि गोपालजीवनमस्पृहयन्ती तत्रोदासीत ?

सुदामा—तदा वक्ष्यामि,

एकां बिभर्ति धरणी तरुणीं सतीं त्वाम्
नान्यामिति प्रलपनं नितरामलीकम् ।
सत्यन्तरं यदि पुनर्नवलक्षधेनो-
राज्ञो घटेत वसुना पशुना समा स्याः ॥ इति ॥२१॥

वैद्य०—( सहास्यम् ) तात, अनेनैव धीमता भविष्यतीष्टसिद्धिः ।

नन्दः—तद् गच्छ वत्स, गोपालजीवनाय । ( वैद्यं प्रति ) वत्स वैद्यराज, परीक्षस्व पुनरपि गोपालम्, न मे चित्तमवतिष्ठते ।

यशोदा—( कृष्णशरीरे हस्तं परामृशन्ती साशङ्कम् ) जाद, अधिअतरं ओसन्नो-विअ दीसदि। [ वत्स, अधिकतरं अवसन्न इव दृश्यते ]

रोहिणी—समो एव्व भाओ कधं अकल्लाणं कप्पेसि,

[ सम एव भावः कथम् अकल्याणं कल्पयसि ]

वैद्य०—( नाडीं परीक्ष्य ) तात, अम्ब, आहूत एव सलिले व्याधिरयं तत्प्रोक्षणेन ज्वलज्ज्वलन इव वारिधारावर्षणेन सद्यः शममुपैष्यति।

नन्दः—अपि तत्रास्ति अन्यदपि किञ्चिदपेक्षणीयम्?

वैद्य०—अस्त्येकः शतच्छिद्रः कुम्भः।

यशोदा—( सोत्कण्ठम् ) किं तेण हुविस्सदि। [ किं तेन भविष्यति ]

वैद्य०—तेनैव जलमाहरणीयम्।

नन्दः—( सवैक्लव्यम ) एवं हि अस्य रोगस्याप्रतिकार्यत्वमेव छलेन प्रकट-यसि। ( इत्युद्भ्रान्तं पश्यति )

यशोदा—जाद किं भणासि जं असंभवं तेण गोवालस्स जीवणं! हा हदह्मि मंदभाइणी। ( इति मूर्च्छति ) [ वत्स किं भणसि यत् असम्भवं तेन गोपालस्य जीवनम्, हा हतास्मि मन्दभागिनी ]

रोहिणी—( साश्रम् ) वहिणी तुमं मुक्का अह्माणं का दसा हुविस्सदि [ भगिनी त्वं मुक्ता अस्माकं पुनः का दशा भविष्यति ]

सैरिन्ध्री—( सजलसेकं तालवृन्तं संचालयन्ती ) देवि! समस्सस [ देवि समाश्वसिहि ]

यशोदा—( समाश्वस्य ) जाद, वेज्जराअ कधेहि अण्णं उपाअं [ वत्स, वैद्यराज कथय अन्यमुपायम् ]

वैद्य०—तात, अम्ब, विश्वस्यताम्—प्रत्यक्षमेवैतद् दर्शयामि यत् सती खलु श्रीमन्तिनी छिद्रकुम्भेन जलमाहर्तुमलं भवतीति।

यशोदा—( सविस्मयविषादम् ) वच्छ सिविणअं विअ किंपि कधेसि। [ वत्स, स्वप्नकमिव किमपि कथयसि ]

वैद्य०—आदिशतु तातः शतच्छिद्रकुम्भं जलपूर्णं कुम्भान्तरं चानेतुम्।

नन्दः—सैरिन्ध्रि, आनीयतां कृतच्छिद्रशतकः कुम्भः, जलपूर्णं च कुम्भान्तरम्।

सैरिन्ध्री—जं आणवेदि देओ। ( इति निष्क्रान्ता ) [ यद् आज्ञापयति देवः ]

नन्दः—वत्स, किमत्र दर्शयिष्यसि?

वैद्य०—अम्बैव मे स्वयं शतच्छिद्रकुम्भमगलितविन्दुकं जलेन पूरयतीति दर्शयामि।

सैरिन्ध्री ( प्रविश्य ) अअं आणीदो किदछिद्दसतओ कुंभो एदं अ जलपुण्णं

कुंभंतरं । (इति स्थापयति) [ अयं आनीतः कृतछिद्रशतकः कुम्भः, इदं च जलपूर्णं कुम्भान्तरम् ] ।

वैद्य०—( विलोक्य ) पूरयत्वेनमम्बा, पश्यन्तु सर्वे सतीकरस्पर्शेनागलितजलोऽयं कुम्भः स्थास्यतीति ।

यशोदा—वच्छ ता पूरेह्मि [ तत् पूरयामि ] (इति कुम्भान्तरस्थजलेन पूरयति) ।

नन्दः—( विलोक्य ) आश्चर्यम्—

रन्ध्रवृन्दवृतमम्बुभाजनं चौद्रचक्रमिव मक्षिकोज्झितम् ।
अस्रवद्जलमिदं विलोक्यते स्वप्रमाणघटवारिपूरितम् ॥२२॥

सर्वाः—अचरिअं अचरिअं [ आश्चर्यम् आश्चर्यम् ]

नन्दः—( सविस्मयम् ) वत्स, कौतुकात् पृच्छामि—

स्निग्धाञ्जनं नयनयोरसि भाजनं ते
श्रोत्रे निषिञ्चति सुधारससारधाराम्,
कर्मातिमानुषमहो यदिदं व्यलोकि
कः संस्तवस्तवनिवासकुलानुबन्धी ॥२३॥

वैद्य०—तात, श्रूयताम्—

वासो ध्यानपुरे गतिर्मम पुनः सर्वत्र वंशो महान् ,
पित्रोः संगतिवर्जितो मुनिगणैः प्रेम्णास्मि संभावितः ॥
वैद्योऽयं शरणप्रपन्नजनतासन्तापसंशान्तये
योग्यं योग्यमथौषधानि विसृजाम्याख्या तु मे कीर्तिता ॥२४॥

( पल्ली शब्दायते )

रोहिणी—( मृत्तिकायामङ्गुलिविघातं कृत्वा ) सच्चं सच्चं [ सत्यं सत्यम ]

यशोदा—( सानन्दम् ) जाद, इमिणा कम्मणा जाणामि सदीए कुडिलाए जइ अणुग्गहो भवे वच्छ गोवालो जीविस्सदित्ति । किंदु चिरं गदो सुदामा ण परिणिउट्टदि । [ वत्स, अनेन कर्मणा जानामि सत्याः कुटिलाया यदि अनुग्रहो भवेत वत्सगोपालो जीविष्यतीति, किन्तु चिरं गतः सुदामा न प्रतिनिवर्तते ]

नन्दः—( सहर्षम् उत्थाय ) अयं सुदामा हन्त ! तमनुसरन्ती वत्सा कुटिला ।

यशोदा—( ससंभ्रमम् उत्थाय ) कहिं कहिं [ कुत्र ? कुत्र ? ]

नन्दः—देवि !

वाष्पप्रवाहपूर्णे ते नेत्रणे दर्शनक्षमे ।
वस्तुनोऽप्रस्थितस्यापि यथा कुज्झटिकोदये ॥२५॥

तदेनामहं प्रत्युद्गच्छामि । ( इत्युत्थाय किञ्चित् पदानि गत्वा ) एहि मातः कुटिले, एहि, देहि नो जीवनम् ।

[ ततः प्रविशति सुदामपुरस्सरा कुटिला ]

कुटिला ( स्वगतम् ) रासहेण हदो कह्लोत्ति णत्तं जणवादं सुणिअ उसासमए इध आगदाए तं वुत्तांतं अलीअं जाणीअ परिणिउट्टंतीए सुणिदं तक्खणं कह्लो मरंतो होदीत्ति । सो एसो मरदु मरदु मरदु । तहावि सदीदप्पं रक्खिदुं आगदह्मि ता एव्वं भणह्मि । ( प्रकाशम् ) देअ सव्वं सुणिदं तुह्माणं गोवालो जह अह्माणं पडिउलो ण भवे तह पडिजाणादु भवं तदो इमस्स जीवणं दइस्सं ।

[ रासभेण हतः कृष्ण इति नक्तं जनवादं श्रुत्वा उषःसमये इह आगतया तं वृत्तान्तम् अलीकं ज्ञात्वा प्रतिनिवर्त्तमानया—श्रुतं तत्क्षणं कृष्णो म्रियमाणो भवतीति । स एष म्रियतां म्रियतां म्रियताम्, तथापि सतीदर्पं रक्षितुमागतास्मि । तदेवं भणामि । देव, सर्वं श्रुतं युष्माकं गोपालो यथा अस्माकं प्रतिकूलो न भवेत् तथा प्रतिजानातु भवान् ततः अस्य जीवनं दास्यामि । ]

नन्दः—अप्रतिज्ञातमपीदं सिद्ध्यत्येव को नामार्य्यो जीवनस्थितिहेतोर्जनस्य प्रातिकूल्यं कुर्वन् कृतघ्नतापातकेनात्मानं अधःपातयेत् । पश्य—

स्थापनकर्तुः श्रेयस्तनुते दलितोऽपि जडोऽपि सद्वंशः ।
अपि कण्टककुलकलितोवृतिबन्धः क्षेत्रिणोऽर्थकरः ॥२६॥

तथापि—वत्सायाः सत्यामिच्छायामवश्यभाव्येऽस्मिन् अनायासेऽर्थे क्रियत एव प्रतिज्ञा । यतः—

अवश्यभाव्याय फलाय संविदयत्नपूर्या विनियोगभाजाम् ।
दीपावलीं ज्वालयतो गृहान्तस्तमोविनाशाय यथा प्रतिज्ञा ॥२७॥

अतः प्रतिजाने—

यदि कल्यो भवेद्बालः कुटिलानीतवारिणा ।
प्रतीपो भविता नास्या जलदस्येव बर्हिणः ॥२८॥

वैद्य०—तात, अस्ति तावदत्राचरणविशेषः । उपशान्ते व्याधौ सत्याः सम्वर्द्धन-महोत्सवः सम्पादनीय इति ।

नन्दः—अयमपि नोऽवश्यकार्यपक्षः ।

कुटिला—( सहर्षम् ) सुदाम ता देहि मे कुंभं, जमुणाए जलं आणेमि । [ सुदामन्, तद् देहि मे कुम्भं, यमुनाया जलमानयामि ] ( सुदामा शून्यमेकं कुम्भमुपाहरति )

वैद्य०—शतच्छिद्रः कुम्भ एवात्रोपयुज्यते, न त्वयमच्छिद्रः ।

कुटिला—( सक्रोधम् ) रे कुवेज्ज, मंपि सव्वसदीसिरोमणिं उवहससि ?
[ रे कुवैद्य मामपि सर्वसतीशिरोमणिमुपहससि ? ]

वैद्य०—( सानुनयमिव ) आर्ये, नाहमुपहसामि वस्तुस्थितिरेषा परमार्थतः सती सीमन्तिनी, अभिमन्त्रितेन शतच्छिद्रकुम्भेन शक्नोति जलमाहर्तुम् ।

कुटिला—( सामर्षम् ) रे कुवेज्ज, ण तुमं विअ अहं धणत्थिणी; सुदामा पाअसुं पडिदो, अणुणेअदि सव्वो जणो, तेणज्जेव आगदं मं तुमं अवअणीज्जं कधेसि । णअ कोवि णिवारेदि । ता इदो गमणं ज्जेव मे जुत्तं ( इति प्रतिष्ठते )

[ रे कुवैद्य, न त्वमिव अहं धनार्थिनी, सुदामा पादयोः पतितः, अनुनयति च सर्वो जनः, तेनैव आगतां मां त्वं अवचनीयं कथयसि । नच कोऽपि निवारयति, तत् इतो गमनमेव मे युक्तम् ]

यशोदा—( त्वरितं तत्करौ धृत्वा साश्रम् ) जादे, कुडिले मा कुप्प, पसीद एस दे अंजली ।

[ जाते कुटिले, मा कुप्य, प्रसीद एष ते अञ्जलिः ]

( कुटिला क्रोधेन वेपते )

नन्दः—वत्से—

नन्दो निन्दति नैव कञ्चन जनं नान्यापदा नन्दति,
स्वार्थं प्रार्थितवान् नरं न कृपणः कृष्णेन रत्नेश्वरः ॥
दीनोऽहं नवलक्षधेनुधनवानप्यद्य तेनोज्झित-
प्रायस्त्वां कुटिले कृताञ्जलिपुटो याचेऽनुकम्पस्व नः ॥२९॥

वैद्य०—आर्ये, न ते किमप्यकथनीयमहमुक्तवानस्मि, अश्रुतकथाशेषा कथमेवं कुप्यसि ? अयमञ्जलिः, संवृणु कोपम् , शृणु मे कथावशेषम् ।

कुटिला—( सक्रोधमेव ) को दे कधावसेसो । [ कस्ते कथावशेषः ? ]

वैद्य०—शतच्छिद्रकुम्भोऽयं मात्रा पूरितो जलसंभृत एवास्ते, पश्यतु आर्या । असत्या यावन्न स्पृश्येत तावदेवमेव स्थास्यति । एतादृशी सतीमन्त्रयोः शक्तिः । अतो नायमुपहासः, न वा भवत्याः कश्चिदाक्षेपः ।

कुटिला—( विलोक्य ) अवि णाम एदं सच्चं । [ अपि नाम एतत् सत्यम् ] ।

यशोदा—वच्छे दाणीं वि पेक्ख, ( इति शतच्छिद्रकुम्भस्थजलं पूर्वकुम्भे निधाय पुनरपि तं पूरयति ) [ वत्से, इदानीमपि प्रेक्षस्व ]

कुटिला—( स्वगतम् ) अअं कुंभो रुद्धछिद्दो किदो, जले वा कोवि गुणो किदो ।

[ अयं कुम्भो रुद्धच्छिद्रः कृतः, जले वा कोऽपि गुणः कृतः ]

सुदामा—आश्चर्य्यम् ।

वैद्य०—किमत्राश्चर्य्यम्, अघटनघटनापटीयसी वहुविधाना हि भगवती शक्तिः ।

